श्रीमन्महर्षिगोतमप्रणीतं

# न्यायदर्शनम्

वात्स्यायनमुनिकृत-भाष्य-

विश्वनाथकृत-वृत्तिसहितम् ।

श्रीमन्महर्षिगोतमप्रणीतं

# न्यायदर्शनम्

( वात्स्यायनभाष्यसहितम् )

विश्वनाथकृत-वृत्तिसहितम्

श्रीमज्जीवानन्द-विद्यासागर-भट्टाचार्यात्मजाभ्यां
पण्डित-श्रीआशुबोध-विद्याभूषण-
पण्डित-श्रीनित्यबोध-विद्यारत्नाभ्यां
सम्पादितम्




चौखम्बा संस्कृत प्रतिष्ठान
३८ यू. ए., जवाहरनगर, बंगलो रोड
दिल्ली ११०००७

प्रकाशक

चौखम्बा संस्कृत प्रतिष्ठान

( प्राच्यभारती के प्रकाशक एवं वितरक )

३८ यू. ए., जवाहरनगर, बंगलो रोड

पो० बा० नं० २११३

दिल्ली ११०००७

दूरभाष : २३६३९१



पुनर्मुद्रित संस्करण १९८६

मूल्य २५.००

अन्य प्राप्तिस्थान

चौखम्बा सुरभारती प्रकाशन

के० ३७/११७, गोपालमन्दिर लेन

पो० बा० नं० ११२९, वाराणसी २२१००१

*

प्रधान-वितरक

चौखम्बा विद्याभवन

चौक ( बनारस स्टेट बैंक भवन के पीछे ),

पो० बा० नं० १०६९, वाराणसी २२१००१

दूरभाष : ६३०७६

मुद्रक

श्रीजी मुद्रणालय

वाराणसी

It is a reproduction of the earlier edition of "Jivanand Vidya Sagar", Calcutta.

# NYĀYADARŚANA

## ( NYĀYA SŪTRAS OF GOTAMA )

Including

**BHĀSYA OF VĀTSYĀYANA**

With

The glossary of Vishwanath

*Editors*

**Pt. Ashubodha Vidyabhushana**

&

**Pt. Nityabodha Vidyaratna**




**CHAUKHAMBA SANSKRIT PRATISHTHAN**

38 U. A., Jawaharnagar, Bungalow Road

DELHI 110007

*(Oriental Publishers & Distributors)*
38 U. A., Jawaharnagar, Bungalow Road
DELHI 110007

*Telephone : 236391*

Reprint Edition
1986

This Publication has been brought out with the financial assistance from Ministry of Education & Culture, Govt. of India).

If any defect is found in this book, please return the copy by V.P.P. for the cost of postage to the publishers for free exchange.

Printed in India

Published by Navanita Dass Gupta for Chaukhamba Sanskrit Pratishthan, 38 U.A., Jawahar Nagar, Bungalow Road, Delhi-110 007 and printed at Shriji Mudranalaya, K-37/117, Gopal Mandir Lane, Varanasi.

# न्यायदर्शनस्य सूचीपत्रम् ।

# न्यायदर्शनम् ।

## अथ प्रथमाध्यायस्य प्रथमाह्निकभाष्यम् ।

*प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत् प्रमाणम् ।* प्रमाणमन्तरेण नार्थप्रतिपत्तिः । नार्थप्रतिपत्तिमन्तरेण प्रवृत्तिसामर्थ्यम् । प्रमाणेन खल्वयं ज्ञाताऽर्थमुपलभ्य तमर्थमभीप्सति जिहासति वा । तस्येप्साजिहासाप्रयुक्तस्य समीहा प्रवृत्तिरित्युच्यते, सामर्थ्यं पुनरस्याः फलेनाभिसम्बन्धः । समीहमानस्तमर्थमभीप्सन् जिहासन् वा तमर्थमाप्नोति जहाति वा । अर्थस्तु सुखं, सुखहेतुः, दुःखं, दुःखहेतुश्च । सोऽयं प्रमाणार्थोऽपरिसङ्ख्येयः प्राणभृद्भेदस्यापरिसङ्ख्येयत्वात् । अर्थवति च प्रमाणे प्रमाता प्रमेयं प्रमितिरित्यर्थवन्ति भवन्ति । कस्मात् ? —अन्यतमापायेऽर्थस्यानुपपत्तेः । तत्र यस्येप्साजिहासाप्रयुक्तस्य प्रवृत्तिः, स प्रमाता । स येनार्थं प्रमिणोति, तत् प्रमाणम् ।

---

वपुर्लीलालक्ष्मीजितमदनकोटिर्व्रजवधू-
जनानामानन्दं कमपि कमनीयं विरचयन् ।
स कोऽपि प्रेमाणं प्रथयतु मनोमन्दिरचरः
त्रिलोकीलोकानां सजलजलदश्यामलतनुः ॥ १ ॥

संयुक्तां युक्तरूपामभिनवविहिताखण्डकाऽऽरक्तभासा
सन्ध्यापीयूषभासीरतिरुचिरतरां चूर्णयन्तीमभिख्याम् ।
मानव्यामोहनव्यधिपुरहरशिरोरत्नभूषाविशेषं
भूयो भव्यं विधातु चरणनखरुचं भावयामी भवान्याः ॥ २ ॥

योऽर्थः प्रतीयते, तत् प्रमेयम्। यदर्थविज्ञानं, सा प्रमितिः। चतसृषु चैवंविधास्वर्थतत्त्वं परिसमाप्यते। किं पुनस्तत्त्वम्? सतश्च सद्भावोऽसतश्चासद्भावः। सत्सदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवति, असच्चासदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवति। कथमुत्तरस्य प्रमाणेनोपलब्धिरिति। *सत्यप्युपलभ्यमाने तदनुपलब्धेः प्रदीपवत्,* यथा दर्शकेन दीपेन दृश्ये गृह्यमाणे तदिव यन्न गृह्यते, तन्नास्ति। यद्यभविष्यदिदमिव व्यज्ञास्यत, विज्ञानाभावान्नास्तीति। एवं प्रमाणेन सति गृह्यमाणे तदिव यन्न गृह्यते, तन्नास्ति। यद्यभविष्यत् इदमिव व्यज्ञास्यत, विज्ञानाभावान्नास्तीति। तदेवं सतः प्रकाशकं प्रमाणमसदपि प्रकाशयतीति। सच्च खलु षोड़शधा व्यूढ़मुपदेक्ष्यते। तासां खल्वासां सद्विधानाम्—

**प्रमाण-प्रमेय-संशय-प्रयोजन-दृष्टान्त-सिद्धान्तावयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभास-**

---

यदीयतर्ककिरणैरान्तरध्वान्तसन्ततिम्।
सन्तस्तरन्ति भास्वन्तमक्षपादं नमामि तम्॥ ३॥

अद्वैतं गुरुधर्म्मयोरिव लसत्क्षामण्डलीमण्डनं
रूपं किञ्चन पौरुषं गिर इव प्रागल्भ्यसम्पादकम्।
दाने कर्णमिवावतीर्णमपरं दीने दयादक्षिणं
तातं विश्वविसारिचारुयशसं विद्यानिवासं नुमः॥ ४॥

अलसमतिरपीदं विस्तृतं न्यायशास्त्रं
विरहितबहुयत्नो लीलया वेत्तु विज्ञः।
इति विनिहितचेताः कौशलं कर्त्तुकामो
गुरुचरणरजोऽहं कर्णधारीकरोमि॥ ५॥

विद्यानिवाससूनोः कृतिरेषा विश्वनाथस्य
विदुषामतिसूक्ष्मधियाममत्सराणां मुदे भविता॥ ६॥

**च्छल-जाति-निग्रहस्थानानां तत्त्वज्ञानान्निःश्रेय-साधिगमः ॥ १ ॥**

—निर्द्देशे यथावचनं विग्रहः । चार्थे द्वन्द्वः समासः । प्रमाणादीनां तत्त्वमिति शैषिकी षष्ठी । तत्त्वस्य ज्ञानं निःश्रेयसस्याधिगम इति कर्म्मणि षष्ठ्यौ । गमकतया समासः । एतावन्तो विद्यमानार्थाः । एषामविपरीतज्ञानार्थमिहोपदेशः । सोऽयमनवयवेन तन्त्रार्थ उद्दिष्टो वेदितव्यः । आत्मादेः खलु प्रमेयस्य तत्त्वज्ञानान्निःश्रेयसाधिगमः । तच्चैतदुत्तरसूत्रेणानूद्यत इति । हेयं, तस्य निर्वर्त्तकं, हानमात्यन्तिकं, तस्योपायोऽधिगन्तव्यः, इत्येतानि चत्वार्य्यर्थपदानि सम्यग्बुद्ध्वा निःश्रेयसमधिगच्छति । तत्र संशयादीनां पृथग्वचनमनर्थकम्; संशयादयो यथासम्भवं प्रमाणेषु प्रमेयेषु चान्तर्भवन्तो न व्यतिरिच्यन्त इति । सत्यमेतत्, इमास्तु चतस्रो विद्याः पृथक्प्रस्थानाः प्राणभृतामनुग्रहायोपदिश्यन्ते, यासां चतुर्थीयमान्वीक्षिकी न्यायविद्या ।

---

प्रयोजनमनभिसन्धाय प्रेक्षावन्तो न प्रवर्त्तन्ते, अतः प्रथमं प्रयोजनमभिधानीयम्; तथा चाहुः,—

"सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्त्तते ।
शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः ॥"

सिद्धो ज्ञातोऽर्थः प्रयोजनं यस्य तत्तथा, एवं सिद्धसम्बन्धमित्यपि, अतस्तत्प्रतिपादनाय भगवानक्षपादः प्रथमं सूचयति । अत्र तत्त्वज्ञाननिःश्रेयसयोः शास्त्रतत्त्वज्ञानयोश्च हेतुहेतुमद्भावः, प्रमाणादितत्त्वज्ञानयोर्विषयविषयिभावः, प्रमाणादिशास्त्रयोः प्रतिपाद्यप्रतिपादकभावः, शास्त्रनिःश्रेयसयोश्च प्रयोज्यप्रयोजकभावः सम्बन्धः । तत्त्वं ज्ञायतेऽनेनेति व्युत्पत्त्या तत्त्वज्ञानं शास्त्रम्; तथा च 'शास्त्रनिःश्रेयसयोरपि तत्त्वज्ञानद्वारकहेतुहेतुमद्भाव एव सम्बन्धः' इति केचित् सम्प्रदायविदः । अत्र च सर्व्वपदार्थप्रधानो द्वन्द्वः समासः, यद्यपि भेदे द्वन्द्वविधानादत्र च बहूनां पदार्थानामभेदान्न द्वन्द्वसम्भवः, तथाऽपि पदार्थताऽवच्छेदकभेदादेव द्वन्द्व इति न दोष इत्यन्यत्र विस्तरः ।

तस्याः पृथक्प्रस्थानाः संशयादयः पदार्थाः। तेषां पृथग्वचनमन्तरेणाध्यात्मविद्यामात्रमियं स्यात्, यथोपनिषदः। तस्मात् संशयादिभिः पदार्थैः पृथक् प्रस्थाप्यते। तत्र नानुपलब्धे न निर्णीतेऽर्थे न्यायः प्रवर्त्तते, किन्तर्हि ? संशयितेऽर्थे। यथोक्तं,— "विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः" इति। विमर्शः संशयः। पक्षप्रतिपक्षौ न्यायप्रवृत्तिः। अर्थावधारणं निर्णयः तत्त्वज्ञानमिति। स चायं किंस्विदिति वस्तुविमर्शमात्रमनवधारणं ज्ञानं संशयः प्रमेयेऽन्तर्भवन्नेवमर्थं पृथगुच्यते। अथ प्रयोजनम्।—येन प्रयुक्तः प्रवर्त्तते, तत् प्रयोजनम्। यमर्थमभीप्सन् जिहासन् वा कर्म्माऽऽरभते,तेनानेन सर्व्वे प्राणिनः सर्व्वाणि कर्म्माणि सर्व्वाश्च विद्या व्याप्ताः,तदाश्रयश्च न्यायः प्रवर्त्तते। कः पुनरयं न्यायः ?—प्रमाणैरर्थपरीक्षणं न्यायः। प्रत्यक्षाऽऽगमाश्रितमनुमानं, साऽन्वीक्षा, प्रत्यक्षाऽऽगमाभ्यामीक्षितस्यान्वीक्षणमन्वीक्षा, तया प्रवर्त्तत इत्यान्वीक्षिकी न्यायविद्या न्यायशास्त्रम्।

---

तत्र च "निर्द्देशे यथा वचनं तथा विग्रहः" इति यथाश्रुतभाष्यानुसारिणः प्रमाणानि च प्रमेयञ्च संशयश्च प्रयोजनञ्च दृष्टान्तश्च सिद्धान्तश्च अवयवाश्च तर्कश्च निर्णयश्च वादश्च जल्पश्च वितण्डा च हेत्वाभासाश्च छलञ्च जातयश्च निग्रहस्थानानि चेति विग्रहं वर्णयन्ति। सम्प्रदायविदस्तु भाष्यस्थवचनपदेन क्वचित्स्त्रीवं क्वचिदार्थं वचनं गृह्यते, तत्र प्रमाणे प्रमेये च स्रौतं वचनं गृह्यते सप्रयोजनत्वात्, तच्च वक्ष्यते। न तु दृष्टान्तादावेकवचनं सप्रयोजनम्। तथा च दृष्टान्ते द्विवचनम्, अन्वयव्यतिरेकिभेदेन दृष्टान्तद्वैविध्यस्य वक्ष्यमाणत्वात्। संशये सिद्धान्ते छले च बहुवचनम्; संशये छले च त्रैविध्यस्य, सिद्धान्ते चातुर्विध्यस्य वक्ष्यमाणत्वात्, अन्यथा जातिनिग्रहस्थानयोर्बहुवचनं तत्रापि व्याहन्येत, एकवचनस्यैव लक्षणसूत्रे सत्त्वादिति वदन्ति। नव्यास्तु सर्व्वत्र प्रथमोपस्थितैकवचनेनैव विग्रहः, न ह्यत्र बहुवचनेनैव प्रमाणादीनां बहुत्वं परिच्छिद्यते, तथा सति किंनामाग्रिमविभागेन ? न ह्येकद्विबधवखदिरादौ धवश्च खदिरश्च पलाशश्चेति न विरुध्यते, अत एव. प्रयोजनस्यैकवचनान्तत्वेऽपि तद्विभागाकरणेऽपि सुखदुःखाभावतत्साधनभेदेन तस्य बहुत्वं न विरुध्यत इति प्राहुः। अत्र

यत्पुनरनुमानं प्रत्यक्षागमविरुद्धं, न्यायाभासः स इति । तत्र वादजल्पौ सप्रयोजनौ । वितण्डा तु परीक्ष्यते । वितण्डया प्रवर्त्तमानो वैतण्डिकः । स प्रयोजनमनुयुक्तो यदि प्रतिपद्यते, सोऽस्य पक्षः, सोऽस्य सिद्धान्तः, इति वैतण्डिकत्वं जहाति । अथ न प्रतिपद्यते, नायं लौकिको न परीक्षक इत्यापद्यते । अथापि परपक्षप्रतिषेधज्ञापनं प्रयोजनं ब्रवीति, एतदपि तादृगेव, यो ज्ञापयति यो जानाति यच्च ज्ञाप्यते यच्च प्रतिपद्यते यदि, तदा वैतण्डिकत्वं जहाति । अथ न प्रतिपद्यते परपक्षप्रतिषेधज्ञापनं प्रयोजनमित्येतदस्य वाक्यमनर्थकं भवति । "वाक्यसमूहश्च स्थापनाहीनो वितण्डा" । तस्य यद्यभिधेयं प्रतिपद्यते, सोऽस्य पक्षः स्थापनीयो भवति । अथ न प्रतिपद्यते, प्रलापमात्रमनर्थकं भवति, वितण्डात्वं निवर्त्तत इति । अथ दृष्टान्तः प्रत्यक्षविषयोऽर्थः, यत्र लौकिकपरीक्षकाणां दर्शनं न व्याहन्यते । स च प्रमेयं, तस्य पृथग्वचनञ्च, तदाश्रयावनुमानाऽऽगमौ । तस्मिन् सति स्यातामनुमानागमावसति च न स्याताम् । तदाश्रया च न्यायप्रवृत्तिः । दृष्टान्तविरोधेन

---

श्च निःश्रेयसे सिद्धे पटादिवत् तत्प्राप्तये न प्रयत्नान्तरमपेक्षितमिति प्रतिपादनायाधिगमपदम् । ननु प्रमाणादयः पदार्था इति शब्दात् प्रथमसूत्रादेव वा तत्त्वज्ञानं स्यात् ? इति चेन्न, तेषां विशिष्य ज्ञानं हि तत्त्वज्ञानम् ; तच्चोद्देशलक्षणपरीक्षाप्रकाशकाच्छास्त्रादेव, शास्त्रं हि विशिष्टाऽऽनुपूर्व्विका पञ्चाध्यायी, अध्यायस्त्वाह्निकसमूहः, आह्निकन्तु तादृशप्रकरणसमूहः, प्रकरणन्तु तादृशसूत्रसमूहः, सूत्रन्तु तादृशवाक्यसमूहः, वाक्यन्तु तादृशपदसमूह इति वदन्ति । अत्र समूहशब्देनानेकत्वं विवक्षितम् ; तेनाध्यायादेराह्निकादिद्वयात्मकत्वेऽपि न क्षतिः । अत्र च यद्यपि मोक्षजनकज्ञानविषयत्वेन प्रमेयमेवादौ निरूपयितुमर्हं, तथाऽपि प्रमाणस्य सकलपदार्थव्यवस्थापकत्वेन प्राधान्यात् प्रथममुद्देशः । ततोऽवसरतो बुभुत्सितप्रमेयस्य, ततश्च पदार्थव्यवस्थापनस्य न्यायाधीनतया न्याये निरूपणीयेऽभ्यर्हितयोर्न्यायपूर्वाङ्गयोः संशयप्रयोजनयोः, तत्राप्यभ्यर्हिततया संशयस्य प्रथमम् । न च निर्णीतेऽपि मननविधानाच्च संशयस्य

च परपक्षप्रतिषेधो वचनीयो भवति। दृष्टान्तसमाधिना च स्वपक्षः साधनीयो भवति। नास्तिकश्च दृष्टान्तमभ्युपगच्छ-न्नास्तिकत्वं जहाति। अनभ्युपगच्छन् किंसाधनः परमुपालभे-तेति निरुक्तेन दृष्टान्तेन शक्यमभिधातुम्। "साध्यसाधर्म्यात् तद्धर्म्मभावी दृष्टान्त उदाहरणं," "तद्विपरीताद्विपरीतम्" इति। अस्त्ययमित्यनुज्ञायमानोऽर्थः सिद्धान्तः। स च प्रमेयं, तस्य पृथग्वचनं, सत्सु सिद्धान्तभेदेषु वादजल्पवितण्डाः प्रवर्त्तन्ते नातोऽन्यथेति। साधनीयार्थस्य यावति शब्दसमूहे सिद्धिः परिसमाप्यते, तस्य पञ्चावयवाः प्रतिज्ञादयः। समूहमपेक्ष्या-वयवा उच्यन्ते। तेषु प्रमाणसमवाय आगमः प्रतिज्ञा, हेतुरनु-मानम्, उदाहरणं प्रत्यक्षम्, उपनयनमुपमानं, सर्व्वेषामेकार्थ-समवाये सामर्थ्यप्रदर्शनं निगमनमिति। सोऽयं परमो न्याय इति। एतेन वादजल्पवितण्डाः प्रवर्त्तन्ते, नातोऽन्यथेति, तदा-श्रया च तत्त्वव्यवस्था। ते चैतेऽवयवाः शब्दविशेषाः सन्तः

---

न्यायाङ्गत्वम् इति वाच्यम्, आहार्य्यसंशयोदयकत्वात्। तदपि प्रयोजनं न न्यायाङ्गम्, अपि तु तज्ज्ञानं, तथाऽपि तदेव निरूपणीयं, न तु ज्ञानं निरूपणीयमिति। तदुपा-दने दृष्टान्तस्य मूलत्वादनन्तरं दृष्टान्तस्य, दृष्टान्तमूलको न्यायः सिद्धान्तविषय इत्यतो-ऽनन्तरं सिद्धान्तस्य, ततश्चावयवतः सिद्धान्ताधीनस्य पञ्चावयवरूपन्यायस्य, ततस्तत्कार्य्यकारितया न्यायसहकारिणस्तर्कस्य, ततश्च तर्कजन्यतया निर्णयस्य, ततश्च निर्णयानुकूलत्वाद्वादस्य, जल्पस्यापि वादकार्य्यकारित्वादनन्तरं जल्पस्य, ततश्च विजय-रूपैककार्य्यानुकूलतया वितण्डायाः, कथात्रयस्यापि दूषणसापेक्षतयाऽनन्तरं दूषणेषु निरूपणीयेषु वादे देशनीयत्वरूपोत्कर्षवत्त्वात् हेतुवदाभासमानत्वाच्चादौ हेत्वाभासानां, ततश्च हेत्वाभासोपजीवनेन छलस्य, स्वव्याघातकत्वेन छलन्यासदुत्तरत्वात्ततो जातेः, कथाऽवसानत्वेन अनन्तरं निग्रहस्थानानामिति। अत्र च प्रमेयान्तःपातिबुद्धिरूपस्यापि संशयादेः निरनुयोज्यानुयोगरूपनिग्रहस्थानान्तःपातिनोश्छलजात्योश्च प्रकारभेदेन प्रतिपादनं शिष्यबुद्धिवैशद्यार्थमस्तु, निग्रहस्थानान्तःपातिनां हेत्वाभासानां पृथगभि-धानप्रयोजनं न जानाति भगवानक्षपाद एव। भाष्ये तु,— "वादे देशनीयतया हेत्वा-

प्रमेयेऽन्तर्भूता एवमर्थं पृथगुच्यन्त इति। तर्को न प्रमाणसङ्गृहीतः, न प्रमाणान्तरं, प्रमाणानामनुग्राहकस्तत्त्वज्ञानाय कल्पते। तस्योदाहरणम्। किमिदं जन्म कृतकेन हेतुना निर्वर्त्त्यते? आहोस्विदकृतकेन? अथाऽऽकस्मिकमिति। एवमविज्ञातेऽर्थे कारणोपपत्त्या ऊहः प्रवर्त्तते, यदि कृतकेन हेतुना निर्वर्त्त्यते, हेतूच्छेदादुपपन्नोऽयं जन्मोच्छेदः। अथाकृतकेन हेतुना, ततो हेतूच्छेदस्याशक्यत्वादनुपपन्नोऽयं जन्मोच्छेदः। अथाऽऽकस्मिकम्, अतोऽकस्मान्निर्वर्त्त्यमानं न पुनर्निवर्त्स्यतीति निवृत्तिकारणं नोपपद्यते, तेन जन्मानुच्छेद इति। एतस्मिंस्तर्कविषये कर्मनिमित्तं जन्मेति प्रमाणानि वर्त्तमानानि तर्केणानुगृह्यन्ते, तत्त्वज्ञानविषयस्य विभागात् तत्त्वज्ञानाय कल्पते तर्क इति। सोऽयमित्थम्भूतस्तर्कः प्रमाणसहितो वादे साधनायोपालम्भाय वाऽर्थस्य भवतीत्येवमर्थं पृथगुच्यते प्रमेयान्तर्भूतोऽपीति। निर्णयस्तत्त्वज्ञानं प्रमाणानां फलम्। तदवसानो वादः। तस्य पालनार्थं

---

भासानां पृथगुपन्यासः” इत्युक्तम्। अत्र वार्त्तिकं,—“यदि वादे देशनीयत्वात् पृथगभिधानं, तदा न्यूनाधिकापसिद्धान्तानां वादे देशनीयत्वात् पृथगभिधानं स्यात्, यदि पृथगभिधानाद्वादे देशनीयत्वं, तदा संशयादीनामपि वादे देशनीयत्वं स्यात्; तस्मादान्वीक्षिकीत्रयीवार्त्तादण्डनीतिरूपविद्याप्रस्थानभेदज्ञापनार्थं संशयादेर्हेत्वाभासस्य च पृथग्वचनम्” इति। तदप्यसत्; निग्रहस्थानान्तर्गतत्वेनैव तन्निरूपणेन प्रस्थानभेदसम्भवात्। वस्तुतु हेत्वाभासानां न निग्रहस्थानत्वं, तथा सति सर्व्वत्र हेत्वाभाससत्त्वात् सर्व्वस्यैव निगृहीतत्वाऽऽपत्तेः। तस्मात् हेत्वाभासप्रयोगो निग्रहस्थानं, तद्विभाजकसूत्रस्थहेत्वाभासपदञ्च तत्प्रयोगपरम्। तत्र च प्रयोगस्य न लक्षणमपेक्षणीयम्, अपि तु हेत्वाभासानाम्, इत्यत उक्तं “हेत्वाभासाश्च यथोक्ताः” इति चरमसूत्रम्। न च हेत्वाभासस्यावच्छेदकप्रवेशादेव न पृथङ्निरूपणापेक्षेति वाच्यम्; तथा सति प्रमाणतर्कसाधनोपालम्भ इति वादावच्छेदकप्रमाणादेरपि पृथङ्निरूपणानापत्तेरिति युक्तमुत्पश्याम। अत्र केचित् सूत्रादौ मङ्गलाकरणेन “मङ्गलं न प्रामाणिकम्” इत्यत्र सूत्रकृतां

जल्पवितण्डे। तावेतौ तर्कनिर्णयौ लोकयात्रां वहत इति। सोऽयं निर्णयः प्रमेयान्तर्भूत एवमर्थं पृथगुद्दिष्ट इति। वादः खलु नानाप्रवक्तृकः प्रत्यधिकरणसाधनोऽन्यतराधिकरणनिर्णयावसानो वाक्यसमूहः, पृथगुद्दिष्ट उपलक्षणार्थम्। उपलक्षितेन व्यवहारस्तत्त्वज्ञानाय भवतीति। तद्विशेषौ जल्पवितण्डे तत्त्वाध्यवसायसंरक्षणार्थमित्युक्तम्। निग्रहस्थानेभ्यः पृथगुद्दिष्टा हेत्वाभासा वादे चोदनीया भविष्यन्तीति। जल्पवितण्डयोस्तु निग्रहस्थानानीति। छलजातिनिग्रहस्थानानां पृथगुपदेश उपलक्षणार्थ इति। उपलक्षितानां स्ववाक्ये परिवर्ज्जनम्। छलजातिनिग्रहस्थानानां परवाक्ये पर्य्यनुयोगः। जातेश्च परेण प्रयुज्यमानायाः सुलभः समाधिः, स्वयञ्च सुकरः प्रयोग इति। सेयमान्वीक्षिकी प्रमाणादिभिः पदार्थैर्विभज्यमाना—

"प्रदीपः सर्व्वविद्यानामुपायः सर्व्वकर्म्मणाम्।
आश्रयः सर्व्वधर्म्माणां विद्योद्देशे प्रकीर्त्तिता॥"

---

तात्पर्य्यं वर्णयन्ति। तदसत्; कृतस्याप्यनिबन्धनसम्भवात्, विघ्नाभावनिर्णयेनाकरणसम्भवाच्च। वयन्तु "प्रमाणं प्राणनिलयः" इति भगवन्नामगणान्तःपातिप्रमाणशब्दस्योच्चारणमेव मङ्गलमिति ब्रूमः। अत्र च उद्देशलक्षणपरीक्षाणां पूर्व्वपूर्व्वसापेक्षतया प्रथममुद्देशः, अनन्तरं लक्षणम्; प्रसङ्गाच्छलपरीक्षेति सोद्देशपदार्थलक्षणच्छलपरीक्षा प्रथमाध्यायार्थः, तत्र च सपरिकरन्यायलक्षणं प्रथमाऽऽह्निकार्थः, तत्र च प्रयोजनाभिधेयप्रतिपादकं प्रथमद्वितीयसूत्राभ्यामेकं प्रकरणम्; ततः प्रमाणलक्षणप्रकरणम; ततः प्रमेयलक्षणप्रकरणम्; ततो न्यायपूर्व्वाङ्गप्रकरणम्; ततो न्यायसिद्धान्तप्रकरणम; ततो न्यायस्वरूपप्रकरणम्; ततो न्यायोत्तराङ्गप्रकरणमिति प्रथमाऽऽह्निके सप्त प्रकरणानि। श्रवणादनु पश्चादीक्षा अन्वीक्षा, तन्नयनन्तन्निर्वाहिका, सेयमान्वीक्षिकी न्यायतर्कादिशब्दैरपि व्यवह्रियते। तथा च "न्यायो मीमांसा धर्म्मशास्त्राणि" इति श्रुतिः, "पुराणन्यायमीमांसाः" इत्यादि स्मृतिः। "मीमांसा न्यायतर्कश्च उपाङ्गः परिकीर्त्तितः" इति पुराणम्। "त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिञ्च शाश्वतीम्। आन्वीक्षिकीञ्चात्मविद्यां

तदिदं तत्त्वज्ञानं निःश्रेयसाधिगमार्थं यथाविद्यं वेदितव्यम्। इह त्वध्यात्मविद्यायामात्मादितत्त्वज्ञानं, निःश्रेयसाधिगमोऽपवर्गप्राप्तिः ॥ १ ॥

तत् खलु निःश्रेयसं किं तत्त्वज्ञानानन्तरमेव भवति ? नेत्युच्यते, किं तर्हि ? तत्त्वज्ञानात्—

**दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः ॥ २ ॥**

तत्रात्माद्यपवर्गपर्य्यन्ते प्रमेये मिथ्याज्ञानम् अनेकप्रकारकं वर्त्तते। आत्मनि तावन्नास्तीति। अनात्मन्यात्मेति। दुःखे सुखमिति। अनित्ये नित्यमिति। अत्राणे त्राणमिति। सभये निर्भयमिति। जुगुप्सितेऽभिमतमिति। हातव्येऽप्रतिहातव्यमिति। प्रवृत्तौ नास्ति कर्म्म, नास्ति कर्म्मफलमिति। दोषेषु नायं दोषनिमित्तः संसार इति। प्रेत्यभावे नास्ति जन्तुर्जीवो वा सत्त्व आत्मा वा यः प्रेयात् प्रेत्य च भवेदिति। अनिमित्तं जन्म, अनिमित्तो जन्मोपरम इत्यादिमान् प्रेत्यभावोऽनन्तश्चेति। नैमित्तिकः सन् न कर्म्मनिमित्तः प्रेत्यभाव इति। देहेन्द्रियबुद्धिवेदनासन्तानोच्छेदप्रतिसन्धानाभ्यां निरात्मकः प्रेत्यभाव इति

---

धर्म्माऽऽरम्भांश्च लोकतः ॥" इति मनुः। तथा "यस्तर्केणानुसन्धत्ते स धर्म्मं वेद नेतरः" इत्यादि मोक्षधर्म्मे। "तत्रोपनिषदं तात ! परिशेषन्तु पार्थिव !। मथ्नामि मनसा तात ! दृष्ट्वा चान्वीक्षिकीं पराम् ॥" इत्युपनिषदर्थश्चान्वीक्षिक्यनुसारी एव यः, सः ग्राह्य इत्युक्तमिति ॥ १ ॥

ननु तत्त्वज्ञानस्य न साक्षादेव निःश्रेयसहेतुत्वम्; तत्त्वज्ञानिनामप्यनवस्थितिदर्शनात् अतः क्रमाकाङ्क्षायामाह, दुःखेति। अत्र वार्त्तिकं,—"निःश्रेयसं तावद्द्विविधं, परापरभेदात्। तत्रापरं, जीवन्मुक्तिलक्षणं तत्त्वज्ञानानन्तरमेव, तदप्यवधारिताऽऽत्मतत्त्वस्य नैरन्तर्य्याभ्यासापक्षतमिथ्याज्ञानस्य प्रारब्धं कर्म्मोपभुञ्जानस्य। परन्तु क्रमेण, तत्र क्रमप्रतिपादनायेदं सूत्रम्" इति। दुःखादीनां मध्ये यत्तु उत्तरोत्तरं, तेषामपाये तदनन्तरस्य

अपवर्गो मोक्षः। स खल्वयं सर्व्वकार्य्योपरमः। सर्व्वविप्रयोगेऽपवर्गे बहु च भद्रकं लुप्यत इति। कथं बुद्धिमान् सर्व्वसुखोच्छेदमचैतन्यममुमपवर्गं रोचयेदिति। एतस्मान्मिथ्याज्ञानादनुकूलेषु रागः, प्रतिकूलेषु द्वेषः। रागद्वेषाधिकाराच्चासूयेर्ष्यामायालोभादयो दोषा भवन्ति। दोषैः प्रयुक्तः शरीरेण प्रवर्त्तमानः हिंसास्तेयप्रतिषिद्धमैथुनान्याचरति। वाचाऽनृताहितपरुषसूचनासम्बद्धानि। मनसा परद्रोहं परद्रव्याभीप्सां नास्तिक्यञ्चेति। सेयं पापात्मिका प्रवृत्तिरधर्म्माय। अथ शुभेः प्रयुक्तः शरीरेण दानं परित्राणं परिचरणञ्च। वाचा सत्यं हितं प्रियं स्वाध्यायञ्च। मनसा दयामस्पृहां श्रद्धाञ्च आचरति। सेयं धर्म्माय। अत्र प्रवृत्तिसाधनौ धर्म्माधर्म्मौ प्रवृत्तिशब्देनोक्तौ। यथाऽन्नसाधनाः प्राणाः, "अन्नं वै प्राणिनः प्राणाः" इति। सेयं कुत्सितस्याभिपूजितस्य च जन्मनः कारणम्। जन्म पुनः शरीरेन्द्रिय-बुद्धीनां निकायविशिष्टः प्रादुर्भावः। तस्मिन् सति दुःखम्। तत्पुनः प्रतिकूलवेदनीयं बाधना पीड़ा ताप इति। त इमे मिथ्याज्ञानादयो दुःखान्ता धर्म्मा अविच्छेदेनैव प्रवर्त्तमानाः संसार इति। यदा तु तत्त्वज्ञानान्मिथ्याज्ञानमपैति, तदा मिथ्याज्ञानापाये दोषा अपयन्ति। दोषापाये प्रवृत्तिरपैति। प्रवृत्त्यपाये जन्मापैति।

---

तत्सन्निहितस्य पूर्व्वपूर्व्वस्यापायादपवर्गः, प्रयोजकत्वं प्रयोज्यत्वं वा पञ्चम्यर्थः, दण्डाभावाद्घटाभाव इतिवत्, स्वरूपसम्बन्धविशेष एव तत; तदयमर्थः,—तत्त्वज्ञानेन विरोधितयाऽपहते मिथ्याज्ञाने, कारणाभावाच्च निवृत्ते रागद्वेषाऽऽत्मके दोषे, तदभावाच्च प्रवृत्तेर्धर्म्माधर्म्माऽऽत्मिकाया अनुत्पत्तौ, तदभावाच्च जन्मनो विशिष्टशरीरसम्बन्धस्याभावे दुःखाभावादपवर्गः। यद्यपि ज्ञानिनोऽपि रागादयस्तिष्ठन्ति, तथाऽप्युत्कटरागाद्यभावे तात्पर्य्यम्। यद्यपि दोषाणां न धर्म्मादिजनकत्वं, व्यभिचारात्, तथाऽपि तत्तद्दोषाणां तत्तद्धर्म्मादिहेतुत्वाद्दोषापाये धर्म्माद्यपायः। वस्तुतो विनाऽपीच्छां गङ्गाजलसंयोगादितो

जन्मापाये दुःखमपैति। दुःखापाये चाऽऽत्यन्तिकोऽपवर्गो निःश्रेयसमिति। तत्त्वज्ञानन्तु खलु मिथ्याज्ञानविपर्य्ययेण व्याख्यातम्। आत्मनि तावदस्तीति। अनात्मन्यनात्मेति। एवं दुःखेऽनित्येऽत्राणे सभये जुगुप्सिते हातव्ये च यथाविषयं वेदितव्यम्। प्रवृत्तौ अस्ति कर्म्म, अस्ति कर्म्मफलमिति। दोषेषु दोषनिमित्तोऽयं संसार इति। प्रेत्यभावे खल्वस्ति जन्तुर्जीवः सत्त्व आत्मा वा यः प्रेत्य भवेदिति। निमित्तवज्जन्म, निमित्तवान् जन्मोपरमः, इत्यनादिः प्रेत्यभावोऽपवर्गान्त इति। नैमित्तिकः सन् प्रेत्यभावः प्रवृत्तिनिमित्त इति। सात्मकः सन् देहेन्द्रियबुद्धिवेदनासन्तानोच्छेदप्रतिसन्धानाभ्यां प्रवर्त्तत इति। अपवर्गः शान्तः। स खल्वयं सर्व्वविप्रयोगः सर्व्वोपरमोऽपवर्गः। बहु च कृच्छ्रं घोरं पापकं लुप्यत इति। कथं बुद्धिमान् सर्व्वदुःखोच्छेदं सर्व्वदुःखासंविदमपवर्गं न रोचयेदिति। तद्यथा मधुविषसम्पृक्तान्नमनादेयमिति, एवं सुखं दुःखानुषक्तमनादेयमिति ॥ २ ॥

त्रिविधा चास्य शास्त्रस्य प्रवृत्तिः; उद्देशो लक्षणं परीक्षा चेति। तत्र नामधेयेन पदार्थमात्रस्याभिधानमुद्देशः। तत्रोद्दिष्टस्यातत्त्वव्यवच्छेदको धर्म्मो लक्षणम्। लक्षितस्य यथा लक्षणमुपपद्यते न वेति प्रमाणैरवधारणं परीक्षा। तत्रो-

---

धर्म्मादिसम्भवाद्व्यभिचारः। तस्मात् मिथ्याज्ञानजवासनैवात्र दोषः, तस्याश्च मिथ्याज्ञाननाशात् तत्कालीनतत्त्वज्ञानजवासनातो वा नाश इत्याशय इत्यपि वदन्ति। यद्यपि दुःखापायाश्चापवर्गः, किन्तु स एव सः, तथाऽप्यभेद एव तत्र पञ्चम्यर्थः, अपवर्गपदं वा तद्व्यवहारपरम्, अनन्तरपदेन जन्मान्तरमेव परामृश्यत इति तु न व्याख्यानम्; दुःखपदवैयर्थ्याऽऽपत्तेः। दुःखानुत्पत्तेश्चरमदुःखध्वंसप्रयोजकत्वं कल्प्यत इत्याशयेनेदमित्यपि कश्चित् ॥ २ ॥

इति सूत्रवृत्तौ सप्रयोजनाभिधेयप्रकरणम्

दिष्टस्य प्रविभक्तस्य लक्षणमुच्यते, यथा प्रमाणानां प्रमेयस्य च। उद्दिष्टस्य लक्षितस्य च विभागवचनं, यथा छलस्य। "वचनविघातोऽर्थविकल्पोपपत्त्या छलं तत् त्रिविधम्" इति। अथोद्दिष्टस्य विभागवचनम्—

**प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि ॥ ३ ॥**

अक्षस्याक्षस्य प्रतिविषयं वृत्तिः प्रत्यक्षम्। वृत्तिस्तु सन्निकर्षः, ज्ञानं वा। यदा सन्निकर्षः, तदा ज्ञानं प्रमितिः। यदा ज्ञानं, तदा हानोपादानोपेक्षाबुद्धयः फलम्। अनुमानम्।—मितेन लिङ्गेन अर्थस्य पश्चान्मानमनुमानम्। उपमानं—सारूप्यज्ञानम्; यथा गौः, एवं गवय इति। सारूप्यन्तु सामान्ययोगः। शब्दः,—शब्द्यतेऽनेन अर्थः इत्यभिधीयते ज्ञाप्यते। उपलब्धिसाधनानि प्रमाणानीति समाख्यानिर्वचनसामर्थ्याद्बोद्धव्यम्। प्रमीयतेऽनेनेति करणार्थाभिधानो हि प्रमाणशब्दः, तद्विशेषसमाख्याया अपि तथैव व्याख्यानम्। किं पुनः प्रमाणानि प्रमेयमभिसंप्लवन्ते, अथ प्रमेयं व्यवतिष्ठन्ते ? इत्युभयथा दर्शनम्। अस्त्यात्मेत्याप्तोपदेशात् प्रतीयते, तत्रानुमानमिच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति। प्रत्यक्ष युञ्जानस्य योगसमाधिजमात्ममनसोः संयोगविशेषादात्मा प्रत्यक्ष इति। अग्निराप्तोपदेशात् प्रतीयते, अत्राग्निरिति; प्रत्यासीदता धूमदर्शनेनानुमीयते। प्रत्यासन्नेन च प्रत्यक्षत उपलभ्यते। व्यवस्था पुनः, "अग्निहोत्रं जुहुयात् स्वर्गकामः" (मै० उ० ६।३६) इति। लौकिकस्य स्वर्गे न लिङ्गदर्शनं न प्रत्यक्षम्। स्तनयित्नुशब्दे श्रूयमाणे शब्दहेतोरनुमानम्। तत्र न प्रत्यक्षं

अथ यथोद्दिष्टं लक्षणस्यापेक्षितत्वात् प्रथमोद्दिष्टप्रमाणं लक्षयति विभजते च।
प्रमा तद्वति तत्प्रकारकत्वरूप ( प्रकर्षविशिष्टज्ञानं ) प्रशब्दविशिष्टेन माधातुना

नाऽऽगमः। पाणौ प्रत्यक्षत उपलभ्यमाने नानुमानं, नाऽऽगम इति। सा चेयं प्रमितिः प्रत्यक्षपरा। जिज्ञासितमर्थमाप्तोपदेशात् प्रतिपद्यमानो लिङ्गदर्शनेनापि बुभुत्सते। लिङ्गदर्शनानुमितञ्च प्रत्यक्षतो दिदृक्षते। प्रत्यक्षत उपलब्धेऽर्थे जिज्ञासा निवर्त्तते। पूर्वोक्तमुदाहरणम् अग्निरिति। प्रमातुः प्रमातव्येऽर्थे प्रमाणानां सङ्करोऽभिसंप्लवः। असङ्करो व्यवस्थेति ॥ ३ ॥

अथ विभक्तानां लक्षणवचनमिति—

**इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायाऽऽत्मकं प्रत्यक्षम् ॥ ४ ॥**

इन्द्रियस्यार्थेन सन्निकर्षादुत्पद्यते यत् ज्ञानं, तत् प्रत्यक्षम्। न तर्हि इदानीमिदं भवति, आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेनेति। नेदं कारणावधारणमेतावत् प्रत्यक्षे कारणमिति, किन्तु विशिष्टकारणवचनमिति। यत्प्रत्यक्षज्ञानस्य विशिष्टकारणं तदुच्यते। यत्तु समानमनुमानादिज्ञानस्य न तन्निवर्त्तत इति। मनसस्तर्हि इन्द्रियेण संयोगो वक्तव्यः। भिद्यमानस्य प्रत्यक्षज्ञानस्य नायं भिद्यत इति समानत्वान्नोक्त इति। यावदर्थं वै नामधेयशब्दास्तैरर्थसम्प्रत्ययः,

प्रत्याय्यते, तत्करणत्वं प्रमाणत्वम्; ज्ञानं चात्रानुभवो विवक्षितः, तेन स्मृतिकरणे नातिव्याप्तिः, लक्षितानां प्रमाणानां विभागः, प्रत्यक्षानुमानोपमानशब्दा० इति विभागस्य उद्देश एवान्तर्भूतत्वादयं विशेषोद्देशः। प्रत्येकलक्षणन्तु वक्ष्यते ॥ ३ ॥

इति त्रिसूत्रीवृत्तिः समाप्ता।

अथ विभक्तानि यथाक्रमं लक्षयितुमारभते।—अक्षं प्रतिगतमक्षं प्रत्यक्षमिति योगादिन्द्रियवाचकत्वात् प्रत्यक्षशब्दस्य, प्रस्तुतत्वाच्च करणलक्षणस्य, प्रमितिलक्षणं यद्यप्यनुचितं, तथाऽपि यत इत्यध्याहारेण, प्रत्यक्षप्रमाकरणलक्षणे वाच्ये तदेकदेशप्रमास्वरूपे ज्ञाते तत्करणत्वं सुज्ञेयमित्याशयेन वा सङ्गमनीयम्। आत्ममनःसंयोगजन्यसुखादिवारणाय ज्ञानमिति। यद्यपि तज्जन्यत्वात् ज्ञानमात्रेऽतिव्याप्तिः, ईश्वर-

अर्थसम्प्रत्ययाच्च व्यवहारः। तत्रेदमिन्द्रियार्थसन्निकर्षादुत्पन्नमर्थज्ञानं रूपमिति वा रस इत्येवं वा भवति। रूपरसशब्दाश्च विषयनामधेयम्। तेन व्यपदिश्यते ज्ञानं रूपमिति जानीते, रस इति जानीते, नामधेयशब्देन व्यपदिश्यमानं सत् शाब्दं प्रसज्यते, अत आह—अव्यपदेश्यमिति। यदिदमनुपयुक्ते शब्दार्थसम्बन्धेऽर्थज्ञानं, तन्नामधेयशब्देन न व्यपदिश्यते, गृहीतेऽपि च शब्दार्थसम्बन्धेऽस्यायं शब्दो नामधेयमिति। यदा तु सोऽर्थो गृह्यते, तदा तत् पूर्व्वस्मादर्थज्ञानान्न विशिष्यते, तदर्थविज्ञानं तादृगेव भवति, तस्य त्वर्थज्ञानस्य अन्यः समाख्याशब्दो नास्ति, येन प्रतीयमानो व्यवहाराय कल्पेत, न चाप्रतीयमानेन व्यवहारः। तस्य अज्ञेयस्यार्थस्य संज्ञाशब्देनेतिकरणयुक्तेन निर्द्दिश्यते रूपमिति ज्ञानं, रस इति ज्ञानमिति। तदेवमर्थज्ञानकाले स न समाख्याशब्दो व्याप्रियते, व्यवहारकाले तु व्याप्रियते, तस्मादशाब्दमर्थज्ञानमिन्द्रियार्थसन्निकर्षोत्पन्नमिति। ग्रीष्मे मरीचयो भौमेनोष्मणा संसृष्टाः स्पन्दमाना दूरस्थस्य चक्षुषा सन्निकृष्यन्ते, तत्रेन्द्रियार्थसन्निकर्षादुदकमिति ज्ञानमुत्पद्यते। तच्च प्रत्यक्षं प्रसज्यत इत्यत आह,—अव्यभिचारीति। यदतस्मिंस्तदिति, तद्व्यभिचारि। यत्तु तस्मिंस्तदिति, तदव्यभिचारि प्रत्यक्षमिति। दूराच्चक्षुषा ह्ययमर्थं पश्यन्नावधारयति धूम इति वा, रेणुरिति वा। तदेतदिन्द्रियार्थसन्निकर्षोत्पन्नमनवधारणज्ञानं प्रत्यक्षं प्रसज्यत इत्यत आह,—व्यवसायाऽऽत्मकमिति। न चैतन्मन्तव्यम् आत्ममनःसन्निकर्ष-

प्रत्यक्षे चाव्याप्तिः, तथाऽपि साक्षात्करीमीत्यनुव्यवसायसिद्धसाक्षात्त्वजात्यवच्छिन्नं ज्ञानमित्यन्तस्य तात्पर्य्यम्; यद्वा,—इन्द्रियार्थसन्निकर्षोत्पन्नमिति सावधारणम्; इन्द्रियार्थसन्निकर्षातिरिक्तानुत्पन्नम् अतिरिक्तं चात्र ज्ञानम्; तेन ज्ञानाकरणकमित्यर्थः। भ्रमवारकमव्यभिचारीति भ्रमभिन्नमित्यर्थः, इदञ्चांशिकभ्रमव्यावृत्त्यत्वेन, सद्व्यत्वे तु

जमेव अनवधारणज्ञानमिति। चक्षुषा ह्ययमर्थं पश्यन्नावधारयति, तथा चेन्द्रियेणोपलब्धमर्थं मनसोपलभते, एवमिन्द्रियेण अनवधारयन् मनसा नावधारयति। यच्चैतदिन्द्रियानवधारणपूर्व्वकं मनसाऽनवधारणं, तद्विशेषापेक्षं विमर्शमात्रं संशयो न पूर्व्वमिति। सर्व्वत्र प्रत्यक्षविषये ज्ञातुरिन्द्रियेण व्यवसायः, पश्चात् मनसाऽनुव्यवसायः, उपहतेन्द्रियाणामनुव्यवसायाभावादिति। आत्मादिषु सुखादिषु च प्रत्यक्षलक्षणं वक्तव्यम्। अनिन्द्रियार्थसन्निकर्षजं हि तदिति। इन्द्रियस्य वै सतो मनस इन्द्रियेभ्यः पृथगुपदेशो धर्म्मभेदात्। भौतिकानीन्द्रियाणि नियतविषयाणि। सगुणानाञ्चैषामिन्द्रियभाव इति। मनस्त्वभौतिकं सर्व्वविषयञ्च, नास्य सगुणस्येन्द्रियभाव इति। सति चेन्द्रियार्थसन्निकर्षे सन्निधिमसन्निधिञ्चास्य युगपज्ज्ञानानुत्पत्तिकारणं वक्ष्याम इति। मनसश्चेन्द्रियभावान्न वाच्यं लक्षणान्तरमिति। तन्त्रान्तरसमाचाराच्चैतत् प्रत्येतव्यमिति। परमतमप्रतिषिद्धमनुमतमिति हि तन्त्रयुक्तिः। व्याख्यातं प्रत्यक्षम्॥ ४॥

**अथ तत्पूर्व्वकं त्रिविधमनुमानं पूर्व्ववच्छेषवत् सामान्यतो दृष्टञ्च॥ ५॥**

तत्पूर्व्वकमित्यनेन लिङ्गलिङ्गिनोः सम्बन्धदर्शनं लिङ्गदर्शनञ्चाभिसम्बध्यते। लिङ्गलिङ्गिनोः सम्बद्धयोर्दर्शनेन लिङ्गस्मृतिरभिसम्बध्यते। स्मृत्या लिङ्गदर्शनेन च अप्रत्यक्षोऽर्थोऽनुमीयते।

तद्वति तत्प्रकारकत्वम्; निर्व्विकल्पकस्य स्वत्त्वे, तदभाववति तदप्रकारकत्वमर्थः, तस्य विभागः, अव्यपदेश्यं व्यवसायात्मकमिति, निर्व्विकल्पक सविकल्पकञ्चेति द्विविधं प्रत्यक्षमित्यर्थः॥ ४॥

अनुमानं लक्षयति विभजते च।—आनन्तर्य्यबोधकाथशब्दो हेतुहेतुमद्भावसङ्गतिसूचनाय। तत्पूर्व्वकं प्रत्यक्षपूर्व्वकम्; प्रत्यक्षं प्रत्यक्षविशेषो व्याप्त्यादिविषयकः, तेन

पूर्व्ववदिति, यत्र कारणेन कार्य्यमनुमीयते। यथा मेघोन्नत्या भविष्यति वृष्टिरिति। शेषवत्तत्, यत्र कार्य्येण कारणमनुमीयते। पूर्व्वोदकविपरीतमुदकं नद्याः पूर्णत्वं शीघ्रत्वञ्च दृष्ट्वा स्रोतसोऽनुमीयते भूता वृष्टिरिति। सामान्यतो दृष्टं, व्रज्यापूर्व्वकम् अन्यत्र दृष्टस्य अन्यत्र दर्शनमिति। तथा चाऽऽदित्यस्य। तस्मादस्त्यप्रत्यक्षाऽप्यादित्यस्य व्रज्येति। अथवा पूर्व्ववदिति, यत्र यथा पूर्व्वं प्रत्यक्षभूतयोरन्यतरदर्शनेन अन्यतरस्य अप्रत्यक्षस्यानुमानम्। यथा धूमेनाग्निरिति। शेषवन्नाम परिशेषः, स च प्रसक्तप्रतिषेधेऽन्यत्र अप्रसङ्गाच्छिष्यमाणे सम्प्रत्ययः। यथा सदनित्यमित्येवमादिना द्रव्यगुणकर्म्मणामविशेषेण सामान्यविशेषसमवायेभ्यो विभक्तस्य शब्दस्य तस्मिन् द्रव्यकर्म्मगुणसंशये न द्रव्यमेकद्रव्यत्वात्, न कर्म्म शब्दान्तरहेतुत्वात्, यस्तु शिष्यते, सोऽयमिति शब्दस्य गुणत्वप्रतिपत्तिः। सामान्यतो दृष्टं नाम, यत्राप्रत्यक्षे लिङ्गलिङ्गिनोः सम्बन्धे केनचिदर्थेन लिङ्गस्य सामान्यादप्रत्यक्षो लिङ्गी गम्यते। यथेच्छादिभिरात्मा। इच्छादयो गुणाः। गुणाश्च द्रव्यसंस्थानाः। तद्यदेषां स्थानं, स आत्मेति। विभागवचनादेतत् त्रिविधमिति सिद्धे, त्रिविधवचनं—महतो महाविषयस्य न्यायस्य लघीयसा सूत्रेणोपदेशात् परं वाक्यलाघवं मन्यमानस्य अन्यस्मिन् वाक्यलाघवेऽनादरः। तथा चायमित्यम्भूतेन वाक्यविकल्पेन

---

व्याप्तिविशिष्टपक्षधर्म्मताज्ञानजन्यत्वं लभ्यते। अनुमानम् अनुमितिः, यत इत्यध्याहारेण करणलक्षणम्, अथवा करणलक्षणमेवेदम्; तत्रानुमानमिति करणल्युटा अनुमितिकरणमिति समाख्याबलादेव लब्धम्; तच्च व्याप्तिज्ञानं प्रत्यक्षपूर्व्वकं सहचारप्रत्यक्षपूर्व्वकं विभजते, त्रिविधमिति। पूर्व्वं कारणं, तद्वत् तल्लिङ्गकम्; यथा मेघोन्नतिविशेषेण वृष्ट्यनुमानम्; शेषः कार्य्यं, तल्लिङ्गकं शेषवत्, यथा नदीवृद्ध्या वृष्ट्यनुमानम्; सामान्यतो दृष्टं कार्य्यकारणभिन्नलिङ्गकम्, यथा पृथिवीत्वेन द्रव्यत्वानुमानम्, अथवा पूर्व्वम्

प्रवृत्तः सिद्धान्ते छले शब्दादिषु च बहुलं समाचारः शास्त्रे इति। सद्विषयञ्च प्रत्यक्षम्। सदसद्विषयञ्चानुमानम्। कस्मात्?—त्रैकाल्यग्रहणात्, त्रिकालयुक्ता अर्था अनुमानेन गृह्यन्ते। भविष्यतीत्यनुमीयते, भवतीति च, अभूदिति च। असच्च खल्वतीतमनागतञ्चेति ॥ ५ ॥

अथोपमानम्—

**प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् ॥६॥**

प्रज्ञातेन सामान्यात् प्रज्ञापनीयस्य प्रज्ञापनमुपमानमिति। यथा गौरिव गवय इति। किं पुनरत्रोपमानेन क्रियते? यदा खल्वयं गवा समानधर्मं प्रतिपद्यते, तदा प्रत्यक्षतस्तमर्थं प्रतिपद्यते, इति समाख्यासम्बन्धप्रतिपत्तिरुपमानार्थ इत्याह। यथा गौरिव गवय इत्युपमाने प्रयुक्ते, गवा समानधर्ममर्थमिन्द्रियार्थसन्निकर्षादुपलभमानोऽस्य गवयशब्दः संज्ञेति संज्ञासंज्ञिसम्बन्धं प्रतिपद्यत इति। यथा मुद्गस्तथा मुद्गपर्णी, यथा माषस्तथा माषपर्णीत्युपमाने प्रयुक्ते, उपमानात् संज्ञासंज्ञिसम्बन्धं प्रतिपद्यमानस्तामोषधीं भैषज्यायाऽऽहरति। एवमन्योऽप्युपमानस्य लोके विषयो बुभुत्सितव्य इति ॥ ६ ॥

---

अन्वयः, तद्वत्, केवलान्वयीत्यर्थः, यथा अभिधेयं प्रमेयत्वात् इत्यादि ; शेषो व्यतिरेकः, तद्वत्, केवलव्यतिरेकीत्यर्थः, यथा पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वादित्यादि ; सामान्यतो दृष्टम्, अन्वयव्यतिरेकि, यथा वह्निमान् धूमादित्यादि ॥ ५ ॥०

उपमानं लक्षयति।—प्रसिद्धस्य पूर्व्वप्रमितस्य गवादेः, साधर्म्यात्सादृश्यात् तज्ज्ञानात्, साध्यस्य गवयादिपदवाच्यत्वस्य, साधनं सिद्धिः, उपमानमुपमितिः ; यत इत्यध्याहारेण च करणलक्षणम्; अथवा,—साध्यसाधनमिति करणल्युटा करणलक्षणमेवेदम्। अत्र च वैधर्म्योपमितिमपि मन्यन्ते टीकाकृतः, यथा च अतिदीर्घग्रीवत्वादिपश्वन्तरवैधर्म्यज्ञानादुष्ट्रे करभपदवाच्यताग्रहः। एवमन्योऽप्युपमानस्य विषय इति भाष्यम् ; यथा मुद्गपर्णीसदृशी ओषधी विषं हन्ति, इत्यतिदेशवाक्यार्थे ज्ञाते मुद्गपर्णीसादृश्यज्ञाने जाते, इयमोषधी विषहरणीत्युपमित्या विषयीक्रियत इत्यादि ॥ ६ ॥

अथ शब्दः—

**आप्तोपदेशः शब्दः ॥ ७ ॥**

आप्तः खलु साक्षात्कृतधर्म्मा यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयोक्ता उपदेष्टा। साक्षात्करणमर्थस्य आप्तिः, तया प्रवर्त्तत इत्याप्तः। ऋष्यार्य्यम्लेच्छानां समानं लक्षणम्। तथा च सर्व्वेषां व्यवहाराः प्रवर्त्तन्त इति। एवमेभिः प्रमाणैर्देवमनुष्यतिरश्चां व्यवहाराः प्रकल्पन्ते, नातोऽन्यथेति ॥ ७ ॥

**स द्विविधो दृष्टादृष्टार्थत्वात् ॥ ८ ॥**

यस्येह दृश्यतेऽर्थः, स दृष्टार्थः। यस्यामुत्र प्रतीयते, सोऽदृष्टार्थः। एवमपि लौकिकवाक्यानां विभाग इति। किमर्थं पुनरिदम्? उच्यते,—स न मन्येत, दृष्टार्थ एवाऽऽप्तोपदेशः प्रमाणम्, अर्थस्यावधारणादिति। अदृष्टार्थोऽपि प्रमाणम्, अर्थस्यानुमानादिति ॥ ८ ॥

---

शब्दं लक्षयति।—शब्द इति लक्ष्यकथनम्; तदर्थः प्रमाणशब्द इति, आप्तोपदेश इति लक्षणम्; आप्तः प्रकृतवाक्यार्थयथार्थज्ञानवान्, तस्योपदेश इत्यर्थः, प्रकृतवाक्यार्थयथार्थज्ञानप्रयुक्तः शब्द इति फलितार्थः; अथवा,—आप्तो यथार्थः, उपदेशः शाब्दबोधो यस्मात् इति बहुव्रीहिः। शाब्दत्वञ्च जातिविशेषः, तथा च यथार्थशाब्दज्ञानकरणत्वमर्थः। अत्र च विशेष्यावृत्त्यप्रकारकत्व-तद्वति तत्प्रकारकत्वादिप्रमालक्षणानामेकं लक्षणे, परञ्च लक्ष्यतावच्छेदके निवेशनीयम्, अतो नाभेदः ॥ ७ ॥

विभजते।—स प्रमाणशब्दः, शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणगम्यार्थको दृष्टार्थकः, शब्दतदुपजीविप्रमाणमात्रगम्यार्थकोऽदृष्टार्थकः, तथा च दृष्टार्थकत्वादृष्टार्थकत्वभेदात् प्रमाणशब्दस्य द्वैविध्यमित्यर्थः ॥ ८ ॥

समाप्तं प्रमाणलक्षणप्रकरणम्।

किं पुनरनेन प्रमाणेनार्थजातं प्रमातव्यमिति ? तदुच्यते—

**आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम् ॥ ९ ॥**

तत्राऽऽत्मा सर्व्वस्य द्रष्टा, सर्व्वस्य भोक्ता, सर्व्वज्ञः, सर्व्वानुभवकः। तस्य भोगाऽऽयतनं शरीरम्। भोगसाधनानीन्द्रियाणि। भोक्तव्या इन्द्रियार्थाः। भोगो बुद्धिः। सर्व्वार्थोपलब्धौ नेन्द्रियाणि प्रभवन्तीति सर्व्वविषयमन्तःकरणं मनः। शरीरेन्द्रियार्थबुद्धिसुखवेदनानां निर्वृत्तिकारणं प्रवृत्तिर्दोषाश्च। नास्य इदं शरीरमपूर्व्वमनुत्तरञ्च, पूर्व्वशरीराणामादिर्नास्ति, उत्तरेषामपवर्गोऽन्तः, इति प्रेत्यभावः। ससाधनसुखदुःखोपभोगः फलम्। दुःखमिति, नेदमनुकूलवेदनीयस्य सुखस्य प्रतीतेः प्रत्याख्यानम्। किन्तर्हि ? जन्मन एवेदम्। सुखसाधनस्य दुःखानुषङ्गाद्दुःखेन अविप्रयोगाद्विविध-बाधनायोगाद्दुःखमिति समाधि-भावनमुपदिश्यते। समाहितो भावयति। भावयन्निर्विद्यते। निर्विण्णस्य वैराग्यम्। विरक्तस्यापवर्ग इति। जन्ममरणप्रबन्धोच्छेदः सर्व्वदुःखप्रहाणमपवर्ग इति। अस्त्यन्यदपि द्रव्यगुणकर्म्मसामान्यविशेषसमवायाः प्रमेयम्। तद्भेदेन च अपरिसङ्ख्येयम्। अस्य तु तत्त्वज्ञानादपवर्गः, मिथ्याज्ञानात् संसारः, इत्यत एतदुपदिष्टं विशेषेणेति ॥ ९ ॥

---

प्रमेयं विभजते लक्षयति च।—अत्र "तु"शब्दः पुनरर्थे, तथा चैतेषामेव प्रमेयत्वं, न तु प्रमाविषयत्वेन संयोगादीनामपि, प्रमेयशब्दो हि वादादिशब्दवत् परिभाषाविशेषेण द्वादशसु प्रवर्त्तते, तत्र च प्रकृष्टं मेयं प्रमेयमिति योगार्थः। प्रकर्षश्च संसारहेतुमिथ्याज्ञानविषयत्वं, मोक्षहेतुधीविषयत्वं वा, द्वन्द्वा च तावदन्यान्यत्वमर्थः, लक्षणमपि तदेव, प्रमेयं किम ? इत्याकाङ्क्षायामात्मादयो दर्शिताः, इत्यतो वचनभेदेऽपि नानन्वयः,"वेदाः प्रमाणम्"इत्यादावप्येवम्; अन्यथा आत्मसूत्रे विगतिः स्यात्,

तत्राऽऽत्मा तावत् प्रत्यक्षतो न गृह्यते, स किमाप्तोपदेशमात्रादेव प्रतिपद्यत इति? नेत्युच्यते। अनुमानाच्च प्रतिपत्तव्य इति। कथम्?—

**इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति ॥ १० ॥**

यज्जातीयस्यार्थस्य सन्निकर्षात् सुखमात्मोपलब्धवान्, तज्जातीयमेवार्थं पश्यन्नुपादातुमिच्छति। सेयमादातुमिच्छा एकस्यानेकार्थदर्शिनो दर्शनप्रतिसन्धानाद् भवति लिङ्गमात्मनः। * नियतविषये हि बुद्धिभेदमात्रे न सम्भवति देहान्तरवदिति। * एवमेकस्यानेकार्थदर्शिनो दर्शनप्रतिसन्धानाद्दुःखहेतौ द्वेषः। यज्जातीयो यस्यार्थः सुखहेतुः प्रसिद्धः, तज्जातीयमर्थम्पश्यन्नादातुं प्रयतते। सोऽयं प्रयत्न एकमनेकार्थदर्शिनं दर्शनप्रतिसन्धातारमन्तरेण न स्यात्।* नियतविषये बुद्धिभेदमात्रे न सम्भवति देहान्तरवदिति।* एतेन दुःखहेतौ प्रयत्नो व्याख्यातः। सुखदुःखस्मृत्या चायं तत्साधनमाददानः सुखमुपलभते, दुःखमुपलभते, सुखदुःखे वेदयते, पूर्वोक्त एव हेतुः। बुभुत्समानः खल्वयं विमृशति किंस्विदिति।

---

तच्च वक्ष्यते।—प्रमेयत्वेनैक्यमिति प्रतिपादनाय, अन्यतमाज्ञानेऽपि सापवर्ग इति प्रतिपादनाय वा प्रमेयमित्येकवचनमित्यन्ये, तच्चिन्त्यम्। अत्रापि आत्मा च शरीरञ्च इन्द्रियाणि च अर्थाश्च बुद्धिश्च मनश्च प्रवृत्तिश्च दोषाश्च प्रेत्यभावश्च फलञ्च दुःखञ्च अपवर्गश्चेति यथावचनं विग्रहं वर्णयन्ति। अत प्राधान्यात् कारणरूपप्रमेयषट्कमभिधाय कार्य्यरूपप्रमेयषट्कमभिहितम्; तत्र पूर्व्वपूर्व्वस्य प्राधान्यात् प्रथममुद्देश इति वदन्ति ॥ ९ ॥

तत्र प्रथमोद्दिष्टमात्मानं लक्षयति।—अत्र च आत्मनः प्रत्यक्षत्वाल्लिङ्गकथनमसङ्गतम्। न च शरीरातिरिक्ताऽऽत्मव्युत्पादनार्थं तत् इति वाच्यम्, अग्रिमपरीक्षावैयर्थ्याऽऽपत्तेः। लक्षणाकथनेन न्यूनत्वञ्च इति चेन्न, लिङ्गपदस्य लक्षणार्थत्वात्। न च

विमृशन् जानीते इदमिति। तदिदं ज्ञानं बुभुत्साविमर्शाभ्यामभिन्नकर्तृकं गृह्यमाणमात्मलिङ्गम्। पूर्वोक्त एव हेतुरिति। तत्र देहान्तरवदिति विभज्यते। यथाऽनात्मवादिनो देहान्तरेषु नियतविषया बुद्धिभेदा न प्रतिसन्धीयन्ते, तथैकदेहविषया अपि न प्रतिसन्धीयेरन्, अविशेषात्। सोऽयमेकसत्त्वस्य समाचारः, स्वयं दृष्टस्य स्मरणं, नान्यदृष्टस्येति। एवं खलु नानासत्त्वानां समाचारः, अन्यदृष्टमन्यो न स्मरतीति। तदेतदुभयमशक्यमनात्मवादिना व्यवस्थापयितुमिति। एवमुपपन्नमस्त्यात्मेति ॥ १० ॥

तस्य भोगाधिष्ठानम्—

**चेष्टेन्द्रियार्थाऽऽश्रयः शरीरम् ॥ ११ ॥**

कथं चेष्टाऽऽश्रयः ? ईप्सितं जिहासितं वाऽर्थमधिकृत्येप्साजिहासाप्रयुक्तस्य तदुपायानुष्ठानलक्षणा समीहा चेष्टा, सा यत्र वर्त्तते, तच्छरीरम्। कथमिन्द्रियाऽऽश्रयः ? यस्यानुग्रहेणानुगृहीतानि, उपघाते चोपहतानि स्वविषयेषु साध्व-

लिङ्गमित्येकवचनेन मिलितानां लक्षणत्वं प्रतीयते, तच्चायुक्तं वैयर्थ्यात् इति वाच्यम्, किं लक्षणम्? इत्याकाङ्क्षायामिच्छादीनामभिधानात् मिलितं लक्षणमिति प्रत्यायकाभावात्, तथा च प्रत्येकमेव लक्षणम्; अत्र ज्ञानेच्छाप्रयत्नानामात्ममात्रस्य लक्षणत्वं, सुखदुःखद्वेषाणां संसारिणो लक्षणत्वमिति ॥ १० ॥

क्रमप्राप्तं शरीरं लक्षयति।—अत्र चेष्टादीनां मिलितानाम् आश्रयत्वं न लक्षणं, वैयर्थ्यात्, अपि त्वाश्रयपदस्य प्रत्येकमन्वयाच्चेष्टाऽऽश्रयत्वादिलक्षणत्रये तात्पर्य्यं, चेष्टात्वञ्च प्रयत्नजन्यतावच्छेदको जातिविशेषः। न च शरीरावयवेऽतिव्याप्तिः, अन्त्यावयवित्वेन विशेषणात्। न च निष्क्रियशरीरेऽव्याप्तिः, तादृशे मानाभावात्, अत एवाऽऽह, इन्द्रियाऽऽश्रय इति।—इन्द्रियाऽऽश्रयत्वञ्च अवच्छेदकताऽऽख्यस्वरूपसम्बन्धविशेषेण, चक्षुष्मान् देवदत्तोऽयमित्यादिप्रतीतेः; अर्थाऽऽश्रयत्वमित्यत्रार्थशब्दो न रूपादिपरः, तदाश्रयत्वस्य घटादावतिव्याप्तेः, किन्तु सुखदुःखान्यतरपरः, अत एव

साधुषु वर्त्तन्ते, स एषामाश्रयः, तच्छरीरम्। कथमर्थाऽऽश्रयः ? यस्मिन्नायतने इन्द्रियार्थसन्निकर्षात् उत्पन्नयोः सुखदुःखयोः प्रतिसंवेदनं प्रवर्त्तते, स एषामाश्रयः, तच्छरीरमिति ॥११॥

भोगसाधनानि पुनः—

**घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः ॥१२॥**

जिघ्रत्यनेनेति घ्राणं, गन्धं गृह्णातीति। रसयत्यनेनेति रसनं, रसं गृह्णातीति। चष्टेऽनेनेति चक्षुः, रूपं पश्यतीति। स्पृशत्यनेनेति स्पर्शनं, त्वक्स्थानमिन्द्रियं त्वक्, तदुपचारः स्थानादिति। शृणोत्यनेनेति श्रोत्रं, शब्दं गृह्णातीति। एवं समाख्यानिर्वचनसामर्थ्याद् बोध्यं स्वविषयग्रहणलक्षणानीन्द्रियाणीति। भूतेभ्य इति नानाप्रकृतीनामेषां सतां विषयनियमः, नैकप्रकृतीनां, सति च विषयनियमे स्वविषयग्रहणलक्षणत्वं भवतीति ॥१२॥

---

भाष्यं, "यस्मिन्नायतने सुखदुःखयोः प्रतिसंवेदनं प्रवर्त्तते, स एषामाश्रयः, तच्छरीरम्" इति। वस्तुतस्त्वन्यतराऽऽश्रयत्वमपि न तल्लक्षणं, किन्तु सुखाऽऽश्रयत्वं, दुःखाऽऽश्रयत्वञ्चेति लक्षणद्वये तात्पर्य्यम्; शरीरस्य तदाश्रयत्वमवच्छेदकतासम्बन्धेन, हस्तादिरलक्ष्यत्वे लन्यावयवित्वेन विशेषणीयम्; स्वर्गिशरीरे नारकिशरीरे वृक्षादौ च सुखदुःख-स्वीकारान्नाव्याप्तिः। न च तच्छून्यखण्डशरीरेऽव्याप्तिः, सुखाद्याश्रयवृत्तिद्रव्यत्वव्याप्यव्याप्यजातिमत्त्वस्य विवक्षितत्वात्, तादृशजातिश्च मनुष्यत्वचैत्रत्वादिः, कल्पभेदेन नरसिंहशरीराणां भेदान्नरसिंहत्वजातिमादाय नरसिंहशरीरे लक्षणसमन्वय इति ॥ ११ ॥

इन्द्रियं विभजते लक्षयति च।—यद्यपि मनसोऽपीन्द्रियत्वमस्त्येव, तथाऽपि घ्राणेत्यादिबहिर्लक्षणपरत्वान्न दोषः, वस्तुतस्त्विन्द्रियाणीत्यस्य बहिरिन्द्रियाणीत्यर्थः। तेन भूतेभ्य इत्यस्य नासङ्गतिः। अत्र चैतानीन्द्रियाणीति वदता घ्राणाद्यन्यान्यत्वं लक्षणमिति सूचितम्; प्रत्यक्षजनकताऽवच्छेदकतया इन्द्रियत्वमखण्डोपाधिरूपमित्यन्ये, घ्राणत्वादिकं जातिविशेषरूपम्; कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रम्; घ्राणादीनि किं प्रकृतिकानि ? इत्याकाङ्क्षायामाह,—भूतेभ्य इति। तेनेन्द्रियाणामहङ्कारप्रकृतिकत्व

कानि पुनरिन्द्रियकारणानि—

**पृथिव्यापस्तेजो वायुराकाशमिति भूतानि ॥१३॥**

संज्ञाशब्दैः पृथगुपदेशो भूतानां विभक्तानां सुवचं कार्य्यं भविष्यतीति ॥ १३ ॥

इमे तु खलु—

**गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः ॥१४॥**

पृथिव्यादीनां यथाविनियोगं गुणाः, इन्द्रियाणां यथाक्रममर्था विषया इति ॥ १४ ॥

अचेतनस्य करणस्य बुद्धेर्ज्ञानं वृत्तिः, चेतनस्य कर्त्तुरुपलब्धिरिति युक्तिविरुद्धमर्थं प्रत्याचचाण इवेदमाह—

**बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् ॥ १५ ॥**

नाचेतनस्य करणस्य बुद्धेर्ज्ञानं भवितुमर्हति, तद्धि चेतनं

---

नेति मन्तव्यम्; व्युत्पादयिष्यते चेदं तृतीयाध्याये। अत्र घ्राणादीनां चतुर्णां पृथिव्यादिजन्यत्वं सम्भवति, श्रोत्रस्य कर्णशष्कुल्यवच्छिन्नाऽऽकाशस्य कर्णशष्कुल्याः जन्यत्वादेव जन्यत्वव्यपदेशः, अथवा अभिन्नानीति पूरयित्वा भूताभिन्नानीति व्याख्येयम्। घ्राणादीत्यस्योपलक्षणपरत्वे तु भूतेभ्य इति वहिरिन्द्रियपरम ॥ १२ ॥

भूतान्येव कानि ? इत्याकाङ्क्षायामाह।—कार्य्याऽऽरम्भे परस्परानपेक्षत्वसूचनायासमासकरणं, भूतत्वन्तु वहिरिन्द्रियग्रहणयोग्यविशेषगुणवत्त्वं, पृथिवीत्वादयस्तु जातिविशेषा इति ॥ १३ ॥

क्रमप्राप्तमर्थं विभजते लक्षयति च।—वैशेषिकाणां द्रव्यगुणकर्मस्वर्थशब्दाभिधेयत्वम्, अतः पञ्चानां गन्धादीनामेव कथं तत्त्वम् इत्याशङ्कानिरासाय तदर्था इत्युक्तम्; तेषामिन्द्रियाणामर्था विषया उद्दिष्टा अपि त एवेत्याशयः, इत्यञ्च तदर्थत्वं लक्षणमिति मन्तव्यम्; तच्छब्देन वहिरिन्द्रियाणि परामृश्यन्ते, तथा चैकवहिरिन्द्रियमात्रग्राह्यगुणत्वम् अर्थत्वं, वहिरिन्द्रियद्वयाग्राह्यवहिरिन्द्रियग्राह्यगुणत्वं तदर्थः। पृथिव्यादिगुणा इति लक्ष्यनिर्द्देशः। के के गुणाः ? इत्याकाङ्क्षायां गन्धेत्यादि। पृथिव्यादीनां गुणा इति षष्ठीसमासो भाष्यादिसम्मतः, तेन गुणगुणिनोरभेदो नेति सूचितम् ॥ १४ ॥

बुद्धिं लक्षयितुमाह।—अनर्थान्तरं समानार्थकं, न तु साङ्ख्यानामिव बुद्धितत्त्वस्य

स्यात् । एकश्चायं चेतनो देहेन्द्रियसङ्घातव्यतिरिक्त इति । प्रमेयलक्षणार्थस्यापि वाक्यस्यान्यार्थप्रकाशनमुपपत्तिसामर्थ्यादिति ॥ १५ ॥

स्मृत्यनुमानाऽऽगमसंशयप्रतिभास्वप्नज्ञानोहाः सुखाऽऽदिप्रत्यक्षमिच्छादयश्च मनसो लिङ्गानि तेषु सत्सु इयमपि—

**युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ॥ १६ ॥**

अनिन्द्रियनिमित्ताः स्मृत्यादयः करणान्तरनिमित्ताः भवितुमर्हन्तीति । युगपच्च खलु घ्राणादीनां गन्धादीनाञ्च सन्निकर्षेषु सत्सु, युगपज्ज्ञानानि नोत्पद्यन्ते । तेनानुमीयते, अस्ति तत्तदिन्द्रियसंयोगिसहकारिनिमित्तान्तरमव्यापि । यस्यासन्निधेर्नोत्पद्यते ज्ञानं, सन्निधेश्चोत्पद्यत इति । मनःसंयोगानपेक्षस्य हीन्द्रियार्थसन्निकर्षस्य ज्ञानहेतुत्वे युगपदुत्पद्येरन् ज्ञानानीति ॥ १६ ॥

क्रमप्राप्ता तु—

**प्रवृत्तिर्वाग्बुद्धिशरीराऽऽरम्भः ॥ १७ ॥**

मनोऽत्र बुद्धिरित्यभिप्रेतं, बुध्यतेऽनेनेति बुद्धिः ।

---

महत्तत्त्वापरपर्य्यायस्य परिणामविशेषो ज्ञानम् ; यथा चैतत्तथा वक्ष्यते, तथा च बुद्ध्यादिपदवाच्यत्वमनुभवसिद्धज्ञानत्वजातिरेव वा लक्षणमिति भावः ॥ १५ ॥

मनो लक्षयति ।—युगपत् एककाले,एकाऽऽत्मनीति पूरणीयम्; ज्ञानानामनुत्पत्तिर्यतः, स एव धर्म्मो ज्ञानकरणायुक्तं मनसो लिङ्गं लक्षणमित्यर्थः । तथा हि, चक्षुरादिषु विषयसम्बद्धेष्वपि यस्याऽऽसन्नभावादेकं न ज्ञानं जनयति, यत्सम्बन्धादपरञ्च ज्ञानं जनयति, तदेव चाणु निखिलज्ञानजनकं सुखादिसाक्षात्कारासाधारणकारणं, तदेकमेव लाघवात्सिद्धं, मन इत्यर्थः । एवमव्याख्याने च लक्षणप्रकरणे प्रमाणोपन्यासोऽसङ्गतः स्यादिति । अन्ये तु, सति धर्म्मिणि लक्षणचिन्ता, इत्यतो मनःसाधनाय युगपदिति सूत्रम्, इत्थञ्च मनःसिद्धौ निःस्पर्शाणुत्वादिकं लक्षणं सुकरमित्याशय इति वदन्ति ॥ १६ ॥

प्रवृत्तिं लक्षयति विभजते च ।—अत्र च, प्रवृत्तित्वं रागजन्यताऽवच्छेदको जाति-

सोऽयमारम्भः शरीरेण वाचा मनसा च, पुण्यं पापञ्च दशविधम्; तदेतत् कृतभाष्यं द्वितीयसूत्र इति ॥ १७ ॥

## प्रवर्त्तनालक्षणा दोषाः ॥ १८ ॥

प्रवर्त्तना प्रवृत्तिहेतुत्वम्। ज्ञातारं हि रागादयः प्रवर्त्तयन्ति पुण्ये पापे वा। यत्र मिथ्याज्ञानं, तत्र रागद्वेषाविति। प्रत्यात्मवेदनीया ह्येमे दोषाः। कस्मात् लक्षणतो निर्द्दिश्यन्त इति? कर्म्मलक्षणाः खलु रक्तद्विष्टमूढाः। रक्तो हि तत्कर्म्म कुरुते, येन कर्म्मणा सुखं दुःखं वा भजते। तथा द्विष्टस्तथा मूढ़ इति। दोषा रागद्वेषमोहा इत्युच्यमाने बहुनोक्तं भवतीति ॥ १८ ॥

## पुनरुत्पत्तिः प्रेत्यभावः ॥ १९ ॥

उत्पन्नस्य क्वचित् सत्त्वनिकाये मृत्वा या पुनरुत्पत्तिः, स प्रेत्यभावः। उत्पन्नस्य सम्बद्धस्य। सम्बन्धस्तु देहेन्द्रियमनो-

---

विशेषः, स एव लक्षणम्, ईश्वरकृतेरपि लक्ष्यत्वे यत्नत्वमेव तथा। जीवनयोनियत्ने निवृत्तौ च मानाभावात्, तत्सद्भावेऽपि प्रवृत्तित्वं निश्चयत्वसाधारणं,तद्व्याप्यत्वं वा तथा, द्वन्द्वानन्तरश्रुताऽऽरम्भपदस्य प्रत्येकमन्वयाद्वागारम्भादिभेदेन त्रिविधा प्रवृत्तिः। बुद्धिशब्देनात्र मनोऽभिप्रेतमिति भाष्यम्। शरीरशब्दश्च चेष्टावत्त्वेन हस्तादिसाधारणः; तथा च वचनानुकूलो यत्नो वागारम्भः, शरीरगोचरो यत्नश्चेष्टाऽनुकूलयत्नो वा शरीराऽऽरम्भः, एतद्द्वयभिन्नो यत्नो बुद्ध्यारम्भः; स च ध्यानोदयादेव चाक्षुदर्शनाद्यनुकूलः स्पष्टीभविष्यति। प्राञ्चस्तु, सामान्यविशेषलक्षणे चादृष्टजनकत्वं निवेशयन्ति। इयञ्च कारणरूपा प्रवृत्तिः, कार्य्यरूपा तु धर्म्माधर्म्माऽऽत्मिकेति ॥ १७ ॥

दोषं लक्षयति।—दोषा इति बहुवचनं रागद्वेषमोहाऽऽत्मकलक्ष्यत्रयज्ञापनाय, प्रवर्त्तना प्रवृत्तिजनकत्वं तदेव लक्षणं येषाम्; यद्यपीदं शरीरादृष्टेश्वरेच्छादावतिव्याप्तं, तथाऽपि लौकिकमानसप्रत्यक्षविषयत्वे सतीति विशेषणीयं, यागादिगोचरप्रमावारणाय प्रमाऽन्यत्वे सतीति विशेषयन्ति ॥ १८ ॥

प्रेत्यभावं लक्षयति।—प्रेत्य मृत्वा, भावो जननं, प्रेत्यभावः। अत्र पुनरित्यनेनाभ्यासकथनात्, प्रागुत्पत्तिः, ततो मरणं, तत उत्पत्तिरिति प्रेत्यभावोऽयमनादिरप-

दुःखसंवेदनाभिः । पुनरुत्पत्तिः पुनर्देहादिभिः सम्बन्धः । पुनरित्यभ्यासाभिधानम् । यत्र क्वचित् प्राणभृन्निकाये वर्त्तमानः पूर्वोपात्तान् देहादीन् जहाति, तत् प्रैति । यत् तत्रान्यत्र वा देहादीनन्यानुपादत्ते, तद्भवति प्रेत्यभावो मृत्वा पुनर्जन्म । सोऽयं जन्ममरणप्रबन्धाभ्यासोऽनादिरपवर्गान्तः प्रेत्यभावो वेदितव्य इति ॥ १९ ॥

**प्रवृत्तिदोषजनितोऽर्थः फलम् ॥ २० ॥**

सुखदुःखसंवेदनं फलम् । सुखविपाकं कर्म दुःखविपाकञ्च । तत्पुनर्देहेन्द्रियविषयबुद्धिषु सतीषु भवतीति सह देहादिभिः फलमभिप्रेतम् । तथा हि प्रवृत्तिदोषजनितोऽर्थः फलमेतत् सर्वं भवति । तदेतत् फलमुपात्तमुपात्तं हेयं, त्यक्तं त्यक्तमुपादेयमिति नास्य हानोपादानयोर्निष्ठा पर्य्यवसानं वाऽस्ति । स खल्वयं फलस्य हानोपादानस्रोतसोह्यते लोक इति ॥ २० ॥

अथैतदेव—

**बाधनालक्षणं दुःखमिति ॥ २१ ॥**

बाधना पीड़ा ताप इति । तयाऽनुविद्धमनुषक्तमवि-

---

वर्गान्तः । एतज्ज्ञानस्य वैराग्य उपयुज्यते इति प्रेत्येति न व्यर्थम् ; तदीयमरणञ्च तदीयजीवनादृष्टनाशः, तदीयचरमप्राणसंयोगध्वंसः, तदीयप्राणध्वंसो वा ; तदीयोत्पत्तिश्च तदीयविजातीयशरीराद्यप्राणसंयोग इति ॥ १९ ॥

फलं लक्षयति ।—अत्र च मुख्य फलं सुखदुःखोपभोगः, तथा च भाष्यम् ;—"सुखदुःखसंवेदनं फलम्" । तत्र च धर्म्माधर्म्माऽऽत्मकप्रवृत्तेः प्रयोजकत्वात्, तत्र च दोषस्य हेतुत्वात्, प्रवृत्तिदोषजनित इत्युक्तम् ; भक्षणन्तु सुखदुःखान्यतरसाक्षात्कार इति । गौणं फलन्तु शरीरादिकं सर्वमेव । तथा च भाष्यम् ;—"तत्पुनर्देहेन्द्रियबुद्धिषु सतीषु भवति इति सह देहेन्द्रियादिभिः फलमभिप्रेतम् ; तथा हि प्रवृत्तिदोषजनितोऽर्थः फलमेतत्सर्वं भवति" इति । इत्थञ्च जन्यत्वमेव फलत्वम् ; प्रवृत्तिदोषजनित इति तु निर्वेदोपयोगादुक्तम ॥ २० ॥

दुःखं लक्षयति ।—बाधना पीडा, तदेव लक्षणं स्वरूपं यस्य तत् । यथा चानु-

निर्भागेण वर्त्तमानं दुःखयोगाद्दुःखमिति। सोऽयं सर्वं दुःखेनानुविद्धं बुहन्तमिति पश्यन् दुःखं जिहासुर्जन्मनि दुःखदर्शी निर्विद्यते। निर्विण्णो विरज्यते। विरक्तो विमुच्यते ॥ २१ ॥

यत्र तु निष्ठा सोऽयं, यत्र तु पर्य्यवसानम् ।—

## तदत्यन्तविमोक्षोऽपवर्गः ॥ २२ ॥

तेन दुःखेन जन्मनाऽत्यन्तं विमुक्तिरपवर्गः। अन्यथा कथमुपात्तस्य जन्मनो हानमन्यस्य चानुपादानम्। एतामवस्थामपर्य्यन्तामपवर्गं वेदयन्तेऽपवर्गविदः। अभयदमजरममृत्युपदं ब्रह्मक्षेमप्राप्तिरिति नित्यं सुखमात्मनो महत्त्ववन्मोक्षे व्यज्यते, तेनाभिव्यक्तेनात्यन्तं विमुक्तः सुखी भवतीति केचित् मन्यन्ते। तेषां प्रमाणाभावादनुपपत्तिः। न प्रत्यक्षं नानुमानं नागमो वा विद्यते, नित्यं सुखमात्मनो महत्त्ववन्मोक्षेऽभिव्यज्यत इति। नित्यस्याभिव्यक्तिः संवेदनं ज्ञानमिति। तस्य हेतुर्वाच्यः; यतः तदुपपद्यत इति। * सुखवन्नित्यमिति चेत् संसारस्थस्य मुक्तेनाऽविशेषः। * यथा मुक्तः सुखेन तत् संवेदनेन च सन्नित्येनोपपन्नः, तथा संसारस्थोऽपि प्रसज्यत इति। उभयस्य नित्यत्वात्। * अभ्यनुज्ञाने च धर्माधर्मफलेन साहचर्य्यं यौगपद्यं गृह्येत। * यदिदमुत्पत्तिस्थानेषु धर्माधर्मफलं सुखं दुःखं वा संवेद्यते पर्य्यायेण, तस्य च नित्यं स्वसंवेदनस्य च सह भावो यौगपद्यं गृह्येत। न सुखाभावो नानभिव्यक्तिरस्ति। उभयस्य नित्यत्वात्। * अनित्यत्वे हेतुवचनम्। * अथ मोक्षे नित्यस्य सुखस्य संवेदनमनित्यम्; यत उत्पद्यते,

---

भवसिद्धदुःखत्वजातिरेव लक्षणम्। शरीरेन्द्रियार्थेषु दुःखसाधनत्वात् सुखे च दुःखानुषङ्गात् दुःखव्यवहारो गौण इति; अत एवाग्रिमसूत्रे तत्पदेन मुख्यदुःखपरामर्शः ॥ २१ ॥

अपवर्गं लक्षयति।—तस्य दुःखस्य, अत्यन्तविमोक्षः स्वसमानाधिकरणदुःखा-

स हेतुर्वाच्यः। *आत्ममनःसंयोगस्य निमित्तान्तरसहितस्य हेतुत्वम्।* आत्ममनःसंयोगो हेतुरिति चेत्, एवमपि तस्य सहकारिनिमित्तान्तरं वचनीयमिति। *धर्म्मस्य कारणवचनम्।* यदि धर्मो निमित्तान्तरं, तस्य हेतुर्वाच्यः, यत उत्पद्यत इति। *योगसमाधिजस्य कार्य्यावसायनिरोधात् प्रलये संवेदननिवृत्तिः।* यदि योगसमाधिजो धर्मो हेतुः, तस्य कार्य्यावसायनिरोधात् प्रक्षये संवेदनमत्यन्तं निवर्त्तेत। *असंवेदने चाविद्यमानाविशेषः।* यदि धर्मक्षयात् संवेदनोपरमः, नित्यं सुखं न संवेद्यत इति। किं विद्यमानं न संवेद्यते, अथाविद्यमानम्? इति। नानुमानं विशिष्टेऽस्तीति। *अप्रक्षयश्च धर्म्मस्य निरनुमानमुत्पत्तिधर्मकत्वात्।* योगसमाधिजो धर्मो न क्षीयते इति नास्त्यनुमानम्। उत्पत्तिधर्मकमनित्यमिति विपर्य्ययस्य तु अनुमानम्। यस्य तु संवेदनोपरमो नास्ति, तेन संवेदनेन हेतुर्नित्य इत्यनुमेयम्। नित्ये च मुक्तसंसारस्थयोरविशेष इत्युक्तम्। यथा मुक्तस्य नित्यं सुखं तत्संवेदनहेतुश्च। संवेदनस्य तूपरमो नास्ति, कारणस्य नित्यत्वात्; तथा संसारस्थस्यापीति। एवञ्च सति धर्माधर्मफलेन सुखदुःखसंवेदनेन साहचर्य्यं गृह्येतेति। *शरीरादिसम्बन्धः प्रतिबन्धहेतुरिति चेत् न, शरीरादीनामुपभोगार्थत्वात्, विपर्य्ययस्य चाननुमानात्।* स्यान्मतं संसारावस्थस्य शरीरादिसम्बन्धो नित्यसुखसंवेदनहेतोः प्रतिबन्धकस्तेनाविशेषो नास्तीति। एतच्चायुक्तम्। शरीरादय उपभोगार्थाः, ते भोगप्रतिबन्धं करिष्यन्तीत्यनुपपन्नम्। न चास्त्यनुमानमशरीरस्याऽऽत्मनो भोगः कश्चिदस्तीति। *इष्टाभिगमार्था प्रवृत्तिरिति चेत् न, अनिष्टोपरमार्थत्वात्।* इष्टाधिगमार्थो मोक्षोपदेशः प्रवृत्तिश्च मुमुक्षूणां, नोभयमनर्थकमिति। एतच्चायुक्तम्।

भाक्तः प्रत्ययो भवति। न त्वणूनां गृह्यमाणपृथक्त्वानां कारणतः पृथक्त्वस्याग्रहणात् भाक्त एकप्रत्ययोऽतीन्द्रियत्वादणूनामिति। इदमेव च परीक्ष्यते।—किमेकप्रत्ययोऽणुसञ्चयविषय आहो-स्विन्नेति? अणुसञ्चय एव सेनावनाङ्गानि, न च परीक्ष्यमाण-मुदाहरणमिति युक्तम्। साध्यत्वादिति। * दृष्टमिति चेन्न, तद्विषयस्य परीक्षोपपत्तेः। * यदपि मन्यते, दृष्टमिदं सेना वनाङ्गानां पृथक्त्वस्याग्रहणादभेदेनैकमिति ग्रहणम्। न च दृष्टं शक्यं प्रत्याख्यातुमिति। तच्च नैवम्; तद्विषयस्य परीक्षोप-पत्तेः; दर्शनविषय एवायं परीक्ष्यते। योऽयमेकमिति प्रत्ययो दृश्यते, स परीक्ष्यते, किं द्रव्यान्तरविषयो वाऽथाणुसञ्चयविषय इति; अत्र दर्शनमन्यतरस्य साधकं न भवति। नानाभावे चाणूनां पृथक्त्वस्याग्रहणादभेदेनैकमिति ग्रहणम्, अतस्मिंस्त-दिति प्रत्ययः। यथा स्थाणौ पुरुष इति। ततः किम्, अतस्मिं-स्तदिति प्रत्ययस्य प्रधानापेक्षितत्वात् प्रधानसिद्धिः। स्थाणौ पुरुष इति प्रत्ययस्य किं प्रधानम्? योऽसौ पुरुषे पुरुषप्रत्ययः, तस्मिन् सति पुरुषसामान्यग्रहणात् स्थाणौ पुरुषोऽयमिति। एवं नानाभूतेष्वेकमिति प्रामाण्यग्रहणात् प्रधाने सति भवितु-मर्हति। प्रधानञ्च सर्वस्याग्रहणादिति नोपपद्यते, तस्मादभिन्न एवायमभेदप्रत्यय एकमिति। * इन्द्रियान्तरविषयेष्वभेदप्रत्ययः प्रधानमिति चेत्, न, विशेषहेत्वभावात् दृष्टान्ताव्यवस्था। * श्रोत्रादिविषयेषु शब्दादिष्वभिन्नेष्वेकप्रत्ययः प्रधानमनेकस्मिन्नेक-प्रत्ययस्येति। एवञ्च सति दृष्टान्तोपादानं न व्यवतिष्ठते, विशेषहेत्वभावात्। अणुषु सञ्चितेषु एकप्रत्ययः किमतस्मिं-स्तत्प्रत्ययः, स्थाणौ पुरुषप्रत्ययवत्। अथार्थस्य तथाभावात् तस्मिंस्तदिति प्रत्ययः, यथा शब्दस्यैकत्वादेकः शब्द इति।

कारणतश्चोपपत्तेः, विजातीयसंयोगमन्तरेणैवावयवावयविभावाभावेऽप्युपपत्तेः, चक्र

विशेषहेतुपरिग्रहणमन्तरेण दृष्टान्तौ संशयमापादयत इति । कुम्भवत् सञ्चयमात्रं गन्धादयोऽपीत्यनुदाहरणं गन्धादय इति । एवं परिमाणसंयोगस्पन्दजातिविशेषप्रत्यया अप्यनुयोक्तव्यास्तेषु चैवं प्रसङ्ग इति । * एकत्वबुद्धिस्तस्मिंस्तदिति प्रत्यय इति विशेषहेतुर्महदिति प्रत्ययेन सामानाधिकरण्यात् * एकमिदं महच्चेति एकविषयौ प्रत्ययौ समानाधिकरणौ भवतः । तेन विज्ञायते, यन्महत् तदेकमिति । अणुसमूहातिशयग्रहणं महत्प्रत्यय इति चेत्, सोऽयममहत्स्वणुषु महत्प्रत्ययोऽतस्मिंस्तदिति प्रत्ययो भवतीति । किञ्चातः, अतस्मिंस्तदितिप्रत्ययस्य प्रधानापेक्षितत्वात् प्रधानसिद्धिरिति भवितव्यं महत्येव महत्प्रत्ययेनेति । * अणुः शब्दो महानिति च व्यवसायात् प्रधानसिद्धिरिति चेत्, न ; मन्दतीव्रताग्रहणमियत्ताऽनवधारणात् * यथा द्रव्ये । अणुः शब्दोऽल्पो मन्द इत्येतस्य ग्रहणं, महान् शब्दः पटुतीव्र इत्येतस्य ग्रहणम् । कस्मात् ?—इयत्ताऽनवधारणात् । न ह्ययं महान् शब्द इति व्यवस्यन्नियानयमित्यवधारयति । यथा बदरामलकबिल्वादीनि । संयुक्ते इमे इति च द्वित्वसमानाऽऽश्रयं प्राप्तिग्रहणम् । द्वौ समुदायावाश्रयः संयोगस्येति चेत्, कोऽयं समुदायः ? प्राप्तिरनेकस्य, अनेका वा प्राप्तिरेकस्य समुदाय इति चेत्, प्राप्तेरग्रहणं प्राप्त्याश्रितायाः । संयुक्ते इमे वस्तुनी इति नात्र द्वे प्राप्ती संयुक्ते गृह्येते, * अनेकसमूहः समुदाय इति चेन्न, द्वित्वेन समानाधिकरणस्य ग्रहणात् * द्वाविमौ संयुक्तावर्थाविति ग्रहणे सति नानेकसमुदायाऽऽश्रयः संयोगो गृह्यते । न च द्वयोरण्वोर्ग्रहणमस्ति । तस्मान्महतो द्वित्वाऽऽश्रयभूते द्रव्ये संयोगस्य स्थानमिति । * प्रत्यासत्तिः

---

पूर्वोक्तां युक्तिमेव साधीयसीं मन्यमानस्तत्र परोक्तं समाधानमाशङ्क्य दूषयति । अतिदूरस्थेष्वसमुपेक्षकत्वादेः अप्रत्यक्षलेऽपि सेनावनादिप्रत्यक्षवत् एकपरमाणोः अप्रत्यक्षलेऽपि

प्रतीघातावसाना संयोगो नार्थान्तरमिति चेत्, न ; अर्थान्तरहेतुत्वात् संयोगस्य * शब्दरूपादिस्पन्दानां हेतुः संयोगः। न च द्रव्ययोर्गुणान्तरोपजननमन्तरेण शब्दे रूपादिषु स्पर्शे च कारणत्वं गृह्यते। तस्माद् गुणान्तरं * प्रत्ययविषयस्यार्थान्तरं तत्प्रतिषेधो वा * कुण्डली गुरुः, अकुण्डलश्छात्र इति संयोगबुद्धेश्च यद्यर्थान्तरं न विषयः। अर्थान्तरप्रतिषेधस्तर्हि विषयः। तत्र प्रतिषिध्यमानवचनम्। संयुक्ते द्रव्ये इति यदर्थान्तरमन्यत्र दृष्टमिह प्रतिषिध्यते। तद्वक्तव्यमिति। द्वयोर्महतोराश्रितस्य ग्रहणान्नाण्वाश्रय इति जातिविशेषस्य प्रत्ययानुवृत्तिलिङ्गस्याप्रत्याख्यानम्। प्रत्याख्याने वा प्रत्ययव्यवस्थानुपपत्तिः। व्यधिकरणस्यानभिव्यक्तेरधिकरणवचनम्। * अणुसमवस्थानं विषय इति चेत्, प्राप्ताप्राप्तसामर्थ्यवचनम्। * किमप्राप्ते अणुसमवस्थाने तदाश्रयो जातिविशेषो गृह्यते, अथ प्राप्ते इति। * अप्राप्ते ग्रहणमिति चेत्, व्यवहितस्याणुसमावस्थानस्याप्युपलब्धिप्रसङ्गः। * ते व्यवहितेऽणुसमवस्थाने तदाश्रयो जातिविशेषो गृह्येत। * प्राप्ते ग्रहणमिति चेत्, मध्यपरभागयोरप्राप्तावनभिव्यक्तिः, * यावत् प्राप्तं भवति तावत्यभिव्यक्तिरिति चेत् तावतोऽधिकरणत्वमणुसमवस्थानस्य। यावति प्राप्ते जातिविशेषो गृह्यते, तावदस्याधिकरणमिति प्राप्तं भवति। तत्रैकसमुदाये प्रतीयमानेऽर्थभेदः। एवञ्च सति योऽयमणुसमुदायो वृक्ष इति प्रतीयते, तत्र वृक्षबहुत्वं प्रतीयेत। यत्र यत्र ह्यणुसमुदायस्य भागे वृक्षत्वं गृह्यते, स स वृक्ष इति। तस्मात् समुदिताणुसमवस्थानस्यार्थान्तरस्य जातिविशेषस्याभिव्यक्तिविषयत्वादवयव्यर्थान्तरभूत इति ॥ ३४ ॥

---

तत्समूहरूपघटादेः प्रत्यक्षं स्यादिति चेन्न, तदपि अणूनामतीन्द्रियत्वात् प्रत्यक्षे महत्त्वस्य हेतुत्वात् सत्त्वात् सेनावनादिप्रत्यक्षं युज्यते, न त्वणूनां महत्त्वाभावादिति भावः ॥३४॥

समाप्तमवयविपरीक्षाप्रकरणम्।

परीक्षितं प्रत्यक्षम्, अनुमानमिदानीं परीक्ष्यते,—

**रोधोपघातसादृश्येभ्यो व्यभिचारादनुमानमप्रमाणम् ॥ ३५ ॥**

अप्रमाणमिति। एकदाप्यर्थस्य न प्रतिपादकमिति। रोधादपि नदी पूर्णा गृह्यते, तदा चोपरिष्टाद्वृष्टो देव इति मिथ्याऽनुमानम्। नीडोपघातादपि पिपीलिकाऽण्डसञ्चारो भवति, तदा च भविष्यति वृष्टिरिति मिथ्याऽनुमानमिति। पुरुषोऽपि मयूरवासितमनुकरोति, तदाऽपि शब्दसादृश्यान्मिथ्याऽनुमानं भवति ॥ ३५ ॥

**नैकदेशत्राससादृश्येभ्योऽर्थान्तरभावात् ॥ ३६ ॥**

नायमनुमानव्यभिचारः। अननुमाने तु खल्वयमनुमानाभिमानः। कथम्?—नाविशिष्टो लिङ्गं भवितुमर्हति। पूर्वो-

---

अवसरेण क्रमप्राप्तमनुमानं परीक्षितुं पूर्वपक्षयति।—अनुमानस्य त्रैविध्यं पूर्वमुक्तम्, तत्र त्रिविधस्याप्रामाण्ये साधितेऽनुमानमप्रमाणमर्थात् सिद्धमित्याशयेनेदम्। अनुमानम् अनुमानत्वेनाभिमतं, न प्रमाणं प्रमितिकरणं, व्यभिचारिहेतुकत्वात्, तत्र त्रिविधे व्यभिचारं दर्शयति, रोधेत्यादिना।—नदीवृद्ध्या पिपीलिकाऽण्डसञ्चारेण मयूररुतेन च वृष्ट्यनुमानं त्रिविधमुदाहरणं न सम्भवति, नदीरोधाधीननदीवृद्ध्या आश्रमोपघाताधीनपिपीलिकाऽण्डसञ्चारेण मनुष्यकर्तृकमयूररुतसदृशरुतेन व्यभिचारात्; पिपीलिकाऽण्डसञ्चारस्य वृष्टिहेतुत्वाभिप्रायेणेदम्; अथवा लक्षणसूत्रे पूर्ववत् पूर्वकालीनसाध्यानुमापकं, शेषवदुत्तरकालीनसाध्यानुमापकं, सामान्यतो दृष्टं विद्यमानसाध्यस्याप्यनुमापकमित्यर्थ इत्याशयः; एतेन त्रैकालिकसाध्यानुमापकत्वं न सम्भवति; परे तु पिपीलिकाऽण्डसञ्चारेणात्यन्तोष्मानुमानं, ततश्च महाभूतक्षोभानुमानं, तस्य च वृष्टिहेतुत्वात्तेन वृष्ट्यनुमानमिति वदन्ति। एवमन्यत्रापि व्यभिचारशङ्कासम्भवादव्यभिचारनिश्चयस्यानुमितिहेतोरेव दुर्लभत्वात् तत्प्रामाण्यं न सम्भवतीत्याशयः ॥ ३५ ॥

समाधत्ते।—अनुमानाप्रामाण्यं न युक्तम्, एकदेशरोधजनदीवृद्धेस्त्रासजपिपी-

दकविशिष्टं खलु वर्षोदकं शीघ्रतरत्वं स्रोतसो बहुतरफेनफल-पर्णकाष्ठाऽऽदिवहनञ्चोपलभमानः पूर्णत्वेन नद्या उपरि वृष्टो देव इत्यनुमिनोति, नोदकवृद्धिमात्रेण। पिपीलिकाप्रायस्याण्ड-सञ्चारे भविष्यति वृष्टिरित्यनुमीयते, न कासाञ्चिदिति। नेदं मयूरवाशितं, तत्सदृशोऽयं शब्दः, इति विशेषापरिज्ञानान्मिथ्या-ऽनुमानमिति। यस्तु सदृशात् विशिष्टाच्छब्दाद्विशिष्टं मयूर-वाशितं गृह्णाति, तस्य विशिष्टोऽर्थो गृह्यमाणो लिङ्गम्। यथा सर्पाऽऽदीनामिति। सोऽयमनुमातुरपराधः, नानुमानस्य; योऽर्थ-विशेषेणानुमेयमर्थमविशिष्टार्थदर्शनेन बुभुत्सत इति। ॥३८॥

त्रिकालविषयमनुमानं त्रैकाल्यग्रहणादित्युक्तम्; अत्र च,—

**वर्त्तमानाभावः पततः पतितपतितव्यकालोप-पत्तेः ॥ ३९ ॥**

वृन्तात् प्रच्युतस्य फलस्य भूमौ प्रत्यासीदतो यदूर्द्ध्वं, स पतितोऽध्वा, तत्संयुक्तः कालः पतितकालः। योऽधस्तात्, स पतितव्योऽध्वा, तत्संयुक्तः कालः पतितव्यकालः। नेदानीं तृतीयोऽध्वा वर्त्तते, यत्र पततीति वर्त्तमानः कालो गृह्येत। तस्माद्वर्त्तमानः कालो न विद्यत इति ॥ ३९ ॥

पिपीलिकाऽण्डसञ्चारान्मयूरवत्सदृशरवताञ्च लिङ्गीभूतानां नदीवृद्ध्यादीनां भिन्नत्वान्न दोषः, न च सर्वत्र व्यभिचारशङ्का, तथात्वे तस्यां तर्कस्य तदपनयनान्न दोष इत्याशयः ॥३८॥

समाप्तमनुमानपरीक्षाप्रकरणम् ।

अनुमानस्य त्रिकालविषयत्वमभिमतं, तन्न युक्तम्; वर्त्तमानाभावेन तदधीनज्ञानयोरतीतानागतयोरभावेन कालत्रयाऽऽत्मकविषयाभावादित्याशयेन वर्त्तमान-परीक्षाप्रकरणमारभमाणो वर्त्तमानमाक्षिपते। वर्त्तमानाभावः अतीतानागतभिन्न-कालत्वाभावः उपपादयति, पततः इति।—पततः फलादेर्वृन्तावधिकः कश्चन देशः पतिताध्वा, भूम्यवधिकः कश्चन पतितव्याध्वा, न तु वर्त्तमानस्य प्रसङ्गोऽपीति भावः ॥ ३९ ॥

**तयोरप्यभावो वर्त्तमानाभावे तदपेक्षत्वात् ॥३८॥**

नाध्वव्यङ्ग्यः कालः, किं तर्हि ?—क्रियाव्यङ्ग्यः, पततीति । यदा पतनक्रिया व्युपरता भवति, स कालः पतितकालः । यदोत्पत्स्यते, स पतितव्यकालः । यदा द्रव्ये वर्त्तमाने क्रिया गृह्यते, स वर्त्तमानः कालः । यदि चायं द्रव्ये वर्त्तमानं पतनं न गृह्णाति, कस्योपरममुत्पत्स्यमानतां वा प्रतिपद्यते । पतितः काल इति भूता क्रिया, पतितव्यः काल इति चोत्पत्स्यमाना क्रिया, उभयोः कालयोः क्रियाहीनं द्रव्यमधःपततीति क्रियासम्बद्धम् । सोऽयं क्रियाद्रव्ययोः सम्बन्धं गृह्णातीति वर्त्तमानः कालः । तदाश्रयौ चेतरौ कालौ तदभावे न स्यातामिति ॥३८॥

अथापि,—

**नातीतानागतयोरितरेतरापेक्षा सिद्धिः ॥३९॥**

यद्यतीतानागतावितरेतरापेक्षौ सिध्येतां, प्रतिपद्येमहि वर्त्तमानविलोपम् । नातीतापेक्षाऽनागतसिद्धिः । नाप्यनागतापेक्षा अतीतसिद्धिः । कया युक्त्या ?—केन कल्पेनाऽतीतः ?—कथमतीतापेक्षाऽनागतसिद्धिः ?—कया युक्त्या ?—केन च कल्पेनानागतः ?—कथमनागतापेक्षाऽतीतसिद्धिः ?—नैतच्छक्यं निर्वक्तुम् । अव्याकरणीयः एष वर्त्तमानलोपः । यच्च मन्येत, ह्रस्वदीर्घयोः स्थलनिम्नयोश्छायाऽऽतपयोश्च यथेतरेतरापेक्षया सिद्धिः । एवमतीतानागतयोरिति । तन्नोपपद्यते, विशेषहेत्वभावात् । दृष्टान्तवत् प्रतिदृष्टान्तोऽपि प्रसज्यते । यथा रूपस्पर्शौ गन्धरसौ नेतरेतरापेक्षौ सिध्येते, एवमतीतानागताविति ।

---

समाधत्ते ।—वर्त्तमानाभावे तयोरतीतानागतयोरप्यभावः स्यात्, तयोस्तदपेक्षत्वात्, वर्त्तमानध्वंसप्रतियोगित्वं ह्यतीतत्वं, वर्त्तमानप्रागभावप्रतियोगित्वं ह्यनागतत्वमिति भावः ॥ ३८ ॥

नेतरेतरापेक्षा कस्यचित् सिद्धिरिति । यस्मादेकाभावेऽन्यतराभावादुभयाभावः । यद्येकस्यान्यतरापेक्षासिद्धिः, अन्यतरस्येदानीं किमपेक्षा ? यद्यन्यतरस्यैकापेक्षासिद्धिः, एकस्येदानीं किमपेक्षा ? एवमेकस्याभावेऽन्यतरन्न सिध्यतीत्युभयाभावः प्रसज्यते ॥ ३९ ॥

अर्थसद्भावव्यङ्ग्यश्चायं वर्त्तमानः कालः, विद्यते द्रव्यं, विद्यते गुणः, विद्यते कर्मेति । यस्य चायं नास्ति, तस्य,—

**वर्त्तमानाभावे सर्वाग्रहणं प्रत्यक्षानुपपत्तेः ॥ ४० ॥**

प्रत्यक्षमिन्द्रियार्थसन्निकर्षजम् । न चाविद्यमानमसदिन्द्रियेण सन्निकृष्यते । न चायं विद्यमानं सत् किञ्चिदनुजानाति । प्रत्यक्षनिमित्तं प्रत्यक्षविषयः प्रत्यक्षज्ञानं सर्वन्नोपपद्यते । प्रत्यक्षानुपपत्तौ च तत्पूर्वकत्वात् अनुमानाऽऽगमयोरनुपपत्तिः । सर्वप्रमाणविलोपे सर्वग्रहणं न भवतीति । उभयथा च वर्त्तमानः कालो गृह्यते, क्वचिदर्थसद्भावव्यङ्ग्यः, यथा,—द्रव्ये द्रव्यमिति । क्वचित् क्रियासन्तानव्यङ्ग्यः, यथा,—पचति छिनत्तीति । नानाविधा चैकार्था क्रिया क्रियासन्तानः, क्रियाऽभ्यासश्च । नानाविधा चैकार्था क्रिया पचतीति । स्थाल्यधिश्रयणमुदकसेचनं तण्डुलावपनमेधोऽपसर्पणमग्न्यभिज्वालनं दर्वीघट्टनं मण्डस्रावणमधोऽवतारणमिति । छिनत्तीति क्रियाऽभ्यासः, उद्यम्योद्यम्य परशुं दारुणि निपातयन् छिनत्तीत्युच्यते ॥ ४१ ॥

---

ननु तयोः परस्परापेक्षयैव सिद्धेर्न वर्त्तमानापेक्षेत्यत आह । अन्योऽन्याऽऽश्रयादिति भावः ॥ ३९ ॥

तयोरप्यभावे का क्षतिः ?—अत आह ।—वर्त्तमानाभावे प्रत्यक्षं नोपपद्यते, प्रत्यक्षस्य वर्त्तमानविषयत्वात् ; अत एवाऽऽह,—"सम्बद्धं वर्त्तमानञ्च गृह्यते चक्षुरादिना" इति । प्रत्यक्षाभावे च सर्वमेव ग्रहणं ज्ञानं न स्यात्, प्रत्यक्षमूलकत्वादितरज्ञानानामिति भावः ॥ ४० ॥

यच्चेदं पच्यमानं छिद्यमानञ्च तत् क्रियमाणम्; तस्मिन् क्रियमाणे,—

**कृतताकर्त्तव्यतोपपत्तेस्तूभयथाग्रहणम् ॥४१॥**

क्रियासन्तानोऽनारब्धश्चिकीर्षितोऽनागतः कालः, पक्ष्यतीति। प्रयोजनावसानः क्रियासन्तानोपरमोऽतीतः कालः, अपाक्षीदिति। आरब्धक्रियासन्तानो वर्त्तमानः कालः, पचतीति। तत्र या उपरता, सा कृतता। या चिकीर्षिता, सा कर्त्तव्यता। या विद्यमाना, सा क्रियमाणता। तदेवं क्रियासन्तानस्थस्त्रैकाल्यसमाहारः पचति पच्यत इति वर्त्तमानग्रहणेन गृह्यते। क्रियासन्तानस्य ह्यत्राविच्छेदो विधीयते, नारम्भो नोपरम इति। सोऽयमुभयथा वर्त्तमानो गृह्यते, अपवृक्तो व्यपवृक्तश्च अतीतानागताभ्याम्। स्थितिव्यङ्गो विद्यते द्रव्यमिति। क्रियासन्तानविच्छेदाभिधायी च त्रैकाल्यान्वितः पचति छिनत्तीति। अन्यश्च प्रत्यासत्तिप्रभृतिरर्थस्य (श्च) विवक्षायां तदभिधायी बहुप्रकारो लोकेषु उत्प्रेक्षितव्यः। तस्मादस्ति वर्त्तमानः काल इति॥ ४१ ॥

**अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धिः ॥ ४२ ॥**

अत्यन्तसाधर्म्यादुपमानं न सिध्यति। न चैवं भवति, यथा गौरेवं गौरिति। प्रायः साधर्म्यादुपमानं न सिध्यति। न हि

---

ननु यदि वर्त्तमानध्वंसप्रतियोगित्वमतीतत्वं, वर्त्तमानप्रागभावप्रतियोगित्वञ्च भविष्यत्त्वं, तदा वर्त्तमान एव घटे कथं श्याम आसीद्रक्तो भविष्यतीति धीः, अत आह।—वर्त्तमानस्यापि घटादेः श्यामरक्तरूपादीनां कृतताकर्त्तव्यतयोरतीतताभविष्यत्तयोरुपपत्तेर्घटादेरप्यतीतानागतत्वेन व्यवहारः परम्परासम्बन्धादित्यर्थः ॥४१॥

समाप्तं वर्त्तमानपरीक्षाप्रकरणम्।

अथावसरेण क्रमप्राप्तोपमानं परीक्षितुं पूर्वपक्षयति।—प्रसिद्धसाधर्म्यादुपमानमुक्तं, तन्न युक्तम्; यतः साधर्म्यमात्यन्तिकं प्रायिकमैकदेशिकं वा न सम्भवति, न

भवति, यथाऽनड्वानेवं महिष इति। एकदेशसाधर्म्यादुपमानं न सिध्यति, न हि सर्वेण सर्वमुपमीयत इति ॥ ४२ ॥

**प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः ॥ ४३ ॥**

न साधर्म्यस्य कृत्स्नप्रायाल्पभावमाश्रित्योपमानं प्रवर्त्तते। किं तर्हि?—प्रसिद्धसाधर्म्यात् साध्यसाधनभावमाश्रित्य प्रवर्त्तते? यत्र चैतदस्ति, न तत्रोपमानं प्रतिषेद्धुं शक्यम्। तस्माद्‌यथोक्त-दोषो नोपपद्यत इति ॥ ४३ ॥

अस्तु तर्ह्युपमानमनुमानम्,—

**प्रत्यक्षेणाप्रत्यक्षसिद्धेः ॥ ४४ ॥**

यथा धूमेन प्रत्यक्षेणाप्रत्यक्षस्य वह्नेर्ग्रहणमनुमानम्, एवं गवा प्रत्यक्षेणाप्रत्यक्षस्य गवयस्य ग्रहणमिति, नेदमनुमाना-द्विशिष्यते ॥ ४४ ॥

---

हि आत्यन्तिकसाधर्म्येण गौरिव गौरित्युपमानं प्रवर्त्तते, न वा प्रायिकसाधर्म्येण गौरिव महिष इति, न च यत्किञ्चित् साधर्म्येण मेरुरिव सर्षप इति, साधर्म्यस्य चोपलक्षणत्वाद्वैधर्म्योपमानमप्येवं खण्डनीयम् ॥ ४२ ॥

समाधत्ते।—प्रसिद्धं प्रकर्षेण महिषादिव्यावृत्त्या सिद्धं ज्ञातं यत् साधर्म्यं, तज्ज्ञानस्योपमितिकारणत्वान्न दोषः, साधर्म्यञ्च प्रकरणाद्यनुसारात् क्वचित् किञ्चिदिति ॥ ४३ ॥

अनुमानेन चरितार्थं नोपमानं प्रमाणान्तरमिति वैशेषिकमतमाशङ्कते।—प्रत्यक्षेण गोसादृश्यविशिष्टेन, अप्रत्यक्षस्य गवयपदवाच्यत्वस्यानुमितिर्नोपमानं माणान्तरमिति ॥ ४४ ॥

विशिष्यत इत्याह, कया युक्त्या ?—

**नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्याम इति ॥ ४५ ॥**

यदा ह्ययमुपयुक्तोपमानो गोदर्शी गवयं गोसमानमर्थं पश्यति, तदाऽयं गवय इत्यस्य संज्ञाशब्दस्य व्यवस्थां प्रतिपद्यते। न चैवमनुमानमिति। परार्थञ्चोपमानम्। यस्य ह्युपमानमप्रसिद्धं, तदर्थं प्रसिद्धोभयेन क्रियत इति। * परार्थमुपमानमिति चेत् ? न ; स्वयमध्यवसायात्। * भवति च भोः ! स्वयमध्यवसायः, यथा गौः, एवं गवय इति। नाध्यवसायः प्रतिषिध्यते। उपमानन्तु तन्न भवति। प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्। न च यस्योभयं प्रसिद्धं, तं प्रति साध्यसाधनभावो विद्यत इति ॥ ४५ ॥

अथापि,—

**तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः ॥ ४६ ॥**

तथेति समानधर्मोपसंहारादुपमानं सिध्यति, नानुमानम्। अयञ्चानयोर्विशेष इति ॥ ४६ ॥

---

अतोत्तरयति।—अप्रत्यक्षे व्याप्यवत्तयाऽप्रत्यक्षे अनुमानत्वेन प्रमाणार्थे प्रमाप्रयोजनमुपमानस्य न पश्याम इत्यर्थः, अथवा गवये गवयत्वे अप्रत्यक्षे गवयपदवाच्यत्वे उपमानस्य प्रमाणार्थं प्रमाम् उपमानजन्यां प्रमाम् अनुमानत्वेन न पश्याम इत्यर्थः, व्याप्तिज्ञानाभावादिति भावः ॥ ४५ ॥

ननु व्याप्तिज्ञाननियमः कल्प्यतामित्याशयेन युक्त्यन्तरमाह।—अनुमानादुपमानस्य नाविशेषः, तथेत्युपसंहारात् ; यथा गौः, तथा गवय इति ज्ञानादुपमानसिद्धेः, उपमानाधीनसिद्धेरुपमितेः, तथा च व्याप्तिज्ञानानपेक्षसादृश्यज्ञानाधीनोपमितिरित्यनुभवसिद्धम् ; किञ्च नानुमिनोमि किन्तूपमिनोमीत्यनुव्यवसायसिद्धोपमितिर्नापलापितुं शक्यत इत्याशयः ॥ ४६ ॥

समाप्तमुपमानप्रामाण्यपरीक्षाप्रकरणम्।

**शब्दोऽनुमानम्, अर्थस्यानुपलब्धेरनुमेयत्वात्॥४७॥**

शब्दोऽनुमानं, न प्रमाणान्तरम्। कस्मात्?—शब्दार्थस्यानुमेयत्वात्। कथमनुमेयत्वम्?—प्रत्यक्षतोऽनुपलब्धेः; यथाऽनुपलभ्यमानो लिङ्गी मितेन लिङ्गेन पश्चान्मीयत इति अनुमानम्, एवं मितेन शब्देन पश्चान्मीयतेऽर्थोऽयमनुपलभ्यमानः, इत्यनुमानं शब्दः॥ ४७॥

इतश्चानुमानं शब्दः।—

**उपलब्धेरद्विप्रवृत्तित्वात्॥ ४८॥**

प्रमाणान्तरभावे द्विप्रवृत्तिरुपलब्धिः। अन्यथा ह्युपलब्धिरनुमाने, अन्यथोपमाने। तद्व्याख्यानम्;—शब्दानुमानयोस्तूपलब्धिरद्विप्रवृत्तिः, यथाऽनुमाने प्रवर्त्तते, तथा शब्देऽपि। विशेषाभावादनुमानं शब्द इति॥ ४८॥

**सम्बन्धाच्च॥ ४९॥**

शब्दोऽनुमानमिति वर्त्तते। सम्बद्धयोश्च शब्दार्थयोः सम्बन्धप्रसिद्धौ शब्दोपलब्धेरर्थग्रहणम्। यथा सम्बद्धयोर्लिङ्गलिङ्गिनोः सम्बन्धप्रतीतौ लिङ्गोपलब्धौ लिङ्गिग्रहणमिति॥ ४९॥

---

क्रमप्राप्तं शब्दं परीक्षितुं पूर्वपक्षयति।—शब्दोऽनुमानमित्यस्य शाब्दबोधोऽनुमितिरिति पर्य्यवसितार्थः, तथा च शब्दो लिङ्गविधयाऽनुमितिकरणम, अर्थस्य शब्दप्रतिपाद्यस्य अनुपलब्धेरप्रत्यक्षत्वात् अनुमेयत्वादिति, तथा च शाब्दज्ञानमनुमितिरप्रत्यक्षविषयत्वात् प्रत्यक्षभिन्नत्वाद्वेत्यत्र तात्पर्य्यम्॥ ४७॥

हेत्वन्तरमाह।—उपलब्धेः शाब्दबोधत्वेनाभिमतायाः अनुमितित्वेनाभिमतायाश्च, अद्विप्रवृत्तित्वात् अद्विप्रकारत्वात्, अनुमितित्वं शाब्दत्वञ्च न जातिद्वयम्; शब्दस्य लिङ्गविधया बोधकत्वाल्लिङ्गान्तरजज्ञानवद्विजातीयत्वाभावात्॥ ४८॥

हेत्वन्तरमाह।—सम्बन्धान्नियतसम्बन्धात्, ज्ञायमानादिति शेषः, शब्दो हि व्याप्तिग्रहसापेक्षो बोधयति, तेन शाब्दबोधोऽनुमितिरिति भावः॥ ४९॥

यत्तावदर्थस्यानुमेयत्वादिति, तन्न ।—

**आप्तोपदेशसामर्थ्याच्छब्दादर्थे सम्प्रत्ययः ॥ ५० ॥**

स्वर्गः, अप्सरसः, उत्तराः कुरवः, सप्त द्वीपाः, समुद्रः, लोकसन्निवेश इत्येवमादेरप्रत्यक्षस्यार्थस्य न शब्दमात्रात् प्रत्ययः। किं तर्हि ?—आप्तैरयमुक्तः शब्दः, इत्यतः सम्प्रत्ययः। विपर्ययेण सम्प्रत्ययाभावात्। न त्वेवमनुमानमिति। यत् पुनरुपलब्धेरद्विप्रवृत्तित्वादिति। अयमेव शब्दानुमानयोरुपलब्धेः प्रवृत्तिभेदः। तत्र विशेषे सत्यहेतुर्विशेषाभावादिति। यत्तु पुनरिदं सम्बन्धाच्चेति। अस्ति शब्दार्थयोः सम्बन्धोऽनुज्ञातः। अस्ति च प्रतिषिद्धः। अस्येदमिति षष्ठीविशिष्टस्य वाक्यस्यार्थविशेषोऽनुज्ञातः। प्राप्तिलक्षणस्तु शब्दार्थयोः सम्बन्धः प्रतिषिद्धः ॥ ५० ॥

कस्मात् ?—

**प्रमाणतोऽनुपलब्धेः ॥ ५१ ॥**

प्रत्यक्षतस्तावच्छब्दार्थप्राप्तेर्नोपलब्धिः, अतीन्द्रियत्वात्। येनेन्द्रियेण गृह्यते शब्दः, तस्य विषयभावमतिवृत्तोऽर्थो न गृह्यते। अस्ति चातीन्द्रियविषयभूतोऽप्यर्थः। समानेन चेन्द्रियेण गृह्यमाणयोः प्राप्तिर्गृह्यत इति। प्राप्तिलक्षणे च गृह्यमाणे शब्दार्थयोः शब्दान्तिके वाऽर्थः स्यात्, अर्थान्तिके वा शब्दः स्यात्, उभयं वोभयत्र ॥ ५१ ॥

---

सिद्धान्तसूत्रम्।—आप्तस्य भ्रमादिशून्यस्य च उपदेशः शब्दः, तत्र यत् सामर्थ्यं आकाङ्क्षायोग्यतादिमत्त्वं ततः ; अथवा आप्तं प्राप्तं, यदुपदेशसामर्थ्यम् आकाङ्क्षादिमत्त्वं, ततः तत्सहकारात् ; सावधारणायं निर्देशः, तेन व्याप्तिनिरपेक्षादाकाङ्क्षादिज्ञानादर्थे सम्प्रत्ययः शाब्दबोधः सम्भवतीति नानुमानान्तर्भावः शब्दस्येत्यर्थः, शब्दादमुमर्थं प्रत्येमि, न त्वनुमिनोमीत्यनुभवादिति भावः ॥ ५० ॥

अथ खल्वयम्,—

**पूरणप्रदाहपाटनानुपलब्धेश्च सम्बन्धाभावः ॥५२॥**

स्थानकरणाभावादिति चार्थः। न चायमनुमानतोऽप्युपलभ्यते शब्दान्तिकेऽर्थ इति। एतस्मिन् पक्षेऽप्यस्य स्थानकरणोच्चारणीयः शब्दः, तदन्तिकेऽर्थ इति। अन्नाग्न्यसिशब्दोच्चारणे पूरणप्रदाहपाटनानि गृह्येरन्। न च गृह्यन्ते। अग्रहणान्नानुमेयः प्राप्तिलक्षणः सम्बन्धः, अर्थान्तिके शब्द इति स्थानकरणासम्भवादनुच्चारणम्। स्थानं कण्ठादयः, करणं प्रयत्नविशेषः, तस्यार्थान्तिकेऽनुपपत्तिरिति। उभयप्रतिषेधाच्च नोभयम्। तस्मान्न शब्देनार्थः प्राप्त इति ॥ ५२ ॥

**शब्दार्थव्यवस्थानादप्रतिषेधः ॥ ५३ ॥**

शब्दार्थप्रत्ययस्य व्यवस्थादर्शनादनुमीयते, अस्ति शब्दार्थसम्बन्धो व्यवस्थाकारणम्। असम्बन्धे हि शब्दमात्रादर्थमात्रे प्रत्ययप्रसङ्गः। तस्मादप्रतिषेधः सम्बन्धस्येति ॥ ५३ ॥

---

शब्दार्थयोः सम्बन्धाभाव इत्यप्याह।—शब्देन सहार्थस्य सम्बन्धाभावः व्याप्त्यभावः; हेतुमाह पूरणेति।—यदि शब्दस्यार्थेन व्याप्तिः स्यात्, तदाऽन्नाग्न्यसिशब्दैर्मुखपूरणमुखप्रदाहमुखपाटनानि स्युः, शब्दस्य व्याप्यस्य सत्त्वेनान्नादेरर्थस्यापि सत्त्वात् ॥ ५२ ॥

तत् किं शब्दोऽसम्बद्धमेवार्थं प्रत्याययति? तथा सत्यतिप्रसङ्ग इत्याशङ्कते।—अप्रतिषेधः शब्दार्थयोः सम्बन्धप्रतिषेधो न शब्दार्थयोः, सम्बन्धस्य व्यवस्थितत्वात्। कश्चिदेव हि शब्दः कञ्चिदेवार्थं बोधयति, न सर्वः सर्वमिति, इत्यश्च सम्बन्धे स्वीकृते तेन सम्बन्धेन व्याप्तिरप्यावश्यकी; स च सम्बन्धो न मुखपूरणादिनियामक इति भावः ॥५३॥

अत्र समाधिः।—

**न सामयिकत्वाच्छब्दार्थसम्प्रत्ययस्य ॥ ५४ ॥**

न सम्बन्धकारितं शब्दार्थव्यवस्थानम्। किं तर्हि?—समयकारितं यत् तदवोचाम;—अस्येदमिति षष्ठीविशिष्टस्य वाक्यस्यार्थविशेषोऽनुज्ञातः शब्दार्थयोः सम्बन्ध इति। समयं तमवोचामेति। कः पुनरयं समयः? अस्य शब्दस्येदमर्थजातमभिधेयम्, इत्यभिधानाभिधेयनियमनियोगः। तस्मिन्नुपयुक्ते शब्दादर्थसम्प्रत्ययो भवति। विपर्य्यये हि शब्दश्रवणेऽपि प्रत्ययाभावः। सम्बन्धवादिनाऽपि चायमवर्जनीय इति। प्रयुज्यमानग्रहणाच्च समयोपयोगो लौकिकानाम्। समयपालनार्थं चेदं पदलक्षणाया वाचोऽन्वाख्यानं व्याकरणम्। वाक्यलक्षणाया वाचोऽर्थो लक्षणम्; पदसमूहो वाक्यमर्थपरिसमाप्ताविति। तदेवं प्राप्तिलक्षणस्य शब्दार्थसम्बन्धस्यार्थंजुषोऽप्यनुमानं हेतुर्न भवतीति ॥ ५४ ॥

**जातिविशेषे चानियमात् ॥ ५५ ॥**

सामयिकः शब्दादर्थसम्प्रत्ययः, न स्वाभाविकः। ऋष्यार्य्यम्लेच्छानां यथाकामं शब्दविनियोगोऽर्थप्रत्यायनाय प्रवर्त्तते। स्वाभाविके हि शब्दस्यार्थप्रत्यायकत्वे यथाकामं न स्यात्।

---

उत्तरयति।—मन्यतेऽपि शब्दार्थयोरव्यवस्था न, शब्दाधीनस्यार्थसम्प्रत्ययस्य सामयिकत्वात् शक्तिग्रहाधीनत्वात्, शक्तिरूपसम्बन्धेन च न व्याप्तिः, तस्यावृत्तिनियामकसम्बन्धाधीनत्वादिति भावः ॥ ५४ ॥

शब्दस्यार्थेन सह न स्वाभाविकः सम्बन्धः, जातिविशेषेऽनियमात् शब्दस्यानियतार्थकत्वदर्शनात्, आर्य्या हि यवशब्दाद्दीर्घशूकविशेषं प्रतियन्ति, म्लेच्छास्तु

यथा तैजसस्य प्रकाशस्य रूपप्रत्ययहेतुत्वं न जातिविशेषे व्यभिचरतीति॥ ५५ ॥

**तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः॥ ५६ ॥**

पुत्रकामेष्टिहवनाभ्यासेषु । तस्येति शब्दविशेषमेवाधिकुरुते भगवानृषिः । शब्दस्य प्रमाणत्वं न सम्भवति । कस्मात् ?—अनृतदोषात् । पुत्रकामेष्टौ पुत्रकामः पुत्रेष्ट्या यजेतेति, नेष्टौ संस्थितायां पुत्रजन्म दृश्यते । दृष्टार्थस्य वाक्यस्यानृतत्वात् अदृष्टार्थमपि वाक्यम् "अग्निहोत्रं जुहुयात् स्वर्गकामः" ( मैत्री० उप० ६।३६ ) इत्याद्यनृतमिति ज्ञायते । विहितव्याघातदोषाच्च । हवने,—उदिते होतव्यम्, अनुदिते होतव्यं, समयाध्युषिते होतव्यम्, इति विधाय, विहितं व्याहन्ति,—"श्यावोऽस्याऽऽहुतिमभ्यवहरति य उदिते जुहोति, शबलोऽस्याऽऽहुतिमभ्यवहरति योऽनुदिते जुहोति, श्यावशबलावस्याऽऽहुतिमभ्यवहरतः, यः समयाध्युषिते जुहोति" । व्याघाताच्चान्यतरन्मिथ्येति, पुनरुक्तदोषाच्च । अभ्यासे देश्यमाने,—"त्रिः प्रथमामन्वाह त्रिरुत्तमाम्" इति पुनरुक्तदोषो

---

कल्कुमिति, नियमे तु सर्वः सर्वं प्रतीयात् । आपाततश्चेदम् ;—नानाशक्तावपि यत्र यस्य शक्तिग्रहः, तस्य तदर्थोपस्थितेः ॥ ५५ ॥

समाप्तं शब्दसामान्यपरीक्षाप्रकरणम् ।

शब्दस्य दृष्टादृष्टार्थकत्वेन द्वैविध्यमुक्तम् ; तत्र चादृष्टार्थकशब्दस्य वेदस्य प्रामाण्यं परीक्षितुं पूर्वपक्षयति ।—तस्य दृष्टार्थकव्यतिरिक्तशब्दस्य वेदस्य, अप्रामाण्यम् । कुतः ?—अनृतत्वादिदोषात् । तत्र च पुत्रेष्टिकारी यागादौ क्वचित् फलानुत्पत्तिदर्शनादनृतत्वम् । व्याघातः पूर्वापरविरोधः । यथा,—"उदिते जुहोति, अनुदिते जुहोति, समयाध्युषिते जुहोति" "श्यावोऽस्याऽऽहुतिमभ्यवहरति, य उदिते जुहोति, शबलोऽस्याऽऽहुतिमभ्यवहरति योऽनुदिते जुहोति, श्यावशबलावस्याऽऽहुतिमभ्यवहरतः, यः समयाध्युषिते जुहोति" । अत्र चोदितादिवाक्यानां निन्दाऽनुमितानिष्टसाधनताबोधकवाक्येन सह विरोधः । पौनरुक्त्यादप्रामाण्यम् । यथा,—"त्रिः प्रथमामन्वाह,

भवति। पुनरुक्तञ्च प्रमत्तवाक्यमिति। तस्मादप्रमाणं शब्दोऽनृत-व्याघातपुनरुक्तदोषेभ्य इति ॥ ५६ ॥

न कर्मकर्तृसाधनवैगुण्यात् ॥ ५७ ॥

नानृतदोषः पुत्रकामेष्टौ। कस्मात्?—कर्मकर्तृसाधन-वैगुण्यात्। इष्ट्या पितरौ संयुज्यमानौ पुत्रं जनयत इति इष्टिः करणं साधनम्; पितरौ कर्त्तारौ, संयोगः कर्म्म, त्रयाणां गुण-योगात् पुत्रजन्म, वैगुण्याद्विपर्य्ययः। इष्ट्याऽऽश्रयं तावत्कर्म-वैगुण्यं,—समीहाभ्रंशः। कर्तृवैगुण्यम्,—अविद्वान् प्रयोक्ता कपूयाऽऽचरणश्च। साधनवैगुण्यं,—हविरसंस्कृतमुपहतमिति। मन्त्रा न्यूनाधिकाः स्वरवर्णहीना इति। दक्षिणा दुरागता हीना निन्दिता चेति। अथोपजनाऽऽश्रयं, कर्म्मवैगुण्यं,—मिथ्यासम्प्रयोगः। कर्तृवैगुण्यं,—योनिव्यापादः, बीजोपघात-श्चेति। साधनवैगुण्यम्,—इष्टावभिहितम्। लोके चाग्निकामो दारुणी मथ्नीयादिति विधिवाक्यम्। तत्र कर्म्मवैगुण्यं,—मिथ्याऽभिमन्थनम्। कर्तृवैगुण्यं,—प्रज्ञाप्रयत्नगतः प्रमादः। साधनवैगुण्यम्,—आर्द्रं सुषिरं दार्विति। तत्र फलं न निष्प-द्यत इति नानृतदोषः। गुणयोगेन फलनिष्पत्तिदर्शनात्। न चेदं लौकिकाद्भिद्यते पुत्रकामः पुत्रेष्ट्या यजेतेति ॥ ५७ ॥

---

चिकत्तमाम्" इत्यवोचमत्वस्य प्रथमत्वापर्य्यवसानेऽपि त्रिःकथनेन पौनरुक्त्यम्। एतेषामप्रामाण्ये तद्दृष्टान्तेन तदेककर्तृकत्वेन तदेकजातीयत्वेन वा सर्व्ववेदाप्रामाण्यं साधनीयमिति भावः ॥ ५६ ॥

सिद्धान्तसूत्रम्।—न वेदाप्रामाण्यं, कर्म्मकर्तृसाधनवैगुण्यात् फलाभावोपपत्तेः; कर्म्मणः क्रियायाः, वैगुण्यम् अयथाविधित्वादि, कर्त्तुर्वैगुण्यम् अविद्वत्त्वादि, साधनस्य हविरादेः, वैगुण्यम् अप्रोक्षितत्वादि, यथोक्तकर्म्मणः फलाभावे ह्यनृतत्वं न चैवमस्तीति भावः ॥ ५७ ॥

## अभ्युपेत्य कालभेदे दोषवचनात् ॥ ५८ ॥

न व्याघातो हवन इत्यनुवर्त्तते। योऽभ्युपगतं हवनकालं भिनत्ति, ततोऽन्यत्र जुहोति, तत्रायमभ्युपगतकालभेदे दोष उच्यते। श्यावोऽस्याऽऽहुतिमभ्यवहरति, य उदिते जुहोति, तदिदं विधिभ्रंशे निन्दावचनमिति ॥ ५८ ॥

## अनुवादोपपत्तेश्च ॥ ५९ ॥

पुनरुक्तदोषोऽभ्यासे नेति प्रकृतम्। अनर्थकोऽभ्यासः पुनरुक्तः। अर्थवानभ्यासोऽनुवादः। योऽयमभ्यासः,—"त्रिः प्रथमामन्वाह त्रिरुत्तमाम्" इत्यनुवाद उपपद्यते, अर्थवत्त्वात्। त्रिर्वचनेन हि प्रथमोत्तमयोः पञ्चदशत्वं सामिधेनीनां भवति। तथा च मन्त्राभिवादः,—"इममहं भ्रातृव्यं पञ्चदशारेण वाग्वज्रेणावबाधे, योऽस्मान् द्वेष्टि, यञ्च वयं द्विष्मः" इति। पञ्चदशसामिधेनीर्वज्रं मन्त्रोऽभिवदति, तदभ्यासमन्तरेण न स्यादिति ॥ ५९ ॥

## वाक्यविभागस्य चार्थग्रहणात् ॥ ६० ॥

प्रमाणं शब्दः, यथा लोके ॥ ६० ॥

---

व्याघातं परिहरति।—न व्याघात इति शेषः, अन्याधानकाले उदितहोमादिकमभ्युपेत्य स्वीकृत्य, अनुदितहोमादिकरणे पूर्वोक्तदोषकथनान्न व्याघात इत्यर्थः ॥ ५८ ॥

पौनरुक्त्यं परिहरति।—च पुनरर्थे, अनुवादोपपत्तेः पुनर्न पौनरुक्त्यम्। निष्प्रयोजनत्वे हि पौनरुक्त्यं दोषः, उक्तस्थले त्वनुवादस्य उपपत्तेः प्रयोजनस्य सम्भवात्, एकादशसामिधेनीनां प्रथमोत्तमयोः त्रिरभिधाने हि पञ्चदशत्वं सम्भवति, तथा च पञ्चदशत्वं श्रूयते,—"इममहं भ्रातृव्यं पञ्चदशारेण वाग्वज्रेणावबाधे, योऽस्मान् द्वेष्टि, यञ्च वयं द्विष्मः" इति ॥ ५९ ॥

अनुवादस्य सार्थकत्वं लोकसिद्धमित्याह।—वाक्यविभागस्य अनुवादत्वेन विभक्तवाक्यस्य अर्थग्रहणात् प्रयोजनस्वीकारात्, शिष्टैरिति शेषः। शिष्टा हि विधाय-

विभागश्च ब्राह्मणवाक्यानां त्रिविधः,—

विध्यर्थवादानुवादवचनविनियोगात् ॥ ६१ ॥

त्रिधा खलु ब्राह्मणवाक्यानि विनियुक्तानि,—विधिवचनानि, अर्थवादवचनानि, अनुवादवचनानीति ॥ ६१ ॥

तत्र,—

विधिर्विधायकः ॥ ६२ ॥

यद्वाक्यं विधायकं चोदकं, स विधिः। विधिस्तु नियोगोऽनुज्ञा वा ; यथा "अग्निहोत्रं जुहुयात् स्वर्गकामः" ( मैत्रौ० उप० ६।३६ ) इत्यादि ॥ ६२ ॥

स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः ॥६३॥

विधेः फलवादलक्षणा या प्रशंसा, सा स्तुतिः, सम्प्रत्ययार्थम्। स्तूयमानं श्रद्दधीतेति प्रवर्त्तिका च। फलश्रवणात् प्रवर्त्तते। "सर्वजिता वै देवाः सर्वमजयन्," "सर्वस्याऽऽप्त्यै सर्वस्य जित्यै, सर्वमेवैतेनाऽऽप्नोति सर्वं जयति" इत्येवमादि।

---

वानुवादकादिभेदेन वाक्यं विभज्यानुवादकस्यापि सप्रयोजनत्वं मन्यन्ते, वेदेऽप्यत्रमिति भावः ॥ ६० ॥

वेदे वाक्यविभागं दर्शयति।—मन्त्रब्राह्मणभेदाद् द्विधा वेदः, तत्र ब्राह्मणस्यायं विभागः,—विधिवचनत्वेनार्थवादवचनत्वेनानुवादवचनत्वेन च वेदस्य विनियोगात् विभजनात् ; अथवा विनियोगात् भेदात्, तथा च विध्यादिभेदात् ब्राह्मणभागस्त्रिधेति शेषः ॥ ६१ ॥

तत्र विधिलक्षणमाह।—इष्टसाधनताबोधकप्रत्ययसमभिव्याहृतवाक्यं विधिः, "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्यादि ॥ ६२ ॥

अर्थवादः अर्थस्य प्रयोजनस्य,वदनं विध्यर्थप्रशंसापरं वचनमित्यर्थः ; अर्थवादो हि स्तुत्यादिद्वारा विध्यर्थं शीघ्रं प्रवृत्तये प्रशंसति। तत्र स्तुत्यादिभेदादर्थवादं विभजते।—स्तुतिः साक्षाद्विध्यर्थस्य प्रशंसाऽर्थकं वाक्यम् ; यथा "सर्वजिता वै देवाः सर्वमजयन्"

अनिष्टफलवादो निन्दा, वर्जनार्थम्; निन्दितं न समाचरेदिति।—"एष वाव प्रथमो यज्ञानां यज्ज्योतिष्टोमः, एतेनानिष्ट्वाऽन्येन यजते, स गर्त्ते पतत्ययमेवैतज्जीर्य्यते प्रमीयते" इत्येवमादि। अन्यकर्तृकस्य व्याहतस्य विधेर्वादः परकृतिः।—"हुत्वा वपामेवाग्रेऽभिघारयन्ति, अथ पृषदाज्यं, तदुह चरकाध्वर्य्यवः पृषदाज्यमेवाग्रेऽभिघारयन्त्यग्नेः प्राणाः पृषदाज्यं स्तोममित्येवमभिदधति" इत्येवमादि। ऐतिह्यसमाचरितो विधिः पुराकल्प इति। "तस्माद्वा एतेन पुरा ब्राह्मणा वहिःपवमानं सामस्तोममस्तौषन्, योने यज्ञं प्रतनवामहे" इत्येवमादि। कथं परकृतिपुराकल्पौ अर्थवादाविति?—स्तुतिनिन्दावाक्येनाभिसम्बन्धाद्विध्याश्रयस्य कस्यचिदर्थस्य द्योतनादर्थवाद इति ॥ ६३ ॥

विधिविहितस्यानुवचनमनुवादः ॥ ६४ ॥

विध्यनुवचनञ्चानुवादो विहितानुवचनञ्च। पूर्वः शब्दानुवादः, अपरोऽर्थानुवादः। यथा पुनरुक्तं द्विविधम्, एवमनुवादोऽपि। किमर्थं पुनर्विहितमनूद्यते?—अधिकारार्थम्। विहित-

"सर्वस्य आप्त्यै सर्वस्य जित्यै, सर्वमेवैतेनाऽऽप्नोति सर्वं जयति" इत्यादि। अनिष्टबोधनद्वारा विध्यर्थप्रवर्त्तकं निन्दा,—"एष वाव प्रथमो यज्ञानां यज्ज्योतिष्टोमः, एतेनानिष्ट्वा अन्येन यजते, स गर्त्ते पतत्ययमेवैतज्जीर्य्यते प्रमीयते" इत्यादि। पुरुषविशेषनिष्ठमिथोविरुद्धकथनं परकृतिः, यथा,—"हुत्वा वपामेवाग्रेऽभिघारयन्त्यथ पृषदाज्यं, तदुह चरकाध्वर्य्यवः पृषदाज्यमेवाग्रेऽभिघारयन्त्यग्नेः प्राणाः पृषदाज्यं स्तोममित्येवमभिदधति" इत्यादि। ऐतिह्यसमाचरिततया कीर्त्तनं पुराकल्पः, यथा,—"तस्माद्वा एतेन पुरा ब्राह्मणा वहिःपवमानं सामस्तोममस्तौषन्, योने यज्ञं प्रतनवामहे" इत्यादि ॥ ६३ ॥

अनुवादलक्षणमाह।—प्राप्तस्य अनु पश्चात् कथनं सप्रयोजनमनुवाद इति सामान्यलक्षणम्; तद्विशेषौ विधिविहितस्येति, विध्यनुवादो विहितानुवादश्चेत्यर्थः।

मधिकृत्य स्तुतिर्वोच्यते, निन्दा वा, विधिशेषो वाऽभिधीयते। विहितानन्तरार्थोऽपि चानुवादो भवति। एवमन्यदप्युत्प्रेक्षणीयम्। लोकेऽपि च विधिरर्थवादोऽनुवाद इति च त्रिविधं वाक्यम्। ओदनं पचेदिति विधिवाक्यम्। अर्थवादवाक्यम्—आयुर्वर्चो बलं सुखं प्रतिभानञ्चान्ने प्रतिष्ठितम। अनुवादः,—पचतु पचतु भवानित्यभ्यासः, क्षिप्रं पच्यतामिति वा। अङ्ग ! पच्यतामित्यध्येषणार्थम्। पच्यतामेवेति वाऽवधारणार्थम्। यथा लौकिके वाक्ये विभागेनार्थग्रहणात् प्रमाणत्वम्, एवं वेदवाक्यानामपि विभागेनार्थग्रहणात् प्रमाणत्वं भवितुमर्हतीति ॥ ६४ ॥

## नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः ॥ ६५ ॥

पुनरुक्तमसाधु, साधुरनुवाद इति अयं विशेषो नोपपद्यते। कस्मात् ?—उभयत्र हि प्रतीतार्थः शब्दोऽभ्यस्यते। चरितार्थस्य शब्दस्याभ्यासादुभयमसाध्विति ॥ ६५ ॥

## शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेषः ॥ ६६ ॥

नानुवादपुनरुक्तयोरविशेषः। कस्मात् ?—अर्थवदभ्यासस्यानुवादभावात्। समानेऽभ्यासे पुनरुक्तमनर्थकम्। अर्थवानभ्यासोऽनुवादः। शीघ्रतरगमनोपदेशवत्। शीघ्रं शीघ्रं गम्यतां, शीघ्रतरं गम्यतामिति क्रियातिशयोऽभ्यासेनैवोच्यते। उदाहरणार्थञ्चेदम् एवमन्योऽप्यभ्यासः। पचति पचतीति क्रिया-

---

अयं चार्थवादानुवादविभागो विधिसमभिव्याहृतवाक्यानाम् ; तेन भूतार्थवादरूपाणां वेदान्तवाक्यानामपरिग्रहान्न न्यूनता ॥ ६४ ॥

शङ्कते।—शब्दस्य बोधितार्थकशब्दस्य योऽभ्यासः पुनः प्रयोगः, तस्योपपत्तेः सत्त्वात् अनुवादः पुनरुक्तान्न भिद्यत इत्यर्थः ॥ ६५ ॥

समाधत्ते।—अनुवादस्य पुनरुक्तादविशेषः, अभ्यासात्, अभ्यासस्य सप्रयोजन-

नुपरमः । ग्रामो ग्रामो रमणीय इति व्याप्तिः । परिपरि त्रिगर्त्तेभ्यो वृष्टो देव इति परिवर्जनम् । अध्यधि कुड्यं निषण्णमिति सामीप्यम् । तिक्तं तिक्तमिति प्रकारः । एवमनुवादस्य स्तुतिनिन्दाशिषविधिष्वधिकारार्थता विहितार्थता चेति ॥६६॥

किं पुनः प्रतिषेधहेतूद्धारादेव शब्दस्य प्रमाणत्वं सिध्यति ? न ; अतश्च,—

**मन्त्राऽऽयुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् ॥ ६७ ॥**

किं पुनरायुर्वेदस्य प्रामाण्यम् ? यदायुर्वेदेनोपदिश्यते,—इदं कृत्वेष्टमधिगच्छति, इदं वर्जयित्वाऽनिष्टं जहाति, तस्यानुष्ठीयमानस्य तथाभावः सत्यार्थताऽविपर्य्ययः । मन्त्रपदानाञ्च विषभूताऽशनिप्रतिषेधार्थानां प्रयोगेऽर्थस्य तथाभावः । एतत् प्रामाण्यम् । किं कृतमेतत् ?—आप्तप्रामाण्यकृतम् । किं पुनराप्तानां प्रामाण्यम् ?—साक्षात्कृतधर्मता, भूतदया, यथाभूतार्थचिख्यापयिषेति । आप्ताः खलु साक्षात्कृतधर्माणः इदं हातव्यम्, अयमस्य हानिहेतुः, इदमस्याधिगन्तव्यम्, अयमस्याधिगमहेतुरिति भूतान्यनुकम्पन्ते । तेषां खलु वै प्राणभृतां स्वयमनवबुध्यमानानां नान्यदुपदेशादवबोधकारणमस्ति । न चानवबोधे समीहा वर्जनं वा, न वाऽकृत्वा स्वस्तिभावः, नाप्यस्यान्य उपकारकोऽप्यस्ति । हन्त ! वयमेभ्यो यथादर्शनं यथाभूतमुपदिशामः, त इमे श्रुत्वा प्रतिपद्यमाना हेयं हास्य-

---

त्वात् । तत्र दृष्टान्तमाह, शीघ्रेति ।—यथा लोके गम्यतामित्युक्त्वा पुनर्गम्यतां गम्यताम् इत्यादिकमविलम्बादिबोधार्थमुच्यते, तथा प्रकृतेऽपीति ॥ ६६ ॥

एवमप्रामाण्यसाधकं निरस्य प्रामाण्यं साधयति ।—आप्तस्य वेदकर्त्तुः, प्रामाण्यात्, यथार्थोपदेशकत्वात् वेदस्य, तदुक्तत्वमर्थाल्लभ्यं, तेन हेतुना वेदस्य प्रामाण्यम्

न्यधिगन्तव्यमेवाधिगमिष्यन्तीति एवमाप्तोपदेशः। एतेन विविधेनाऽऽप्तप्रामाण्येन परिगृहीतोऽनुष्ठीयमानोऽर्थस्य साधको भवति। एवमाप्तोपदेशः प्रमाणम्; एवमाप्ताः प्रमाणम्। दृष्टार्थेनाऽऽप्तोपदेशेनाऽऽयुर्वेदेनादृष्टार्थो वेदभागोऽनुमातव्यः प्रमाणमिति। आप्तप्रामाण्यस्य हेतोः समानत्वादिति। अस्यापि चैकदेशो "ग्रामकामो यजेत" इत्येवमादिर्दृष्टार्थः, तेनानुमातव्यमिति। लोके च भूयानुपदेशाऽऽश्रयो व्यवहारः। लौकिकस्याप्युपदेष्टुरुपदेष्टव्यार्थज्ञानेन परानुजिघृक्षया यथाभूतार्थचिख्यापयिषया च प्रामाण्यम्। तत्परिग्रहादाप्तोपदेशः प्रमाणमिति। * द्रष्टृप्रवक्तृसामान्याच्चानुमानम्। * य एवाऽऽप्ता वेदार्थानां द्रष्टारः प्रवक्तारश्च, त एवाऽऽयुर्वेदप्रभृतीनाम्; इत्यायुर्वेदप्रामाण्यवद्वेदप्रामाण्यमनुमातव्यमिति। नित्यत्वाद्वेदवाक्यानां प्रमाणत्वे तत्प्रामाण्यमाप्तप्रामाण्यादित्ययुक्तम्। शब्दस्य वाचकत्वादर्थप्रतिपत्तौ प्रमाणत्वं, न नित्यत्वात्। नित्यत्वे हि सर्वस्य सर्वेण वचनाच्छब्दार्थव्यवस्थाऽनुपपत्तिः। * नानित्यत्वे वाचकत्वमिति चेत्? न, लौकिकेष्वदर्शनात्। * * तेऽपि नित्या इति चेत्? न, अनाप्तोपदेशादर्थविसंवादोऽनुपपन्नः। * नित्यत्वाद्धि शब्दः प्रमाणमिति अनित्यः स इति चेत्? अविशेषवचनम्। अनाप्तोपदेशो लौकिको न नित्य इति कारणं वाच्यमिति। यथानियोगञ्चार्थस्य प्रत्यायनान्नामधेयशब्दानां लोके प्रामाण्यं, नित्यत्वात्प्रामाण्यानुपपत्तिः। यत्रार्थे नामधेयशब्दो नियुज्यते, लोके तस्य नियोगसामर्थ्यात् प्रत्यायको भवति, न नित्यत्वात्। मन्व-

---

अनुमेयम्। तत्र दृष्टान्तमाह, मन्त्राऽऽयुर्वेदप्रामाण्यवदिति।—मन्त्री विषादिनाशकः, आयुर्वेदभागश्च वेदस्य एव, तत्र संवादेन प्रामाण्यग्रहात् तद्दृष्टान्तेन वेदत्वावच्छेदेन

न्तरयुगान्तरेषु चातीतानागतेषु सम्प्रदायाभ्यासप्रयोगाविच्छेदो वेदानां नित्यत्वम्। आप्तप्रामाण्याच्च प्रामाण्यम्; लौकिकेषु शब्देषु चैतत् समानमिति ॥ ६७ ॥

इति वात्स्यायनीये न्यायभाष्ये द्वितीयाध्यायस्याद्यमाह्निकम्।

---

## द्वितीयाध्यायस्य द्वितीयाह्निकम्।

---

अयथार्थः प्रमाणोद्देश इति मत्वाऽऽह।—

**न चतुष्ट्वमैतिह्यार्थाऽऽपत्तिसम्भवाभावप्रामाण्यात्॥१॥**

न चत्वार्य्येव प्रमाणानि। किं तर्हि?—ऐतिह्यम्, अर्थाऽऽपत्तिः, सम्भवः, अभावः इत्येतान्यपि प्रमाणानि। इति होचुरित्यनिर्दिष्टप्रवक्तृकम्प्रवादपारम्पर्य्यमैतिह्यम्। अर्थादापत्तिरर्थाऽऽपत्तिः। आपत्तिः प्राप्तिः प्रसङ्गः। यत्राभिधीयमानेऽर्थे

---

प्रामाण्यम् अनुमेयम्, आप्त गृहीतं, प्रमाणं यत्र स वेदत्वादृशेन वेदत्वेन प्रामाण्यमनुमेयमिति केचित् ॥ ६७ ॥

समाप्तं शब्दविशेषपरीक्षाप्रकरणम्।

इति श्रीविश्वनाथभट्टाचार्य्यकृतायां न्यायसूत्रवृत्तौ विभागपरीक्षानिरपेक्षसाङ्गप्रमाणपरीक्षणं नाम द्वितीयाध्यायस्याद्यमाह्निकम् ॥ १ ॥

---

अथ विभागसापेक्षप्रमाणपरीक्षणं, तदेव चाऽऽह्निकार्थः। चत्वारि चात्र प्रकरणानि। तत्राऽऽदौ चतुष्ट्वपरीक्षाप्रकरणम्। अन्यानि च तत्र तत्र वक्ष्यन्ते, तत्राऽऽक्षेपसूत्रम्। प्रमाणानां न चतुष्ट्वम्; प्रमाणत्वं नोक्तचतुष्कान्यतमत्वव्याप्यम् उक्तान्यवृत्तित्वात्, तत्रान्यवृत्तित्वं व्युत्पादयति, ऐतिह्येत्यादि।—ऐतिह्यम् इति होचुरित्यनेन प्रकारेण यदुच्यते, तद्धि अनिर्दिष्टप्रवक्तृकं परम्पराऽऽगतं वाक्यम्; यथा,—वटे

योऽन्योऽर्थः प्रसज्यते, सोऽर्थाऽऽपत्तिः ; यथा,—मेघेष्वसत्सु वृष्टिर्न भवतीति ; किमत्र प्रसज्यते ? सत्सु भवतीति। सम्भवो नाम—अविनाभाविनोऽर्थस्य सत्ताग्रहणादन्यस्य सत्ताग्रहणम् ; यथा,—द्रोणस्य सत्ताग्रहणादाढ़कस्य सत्ताग्रहणम्। आढ़कस्य सत्ताग्रहणात् प्रस्थस्येति। अभावो विरोधी, अभूतं भूतस्य। अविद्यमानं वर्षकर्म्म विद्यमानस्य वाय्वभ्रसंयोगस्य प्रतिपादकम्। विधारके हि वाय्वभ्रसंयोगे गुरुत्वादपां पतनकर्म्म न भवतीति ॥ १ ॥

सत्यमेतानि प्रमाणानि, न तु प्रमाणान्तराणि, प्रमाणान्तरञ्च मन्यमानेन प्रतिषेध उच्यते, सोऽयम्,—

**शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थाऽऽपत्ति-सम्भवाभावानर्थान्तरभावाच्चाप्रतिषेधः ॥ २ ॥**

अनुपपन्नः प्रतिषेधः। कथम् ? "आप्तोपदेशः शब्दः" इति न च शब्दलक्षणमैतिह्याद्व्यावर्त्तते। सोऽयं भेदः सामान्यात् सङ्गृह्यत इति। प्रत्यक्षेणाप्रत्यक्षस्य सम्बद्धस्य प्रतिपत्तिरनुमानम्। तथा चार्थाऽऽपत्तिसम्भवाभावाः। वाक्यार्थसम्प्रत्ययेनानभिहितस्यार्थस्य

---

वटे यक्ष इत्यादि, तस्य चाऽऽप्तोक्तत्वानिश्चयाच्च शब्देऽन्तर्भाव इति भावः। अर्थाऽऽपत्ति-रनुपपद्यमानेनार्थेनोपपादककल्पनम् ; यथा,—वृष्ट्या मेघज्ञानं, वृष्ट्या सह मेघस्य वैयधिकरण्याच्च व्याप्तिरिति नानुमानेऽन्तर्भावः। सम्भवो भूयः सहचराधीनज्ञानम् ; यथा,—सम्भवति ब्राह्मणे विद्या, सम्भवति सहस्रे शतम्, अत्र च व्याप्तिर्नापेक्षितेत्याशयः। अभावस्तु विरोध्यभावज्ञानाधीनविरोध्यन्तरकल्पनम् ; यथा,—नकुलाभावज्ञानेन नकुल-विरोधिनो व्यालस्य कल्पनम् ; अत्रापि व्याप्तिर्नापेक्षितेत्याशयः ; अथवा कारणाभावा-दिना कार्य्याभावादिज्ञानम् अभावः ; भावनिष्ठव्याप्तिरेवानुमानाङ्गमित्याशयः ॥ १ ॥

सिद्धान्तसूत्रम्।—न प्रमाणचतुष्टयस्य प्रतिषेधः, शब्दे ऐतिह्यस्यानर्थान्तर-भावादन्तर्भावात्, सामान्यत आप्तोक्तत्वज्ञानसम्भवात्, वस्तुत आप्तोक्तत्वज्ञानं न शाब्दे

प्रत्यनीकभावाद् ग्रहणमर्थाऽऽपत्तिरनुमानमेव। अविनाभाववृत्त्या च सम्बद्धयोः समुदायसमुदायिनोः समुदायेनेतरस्य ग्रहणं सम्भवः। तदप्यनुमानमेव। अस्मिन् सतीदं नोपपद्यत इति विरोधित्वे प्रसिद्धे कार्य्यानुत्पत्त्या कारणस्य प्रतिबन्धकमनुमीयते। सोऽयं यथार्थ एव प्रमाणोद्देश इति। सत्यमेतानि प्रमाणानि, न तु प्रमाणान्तराणीत्युक्तम् ॥ २ ॥

यत्तावदर्थाऽऽपत्तेः प्रमाणभावाभ्यनुज्ञा नोपपद्यते, तथा हीयम्,—

## अर्थाऽऽपत्तिरप्रमाणमनैकान्तिकत्वात् ॥ ३ ॥

असत्सु मेघेषु वृष्टिर्न भवतीति। सत्सु भवतीत्येतदर्थादापद्यते। सत्स्वपि चैकदा न भवति, सेयमर्थाऽऽपत्तिरप्रमाणमिति ॥ ३ ॥

## अनर्थाऽऽपत्तावर्थाऽऽपत्त्यभिमानात् ॥ ४ ॥

नानैकान्तिकत्वमर्थाऽऽपत्तेः। असति कारणे कार्य्यं नोत्पद्यत इति वाक्यात् प्रत्यनीकभूतोऽर्थः सति कारणे कार्य्यमुत्पद्यत इत्यर्थादापद्यते। अभावस्य हि भावः प्रत्यनीक इति। सोऽयं कार्य्योत्पादः सति कारणेऽर्थादापद्यमानो न कारणस्य

कारण, किन्तु आकाङ्क्षादिज्ञानम्; योग्यताप्रमाऽधीना च शाब्दप्रमेति, अर्थाऽऽपत्त्यादेरनुमानेऽन्तर्भावः। उपपादककल्पनं हि विना व्याप्तिज्ञानं न सम्भवति, वृष्टित्वादावपि मेघजन्यत्वव्याप्तिरस्त्येव, सम्भवोऽपि व्याप्तिमूलकत्वादनुमानम्; व्याप्त्यनपेक्षित्वे च व्यभिचारादप्रमाणम्, एवमभावो व्याप्तिसापेक्षोऽनुमानम्, अभावनिष्ठव्याप्तेश्चानुमानाङ्गत्वे न विरोध इति भावः ॥ २ ॥

सत्यर्थाऽऽपत्तेः प्रामाण्ये बहिर्भावान्तर्भावचिन्ता, तदेव तु नास्तीति तटस्थः शङ्कते।—असति मेघे वृष्टिर्न भवतीत्यनेन सति मेघे वृष्टिर्भवतीत्यर्थाऽऽपत्तिविषयः, तत्र च न प्रामाण्यं, सत्यपि मेघे वृष्ट्यभावादनैकान्तिकत्वात् ॥ ३ ॥

समाधत्ते।—अर्थाऽऽपत्तेर्नानैकान्तिकत्वमिति शेषः, असत्सु मेघेषु न वृष्टिरित्यनेन सति मेघे वृष्टिरिति। तत्र च वृष्ट्या मेघज्ञानमभिमतम्; यत्र च मेघेन वृष्टिः

सत्तां व्यभिचरति। न खल्वसति कारणे कार्य्यमुत्पद्यते। तस्मान्नानैकान्तिकी। यत्तु सति कारणे निमित्तप्रतिबन्धात् कार्य्यं नोत्पद्यत इति, कारणधर्मोऽसौ न त्वर्थाऽऽपत्तेः प्रमेयम्। किं तर्ह्यस्याः प्रमेयम्? सति कारणे कार्य्यमुत्पद्यत इति। योऽसौ कार्य्योत्पादः कारणस्य सत्तां न व्यभिचरति, एतदस्याः प्रमेयम्। एवन्तु सति अनर्थाऽऽपत्तावर्थाऽऽपत्त्यभिमानं कृत्वा प्रतिषेध उच्यते इति। दृष्टश्च कारणधर्मो न शक्यः प्रत्याख्यातुमिति॥ ४॥

प्रतिषेधाप्रामाण्यञ्चानैकान्तिकत्वात्॥ ५॥

अर्थाऽऽपत्तिर्न प्रमाणमनैकान्तिकत्वादिति वाक्यं प्रतिषेधः। तेनानेनार्थाऽऽपत्तेः प्रमाणत्वं प्रतिषिध्यते, न सद्भावः। एवमनैकान्तिको भवति। अनैकान्तिकत्वादप्रमाणेनानेन न कश्चिदर्थः प्रतिषिध्यते इति॥ ५॥

अथ मन्यसे नियतविषयेष्वर्थेषु स्वविषये व्यभिचारो भवति, न च प्रतिषेधस्यासद्भावो विषयः। एवं तर्हि,—

तत्प्रामाण्ये वा नार्थाऽऽपत्त्यप्रामाण्यम्॥ ६॥

अर्थाऽऽपत्तेरपि कार्य्योत्पादेन कारणसत्ताया अव्यभिचारो

---

ज्ञानं, तत्रानर्थाऽऽपत्तावर्थाऽऽपत्तिभ्रमः। न चैतावता प्रामाण्यविरोधः, व्याघ्रादिभ्रमात् भ्रमानुमितिदर्शनादनुमानस्याप्यप्रामाण्याऽऽपत्तेः, नानैकान्तिकत्वमर्थाऽऽपत्तेरिति भाष्यस्यावतरणिकां सूत्रादौ केचिल्लिखन्ति॥ ४॥

प्रतिबन्दिमप्याह।—त्वदुक्तरीत्या त्वदीयप्रतिषेधस्याप्यप्रामाण्यं स्यात्, अप्रामाण्यसम्भवेऽनैकान्तिकत्वात्, यत्र कुत्रचिदनैकान्तिकत्वस्य प्रतिषेधासाधकत्वादनैकान्तिकत्वात्॥ ५॥

अथ यत्र कुत्रचिदनैकान्तिकत्वं न दोषाय, किन्तु स्वविषये इति यदि, तदाऽर्था-

विषयः ; न च कारणधर्मो निमित्तप्रतिबन्धात् कार्य्यानुत्पादत्व-मिति ॥ ६ ॥

अभावस्य तर्हि प्रमाणभावाभ्यनुज्ञा नोपपद्यते। कथमिति ?—

**नाभावप्रामाण्यं प्रमेयासिद्धेः ॥ ७ ॥**

अभावस्य भूयसि प्रमेये लोकसिद्धे वैयात्यादुच्यते नाभाव-प्रामाण्यं प्रमेयासिद्धेरिति ॥ ७ ॥

अथायमर्थबहुत्वादर्थैकदेश उदाह्रियते,—

**लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्-प्रमेयासिद्धेः ॥ ८ ॥**

तस्याभावस्य सिध्यति प्रमेयम्। कथम् ?—लक्षितेषु वासस्सु अनुपादेयेषु उपादेयानामलक्षितानामलक्षणलक्षितत्वात्, लक्षणाभावेन लक्षितत्वादिति। उभयसन्निधावलक्षितानि वासांस्यानयेति प्रयुक्तो येषु वासस्सु लक्षणानि न भवन्ति, तानि लक्षणाभावेन प्रतिपद्यते, प्रतिपद्य चाऽऽनयति। प्रतिपत्तिहेतुश्च प्रमाणमिति ॥ ८ ॥

---

ऽऽपत्तेरपि नाप्रामाण्यमित्याह।—अनैकान्तिकत्वस्य स्वविषये साधकत्वाद् यदि स्वहेतोः प्रामाण्यं मन्यसे, तदाऽर्थाऽऽपत्तेरपि स्वविषये प्रामाण्यमिति ॥ ६ ॥

अभावस्य न प्रमाणेऽन्तर्भाव इति तटस्थः शङ्कते।—अभावनामकं प्रमाणं तदा स्यात्, यदि तस्य प्रमेयं सिध्येत्, तदेव तु नास्ति। अभावस्य तुच्छत्वान्न तत्र प्रमाणप्रवृत्तिरिति भावः ॥ ७ ॥

सिद्धान्तसूत्रम्।—तस्याभावप्रमाणस्य प्रमेयसिद्धिः, भावप्रधानो निर्देशः। किं तत्प्रमेयम् ? इत्यत्राऽऽह, लक्षितेषु इति।—लक्षितेषु घटादिषु सत्सु, अलक्षितानां तत्प्रमेयत्वसिद्धिः। अलक्षितानां कथं प्रमेयत्वम् ? अत आह, अलक्षणलक्षितत्वादिति।—यद्यप्यभावस्य गुणकर्म्मादिभिर्लक्षणं न सम्भवति, तथाऽप्यलक्षणेनैव तल्लक्षितं भवति। अनीलमानयेत्युक्ते नीलाभावो हि इतरव्यावर्त्तकतया लक्षणम्, अतोऽभावो नाप्रामाणिक इति भावः ॥ ८ ॥

**असत्यर्थे नाभाव इति चेन्नान्यत्र लक्षणोपपत्तेः ॥९॥**

यत्र भूत्वा किञ्चिन्न भवति, तत्र तस्याभावः उपपद्यते। अलक्षितेषु च वासस्सु लक्षणानि भूत्वा न भवन्ति, (घ) तस्मात् तेषु लक्षणाभावोऽनुपपन्न इति चेत् ? न, अन्यलक्षणोपपत्तेः। यथाऽयमन्येषु वासस्सु लक्षणानामुपपत्तिं पश्यति, नैवमलक्षितेषु। सोऽयं लक्षणाभावं पश्यन्नभावेनार्थं प्रतिपद्यत इति ॥९॥

**तत्सिद्धेरलक्षितेष्वहेतुः ॥ १० ॥**

तेषु वासस्सु लक्षितेषु सिद्धिर्विद्यमानता येषां भवति, न तेषामभावो लक्षणानाम्। यानि च लक्षितेषु विद्यन्ते लक्षणानि, तेषामलक्षितेष्वभाव इत्यहेतुः, यानि खलु भवन्ति, तेषामभावो व्याहत इति ॥ १० ॥

**न लक्षणावस्थितापेक्षसिद्धेः ॥ ११॥**

न ब्रूमो यानि लक्षणानि भवन्ति, तेषामभाव इति। किन्तु केषुचिल्लक्षणान्यवस्थितानि, अनवस्थितानि केषुचित्, अपेक्षमाणो येषु लक्षणानां भावं न पश्यति, तानि लक्षणाभावेन प्रतिपद्यत इति ॥ ११ ॥

---

आक्षिप्य समाधत्ते।—असति प्रतियोगिन्यभावो वक्तुं न शक्यते, सति च प्रतियोगिनि कथं तदभावः ? इति चेत्, न ; अन्यत्र लक्षणेन सत्त्वेनार्थात् प्रतियोगिनः, उपपत्तेः अभावव्यवहारोपपत्तेः। न हि तत्रैव प्रतियोगिनः सत्त्वमपेक्षितम् ॥ ९ ॥

आक्षिपते।—लक्षितेषु लक्षणस्य तत्सिद्धेः व्यावर्त्तकत्वासिद्धेः, अलक्षितेषु अभावेषु अहेतुः। अहेतुत्वं व्याहत्यहेतुत्वम्। अभावस्य लक्षणाभावान्निःस्वरूपस्य न व्यावर्त्तकत्वमिति भावः ॥ १० ॥

समाधत्ते।—पूर्वपक्षो न युक्तः। प्रतियोगिनो लक्षणस्य यदवस्थितानवस्थानं, तदपेक्षया यत्र तादृशसिद्धेः। अयमर्थः,—प्रतियोगिस्वरूपज्ञानादेवाभावस्वरूपनिरूपणसम्भवान्नाभावलक्षणापेक्षेति भावः ॥ ११ ॥

---

(घ) अलक्षितेषु वासस्सु भूत्वा इति यावत्।

## प्रागुत्पत्तेरभावोपपत्तेश्च ॥१२॥

अभाववद्द्वैतं खलु भवति। प्राक् चोत्पत्तेरविद्यमानता, उत्पन्नस्य चाऽऽत्मनो हानादविद्यमानता। तत्रालक्षितेषु वासःसु प्रागुत्पत्तेरविद्यमानतालक्षणो लक्षणानामभावो नेतर इति ॥१२॥

"आप्तोपदेशः शब्दः" इति प्रमाणभावे विशेषणं ब्रुवता नानाप्रकारः शब्द इति ज्ञाप्यते। तस्मिन् सामान्येन विचारः,—किं नित्योऽथानित्यः? इति,—

## विमर्शहेत्वनुयोगे च विप्रतिपत्तेः संशयः ॥ १३ ॥

आकाशगुणः शब्दो विभुर्नित्योऽभिव्यक्तिधर्मक इत्येके। गन्धादिसहवृत्तिर्द्रव्येषु सन्निविष्टो गन्धादिवदवस्थितोऽभिव्यक्तिधर्मक इत्यपरे। आकाशगुणः शब्द उत्पत्तिनिरोधधर्मको बुद्धिवदित्यपरे। महाभूतसङ्क्षोभजः शब्दोऽनाश्रित उत्पत्तिधर्मको निरोधधर्मक इत्यन्ये। अतः संशयः,—किमत्र तत्त्वम्? इति ॥ १३ ॥

अनित्यः शब्द इत्युत्तरम्। कथम्?—

## आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च ॥१४॥

आदिर्योनिः कारणम्, आदीयतेऽस्मादिति। कारणवदनित्यं दृष्टं, संयोगविभागजश्च शब्दः कारणवत्त्वादनित्य इति।

---

प्रमेयसिद्धिरिति मण्डूकप्लुत्याऽनुवर्त्तते। प्रतियोगिन उत्पत्तेः प्राक् अभावस्य उपपत्तेः उपलम्भात्; घटो भविष्यतीत्यादिप्रागभावविषयकप्रत्यक्षस्य सार्वलौकिकत्वादिति भावः। चकारेण ध्वंसादेरपि प्रत्यक्षसिद्धत्वं समुच्चीयते। चेष्टाया निर्व्यापारत्वेन न प्रामाण्यं, वस्तुतो लिप्यादिवत् साङ्केतिकत्वात् तस्याप्यनुमाने शब्दे वाऽन्तर्भाव इति ॥ १२ ॥

समाप्तं प्रमाणचतुष्टप्रकरणम्।

वेदस्य प्रामाण्यमाप्तप्रामाण्यात् सिद्धम्। न चेदं युज्यते, वेदस्य नित्यत्वादित्याशङ्कायां

का पुनरियमर्थदेशना कारणवदिति ? उत्पत्तिधर्मकत्वादनित्यः शब्द इति। भूत्वा न भवति विनाशधर्मक इति। सांशयिकमेतत्,—किमुत्पत्तिकारणं संयोगविभागौ शब्दस्य, आहोस्विदभिव्यक्तिकारणम् ? इत्यत आह,—ऐन्द्रियकत्वात्; इन्द्रियप्रत्यासत्तिग्राह्य ऐन्द्रियः। किमयं व्यञ्जकेन समानदेशोऽभिव्यज्यते रूपादिवत् ? अथ संयोगजाच्छब्दाच्छब्दसन्ताने सति श्रोत्रप्रत्यासन्नो गृह्यत इति ? * संयोगनिवृत्तौ शब्दग्रहणान्न व्यञ्जकेन समानदेशस्य ग्रहणम्। * दारुव्रश्चने दारुपरशुसंयोगनिवृत्तौ दूरस्थेन शब्दो गृह्यते, न च व्यञ्जकाभावे व्यङ्ग्यस्य ग्रहणं भवति, तस्मान्न व्यञ्जकः संयोगः। उत्पादके तु संयोगे संयोगजाच्छब्दाच्छब्दसन्ताने सति श्रोत्रप्रत्यासन्नस्य ग्रहणमिति। इतश्च शब्द उत्पद्यते, नाभिव्यज्यते, कृतकवदुपचारात्; तीव्रं मन्दमिति कृतकमुपचर्य्यते, तीव्रं सुखं, मन्दं सुखं, तीव्रं दुःखं, मन्दं दुःखमिति। उपचर्य्यते च तीव्रः शब्दः, मन्दः शब्दः इति। * व्यञ्जकस्य तथाभावात् ग्रहणस्य तीव्रमन्दता रूपवदिति चेत् ? न, अभिभवोपपत्तेः। * संयोगस्य व्यञ्जकस्य तीव्रमन्दतया शब्दग्रहणस्य तीव्रमन्दता भवति, न तु शब्दो भिद्यते, यथा प्रकाशस्य तीव्रमन्दतया रूपग्रहणस्येति। तच्च नैवम्, अभिभवोपपत्तेः। तीव्रो भेरीशब्दो मन्दं तन्त्रीशब्दमभि-

---

वर्णानामनित्यत्वात् कथं तत्समुदायरूपस्य वेदस्य नित्यत्वम् ? इत्याशयेन शब्दानित्यत्वप्रकरणमारभते। तत्र सिद्धान्तसूत्रम्।—शब्दोऽनित्य इत्यादि पूरणीयम्। आदिमत्त्वात् सकारणकत्वात्। ननु न सकारणकत्वं, कण्ठताल्वाद्यभिघातादेर्व्यञ्जकत्वेनाप्युपपत्तेः, अत आह, ऐन्द्रियकत्वादिति।—सामान्यवत्त्वे सति वहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वादित्यर्थः। परे तु ऐन्द्रियकत्वं लौकिकप्रत्यक्षविशेष्यत्वं, सामान्यसमवाययोस्तु न तथात्वम; जातित्वादिना विशेष्यत्वसम्भवेऽपि जातित्वादेरप्रत्यक्षत्वान्न व्यभिचारः। मनस इन्द्रियत्वाभावाच्च नाऽऽत्मनि व्यभिचारः, आत्मन ऐन्द्रियकत्वाभावादित्याहुः।

भवति, न मन्दः, न च शब्दग्रहणमभिभावकम् ; शब्दस्य न भिद्यते, शब्दे तु भिद्यमाने युक्तोऽभिभवः, तस्मादुत्पद्यते शब्दः, नाभिव्यज्यत इति । * अभिभवानुपपत्तिश्च व्यञ्जकसमानदेशस्याभिव्यक्तौ प्राप्त्यभावात् * व्यञ्जकेन समानदेशोऽभिव्यज्यते शब्दः इति, एतस्मिन् पक्षे नोपपद्यतेऽभिभवः ; न हि भेरीशब्देन तन्त्रीस्वनः प्राप्त इति । * अप्राप्ते अभिभव इति चेत् ? शब्दमात्राभिभवप्रसङ्गः । * अथ मन्येतासत्यां प्राप्तावभिभवो भवति इति ? एवं सति यथा भेरीशब्दः कश्चित्तन्त्रीस्वनमभिभवति, एवमन्तिकस्थोपादानमिव दवीयस्थोपादानानपि तन्त्रीस्वनानभिभवेत्, अप्राप्तेरविशेषात् । तत्र क्वचिदेव भेर्यां प्रणादितायां सर्वलोकेषु समानकालास्तन्त्रीस्वना न श्रूयेरन् इति । नानाभूतेषु शब्दसन्तानेषु सत्सु श्रोत्रप्रत्यासत्तिभावेन कस्यचिच्छब्दस्य तीव्रेण मन्दस्याभिभवो युक्त इति । कः पुनरयमभिभवो नाम ?—ग्राह्यसमानजातीयग्रहणकृतमग्रहणमभिभवः, यथोल्काप्रकाशस्य ग्रहणार्हस्याऽऽदित्यप्रकाशेनेति ॥ १४ ॥

**न घटाभावसामान्यनित्यत्वात् नित्येष्वप्यनित्यवदुपचाराच्च ॥ १५ ॥**

न खलु आदिमत्त्वादनित्यः शब्दः । कस्मात् ?—व्यभिचारात् । आदिमतः खलु घटाभावस्य दृष्टं नित्यत्वम् । कथमादिमान् ?—

---

अप्रयोजकत्वमाशङ्क्याऽऽह, कृतकेति ।—कृतके घटादौ, यथा उपचारो ज्ञानं, तथैव कार्य्यत्वप्रकारकप्रत्यक्षविषयत्वादित्यर्थः, तथा च कार्य्यत्वेनानाहार्य्यसार्वलौकिकप्रत्यक्षबलादनित्यत्वमेव सिध्यति । केचित्तु उपचारादिनाश्रित्वात् कृतकवत् इति दृष्टान्त इति । परे तु कृतकवदुपचारात् कृतकसुखदुःखादिवद्व्यवहारात् । यथा हि सुखादौ तीव्रमन्दादिव्यवहारः, शब्देऽप्येवं, न तु नित्ये तथेत्याहुः ॥ १४ ॥

अथामुते हेतूनां व्यभिचारमाशङ्कते ।—नोक्ता हेतवः, घटाभावस्य घटध्वंसस्य,

कारणविभागेभ्यो हि घटो न भवति। कथम् अस्य (ङ) नित्यत्वम्? योऽसौ कारणविभागेभ्यो न भवति, न तस्य (च) अभावो भावेन कदाचिन्निवर्त्त्यत इति। यदप्यैन्द्रियकत्वात्, तदपि व्यभिचरति। ऐन्द्रियकञ्च सामान्यं नित्यञ्चेति। यदपि कृतकवदुपचारादिति, तदपि व्यभिचरति, नित्येष्वनित्यवदुपचारो दृष्टः, यथा हि भवति वृक्षस्य प्रदेशः, कम्बलस्य प्रदेशः ; एवमाकाशस्य प्रदेशः, आत्मनः प्रदेश इति भवतीति ॥ १५ ॥

**तत्त्वभाक्तयोर्नानात्वविभागादव्यभिचारः ॥ १६ ॥**

नित्यमित्यत्र किं तावत्तत्त्वम्? आत्मान्तरस्यानुत्पत्तिधर्मकस्याऽऽत्महानानुपपत्तिर्नित्यत्वम्। तच्चाभावे नोपपद्यते, भाक्तन्तु भवति, यत् तत्राऽऽत्मानमहासीत्, यद्भूत्वा न भवति, न जातु तत्पुनर्भवति, तत्रानित्य इव नित्यो घटाभाव इत्ययं पदार्थः इति। तत्र यथाजातीयकः शब्दः, न तथाजातीयकं कार्य्यं किञ्चिन्नित्यं दृश्यत इत्यव्यभिचारः ॥ १६ ॥

---

नित्यत्वादविनाशित्वात्, आदिमत्त्वं व्यभिचारि, ऐन्द्रियकत्वं सामान्ये व्यभिचारि, नित्येष्वप्यनित्यवदुपचारात् ; यथा,—घटाऽऽकाशमुत्पन्नम्, अहं सुखी जात इत्यादि ॥ १५ ॥

प्रथमे व्यभिचारं परिहरति।—तत्त्वस्य पारमार्थिकस्य, भाक्तस्य च नानात्वस्य भेदस्य, विभागात् विवेकात्, न व्यभिचारः। ध्वंसे हि उत्पत्तिमत्त्वलक्षणम् आदिमत्त्वं वैकालिकत्वरूपनित्यत्वाभावरूपञ्चानित्यत्वमस्त्येवाविनाशित्वान्नित्यत्वमौपचारिकम्, अतो न व्यभिचारः। आदिमत्त्वं प्रागभावावच्छिन्नमत्त्वं, न चैतदभावे इति भावः ॥ १६ ॥

---

(ङ) ध्वंसस्य।

(च) विनष्टस्य वस्तुनः।

यदपि सामान्यनित्यत्वादिति इन्द्रियप्रत्यासत्तिग्राह्य-मैन्द्रियकमिति, न तु इन्द्रियजन्यप्रतीतिविषयत्वम्,—

**सन्तानानुमानविशेषणात् ॥ १७ ॥**

नित्ये व्यभिचार इति प्रकृतम्। नेन्द्रियग्रहणसामर्थ्याच्छब्दस्यानित्यत्वम्; किं तर्हि? इन्द्रियप्रत्यासत्तिग्राह्यत्वात् सन्तानानुमानं, तेनानित्यत्वमिति ॥ १७ ॥

यदपि नित्येष्वप्यनित्यत्ववदुपचारादिति, नैवम्।—

**कारणद्रव्यस्य प्रदेशशब्देनाभिधानान्नित्येष्वप्यव्यभिचार इति ॥ १८ ॥**

आकाशप्रदेश आत्मप्रदेश इति नात्राऽऽकाशाऽऽत्मनोः कारणद्रव्यमभिधीयते, यथा कृतकस्य। कथं ह्यविद्यमानमभिधीयते? अविद्यमानता च प्रमाणतोऽनुपलब्धेः; किं तर्हि तत्राभिधीयते? संयोगस्याव्याप्यवृत्तित्वम्; परिच्छिन्नेन द्रव्येणाऽऽकाशस्य संयोगो नाऽऽकाशं व्याप्नोति, अव्याप्य वर्त्तत इति; तदस्य कृतकेन द्रव्येण सामान्यं, न ह्यामलकयोः संयोग आश्रयं व्याप्नोति, सामान्यकृता च भक्तिराकाशस्य प्रदेश इति। अनेनाऽऽत्मप्रदेशो व्याख्यातः। संयोगवच्च शब्दबुद्ध्यादीनामव्याप्यवृत्तित्वमिति। परीक्षिता च तीव्रमन्दता शब्दतत्त्वं न भक्तिकृतेति। कस्मात् पुनः सूत्रकारस्यास्मिन्नर्थे सूत्रं न श्रूयत इति?—शीलमिदं भगवतः सूत्रकारस्य बहुष्वधिकरणेषु

---

द्वितीये व्यभिचारमुद्धरति।—सन्तानस्यानुमानेऽनुमितिकरणे लिङ्गे, विशेषणात्; सन्तानः सन्तन्यमानः एकधर्मावच्छिन्नत्वेन ज्ञायमानः, तेन सामान्यवत्त्वे सतीति विशेषणीयमिति ॥ १७ ॥

तृतीये व्यभिचारं वारयति।—आकाशे हेतुर्नास्त्येव, आकाशे प्रादेशिक-व्यवहारस्तु गौणः; प्रदेशशब्देन कारणद्रव्यस्य कारणवतो द्रव्यस्याभिधानात्, न

## तदात्मगुणसद्भावादप्रतिषेधः ॥ १४ ॥

तस्या आत्मगुणत्वे सति सद्भावादप्रतिषेधः आत्मनः, यदि स्मृतिरात्मगुणः, एवं सति स्मृतिरुपपद्यते, नान्यदृष्टमन्यः स्मरतीति। इन्द्रियचैतन्ये तु नानाकर्त्तृकाणां विषयग्रहणानाम-प्रतिसन्धानम्; प्रतिसन्धाने वा विषयव्यवस्थाऽनुपपत्तिः। एकस्तु चेतनोऽनेकार्थदर्शी भिन्ननिमित्तः पूर्वदृष्टमर्थम् अनुस्मरतीति, एकस्यानेकार्थदर्शिनो दर्शनप्रतिसन्धानात् स्मृतेरात्मगुणत्वे सति सद्भावः, विपर्य्यये चानुपपत्तिः। स्मृत्याश्रयाः प्राणभृतां सर्वे व्यवहाराः आत्मलिङ्गम्। उदाहरणमात्रमिन्द्रियान्तरविकार इति ॥ १४ ॥

## अपरिसङ्ख्यानाच्च स्मृतिविषयस्य ॥ १५ ॥

अपरिसङ्ख्याय च स्मृतिविषयमिदमुच्यते, न स्मृतेः स्मर्त्तव्य-विषयत्वादिति। येयं स्मृतिरगृह्यमाणेऽर्थे अज्ञासिषमहममुमर्थमिति, एतस्या ज्ञातृज्ञानविशिष्टः पूर्वज्ञातोऽर्थो विषयः, नार्थमात्रम्। ज्ञातवानहममुमर्थम्, असावर्थो मया ज्ञातः, ज्ञातम्, अस्मिन्नर्थे मम ज्ञानमभूदिति चतुर्विधमेतद्वाक्यं स्मृतिविषयज्ञापकं समानार्थम्। सर्वत्र खलु ज्ञाता ज्ञानं ज्ञेयञ्च गृह्यते। अथ प्रत्यक्षेऽर्थे या स्मृतिः, (ज) तया त्रीणि ज्ञानान्येकस्मिन्नर्थे प्रतिसन्धीयन्ते समानकर्त्तृकाणि, न नानाकर्त्तृकाणि, नाकर्त्तृकाणि। किं तर्हि?—एककर्त्तृकाणि। अद्राक्षममुमर्थं,

समाधत्ते।—उक्तप्रतिषेधो न युक्तः, धर्मिग्राहकमानेन स्मृतेरात्मगुणत्वात्परिशेषेणाऽऽत्मगुणत्वसिद्धेः अहं स्मरामीत्यनुभवात्, विषयनिष्ठकार्य्यकारणभावे चैतस्य ज्ञानान्तैवस्य स्मरणाऽऽपत्तेरिति भावः ॥ १४ ॥

विषयाणां स्मर्त्तव्यानां स्मृतिसमवायित्वं स्यादित्याशङ्कां समाधत्ते।—अपरि-

(ज) प्रत्यभिज्ञेति यावत्।

यमेवैतर्हि पश्यामि; अद्राक्षमिति दर्शनं, दर्शनसंविच्च, न ह्यसंविदिते स्वे दर्शने स्यादेतदद्राक्षमिति। ते खल्वेते द्वे ज्ञाने। यमेवैतर्हि पश्यामीति तृतीयं ज्ञानम्। एवमेकोऽर्थस्त्रिभिर्ज्ञानैर्युज्यमानो नाकर्त्तृक:, न नानाकर्त्तृक:; किं तर्हि?—एककर्त्तृक इति। सोऽयं स्मृतिविषयोऽपरिसङ्ख्यायमानो विद्यमान: प्रज्ञातोऽर्थ: प्रतिषिध्यते, नास्त्यात्मा, स्मृते: स्मर्त्तव्यविषयत्वादिति। न चेदं स्मृतिमात्रं स्मर्त्तव्यमात्रविषयं वा, इदं खलु ज्ञानप्रतिसन्धानवत् स्मृतिप्रतिसन्धानम्, एकस्य सर्वविषयत्वात्। एकोऽयं ज्ञाता सर्वविषय: स्वानि ज्ञानानि प्रतिसन्धत्ते, अमुमर्थं ज्ञास्यामि, अमुमर्थं विजानामि, अमुमर्थमज्ञासिषम्, अमुमर्थं जिज्ञासमानश्चिरमज्ञात्वाऽध्यवस्यत्यज्ञासिषमिति। एवं स्मृतिमपि त्रिकालविशिष्टां सुस्मूर्षाविशिष्टाञ्च प्रतिसन्धत्ते। संस्कारसन्ततिमात्रे तु सत्त्वे उत्पद्योत्पद्य संस्कारास्तिरोभवन्ति; स नास्त्येकोऽपि संस्कार:, यस्त्रिकालविशिष्टं ज्ञानं स्मृतिञ्चानुभवेत्; न चानुभवम् अन्तरेण ज्ञानस्य स्मृतेश्च प्रतिसन्धानमहं ममेति चोत्पद्यते, देहान्तरवत्। अतोऽनुमीयते, अस्त्येक: सर्वविषय: प्रतिदेहं स्वज्ञानप्रबन्धं स्मृतिप्रबन्धञ्च प्रतिसन्धत्ते इति। यस्य देहान्तरेषु वृत्तेरभावान्न प्रतिसन्धानं भवतीति ॥ १५ ॥

**नाऽऽत्मप्रतिपत्तिहेतूनां मनसि सम्भवात् ॥ १६ ॥**

न देहादिसङ्घातव्यतिरिक्त आत्मा। कस्मात्?—आत्मप्रतिपत्तिहेतूनां मनसि सम्भवात्। दर्शनस्पर्शनाभ्यामेकार्थग्रहणादित्येवमादीनामात्मप्रतिपादकानां हेतूनां मनसि सम्भव:,

सङ्गानात् आनन्त्यात्। तथा च स्वाभवाद्‌तिरिक्ताऽऽत्मसिद्धि:। इदं न सूत्रं, किन्तु भाष्यमिति केचित् ॥ १५ ॥

समाप्तं चक्षुरद्वैतप्रकरणम्।

यतः मनो हि सर्वविषयमिति, तस्माच्च शरीरेन्द्रियमनोबुद्धिसङ्घातव्यतिरिक्त आत्मेति ॥ १६ ॥

## ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम् ॥ १७ ॥

ज्ञातुः खलु ज्ञानसाधनान्युपपद्यन्ते, चक्षुषा पश्यति, घ्राणेन जिघ्रति, स्पर्शनेन स्पृशति, एवमन्तुः सर्वविषयस्य मतिसाधनमन्तःकरणभूतं सर्वविषयं विद्यते, येनायं मन्यत इति। एवं सति ज्ञातर्य्यात्मसंज्ञा न मृष्यते, मनःसंज्ञाऽभ्यनुज्ञायते, मनसि च मनःसंज्ञा न मृष्यते, मतिसाधनं त्वभ्यनुज्ञायते, तदिदं संज्ञाभेदमात्रं, नार्थे विवाद इति। * प्रत्याख्याने वा सर्वेन्द्रियविलोपप्रसङ्गः।* अथ मन्तुः सर्वविषयस्य मतिसाधनं सर्वविषयं प्रत्याख्यायते नास्तीति। एवं रूपादिविषयग्रहणसाधनान्यपि न सन्तीति सर्वेन्द्रियविलोपः प्रसज्यत इति ॥ १७ ॥

## नियमश्च निरनुमानः ॥ १८ ॥

योऽयं नियम इष्यते, रूपादिग्रहणसाधनान्यस्य सन्ति; मतिसाधनं सर्वविषयं नास्तीति। अयं निरनुमान, नात्रानुमानमस्ति, येन नियमं प्रतिपद्यामह इति। रूपादिभ्यश्च विषयान्तरं सुखादयः, तदुपलब्धौ करणान्तरसद्भावः। यथा चक्षुषा गन्धो न गृह्यत इति करणान्तरं घ्राणम्; एवञ्चक्षु-

---

ननु मनसो नित्यत्वादात्मत्वमस्त्वित्याशङ्कते।—नातिरिक्त आत्मा, आत्मसाधकमानानां मनसि सम्भवात् मनसो नार्थान्तरमिति भावः॥ १६॥

समाधत्ते।—यदि मनसो ज्ञातृत्वं, तदा व्यासङ्गाद्युपपादनाय करणान्तरमवश्यं वाच्यम्; तथा चैको ज्ञाता, ज्ञानसाधनं चैकं सिद्धम्। मन आत्माऽस्त्विति संज्ञामात्रम्; किञ्च, व्यासङ्गोपपादकतया मनसोऽणुत्वं सिद्धम्, आत्मनश्च प्रत्यक्षोपपादकतया महत्त्वमिति भेद आवश्यक इति भावः॥ १७॥

ननु रूपाऽऽदिप्रत्यक्षं सकरणकमस्तु, न तु सुखादिप्रत्यक्षम्, एवं परमाण्वन्तरस्यातो-

घ्राणाभ्यां रसो न गृह्यत इति करणान्तरं रसनम्; एवं शेषेषु। तथा चक्षुरादिभिः सुखादयो न गृह्यन्त इति करणान्तरेण भवितव्यम्, * तच्च ज्ञानायौगपद्यलिङ्गम्।* यच्च सुखाद्युपलब्धौ करणं, तच्च ज्ञानायौगपद्यलिङ्गम्; तस्येन्द्रियमिन्द्रियं प्रति सन्निधेरसन्निधेर्न युगपज्ज्ञानान्युत्पद्यन्ते। तत्र यदुक्तम्,—"आत्मप्रतिपत्तिहेतूनां मनसि सम्भवात्" इति, तदयुक्तम् ॥१८॥

किं पुनरयं देहादिसङ्घातादन्यो नित्यः, उतानित्यः? इति। कुतः संशयः?—उभयथा दृष्टत्वात् संशयः। विद्यमानमुभयथा भवति, नित्यमनित्यञ्च; प्रतिपादिते चाऽऽत्मसद्भावे संशयानिवृत्तेरिति। आत्मसद्भावहेतुभिरेवास्य प्राग् देहभेदादवस्थानं सिद्धम्। ऊर्द्ध्वमपि देहभेदादवतिष्ठते। कुतः?—

**पूर्वाभ्यस्तस्मृत्यनुबन्धात् जातस्य हर्षभयशोकसम्प्रतिपत्तेः ॥ १९ ॥**

जातः खल्वयं कुमारकोऽस्मिन् जन्मन्यगृहीतेषु हर्षभयशोकहेतुषु हर्षभयशोकान् प्रतिपद्यते लिङ्गानुमेयान्, ते च स्मृत्यनुबन्धादुत्पद्यन्ते, नान्यथा, स्मृत्यनुबन्धश्च पूर्वाभ्यासम् अन्तरेण न भवति, पूर्वाभ्यासश्च पूर्वजन्मनि सति, नान्यथा; इति सिध्यत्येतत्—अवतिष्ठतेऽयमूर्द्ध्वं शरीरभेदादिति ॥१९॥

न्द्रियत्वेऽपि मनसः प्रत्यक्षं स्यादताऽऽह।—उक्तो नियमविशेषो निरनुमानः निष्प्रमाणकः, गौरवाद्वैपरीत्ये च विनिगमकाभावाच्चेति भावः ॥ १८ ॥

समाप्तं मनोभेदप्रकरणम्।

एवं साधितेऽपि देहादिभिन्ने आत्मनि, विना तन्नित्यतां न परलोकार्थिनः प्रवृत्तिः, अत आत्मनित्यताप्रतिपादनाय सूत्रम्।—जातस्य बालस्य एतज्जन्माननुभूतेषु अपि हर्षाऽऽदिहेतुषु सत्सु हर्षाऽऽदीनां सम्प्रतिपत्तिः उत्पत्तिः, तस्याः पूर्वपूर्वानुभवाधीनस्मृतिसम्बन्धादेव सम्भवात्। इत्थं चेदानीन्तनस्याऽऽत्मनः पूर्वपूर्वसिद्धौ तस्यानादित्वम्, अनादेश्च भावस्य न नाश इति नित्यत्वसिद्धिरिति भावः ॥ १९ ॥

**पद्माऽऽदिषु प्रबोधसम्मीलनविकारवत्तद्विकारः ॥२०॥**

यथा पद्माऽऽदिष्वनित्येषु प्रबोधसम्मीलनं विकारो भवति, एवमनित्यस्याऽऽत्मनो हर्षभयशोकसम्प्रतिपत्तिर्विकारः स्यात् । हेत्वभावादयुक्तम् । अनेन हेतुना पद्माऽऽदिषु प्रबोधसम्मीलनविकारवदनित्यस्याऽऽत्मनो हर्षाऽऽदिसम्प्रतिपत्तिरिति । नात्रोदाहरणसाधर्म्यात् साध्यसाधनहेतुर्न वैधर्म्यादस्ति, हेत्वभावात् असम्बद्धार्थकमपार्थकमुच्यत इति । * दृष्टान्ताच्च हर्षाऽऽदिनिमित्तस्यानिवृत्तिः * या चेयमासेवितेषु विषयेषु हर्षाऽऽदिसम्प्रतिपत्तिः स्मृत्यनुबन्धकृता प्रत्यात्मं गृह्यते, सेयं पद्माऽऽदिसम्मीलनदृष्टान्तेन न निवर्त्तते, यथा चेयं न निवर्त्तते, तथा जातस्यापीति । क्रियाजाती च पर्णविभागसंयोगौ प्रबोधसम्मीलने, क्रियाहेतुश्चानुमेयः । एवञ्च सति किं दृष्टान्तेन प्रतिषिध्यते ॥ २० ॥

अथ निर्निमित्तः पद्माऽऽदिषु प्रबोधसम्मीलनविकार इति मतम् ; एवमात्मनोऽपि हर्षाऽऽदिसम्प्रतिपत्तिरिति, तच्च,—

**नोष्णशीतवर्षाकालनिमित्तत्वात् पञ्चाऽऽत्मकविकाराणाम् ॥ २१ ॥**

उष्णादिषु सत्सु भावात् असत्सु अभावात् तन्निमित्ताः पञ्चभूतानुग्रहेण निर्वृत्तानां पद्माऽऽदीनां प्रबोधसम्मीलनविकाराः, इति न निर्निमित्ताः । एवं हर्षाऽऽदयो विकाराः निमित्ताद्भवितुमर्हन्ति, न निमित्तमन्तरेण ; न चान्यत्

---

अत्र प्रक्षते ।—बालस्य हर्षाऽऽदयो मुखविकासादनुमेयाः, न च तत्सम्भवः, पद्माऽऽदीनां प्रबोधादिवददृष्टविशेषाधीनक्रियावशादेव तदुपपत्तेरिति भावः ॥ २० ॥

सिद्धान्तसूत्रम् ।—उक्तं न युक्तं, यतः पञ्चाऽऽत्मकानां पाञ्चभौतिकानां पद्माऽऽदीनां,

पूर्वाभ्यस्तस्मृत्यनुबन्धात् निमित्तमस्तीति । न चोत्पत्तिनिरोधकारणानुमानमात्मनो दृष्टान्तात्, न हर्षाऽऽदीनां निमित्तमन्तरेणोत्पत्तिः, नोष्णादिवन्निमित्तान्तरोपादानं हर्षाऽऽदीनां, तस्मादयुक्तमेतत् ॥ २१ ॥

इतश्च नित्य आत्मा,—

## प्रेत्याऽऽहाराभ्यासकृतात् स्तन्याभिलाषात् ॥ २२ ॥

जातमात्रस्य वत्सस्य प्रवृत्तिलिङ्गः स्तन्याभिलाषो गृह्यते, स च नान्तरेणाऽऽहाराभ्यासम् । कया युक्त्या ?—दृश्यते हि शरीरिणां क्षुधापीड्यमानानामाहाराभ्यासकृतात् स्मरणानुबन्धादाहाराभिलाषः, न च पूर्वशरीरमन्तरेणासौ जातमात्रस्योपपद्यते ; तेनानुमीयते भूतपूर्वं शरीरं, यत्रानेनाऽऽहारोऽभ्यस्त इति । स खल्वयमात्मा पूर्वशरीरात् प्रेत्य शरीरान्तरमापन्नः क्षुत्पीड़ितः पूर्वाभ्यस्तमाहारमनुस्मरन् स्तन्यमभिलषति, तस्मान्न देहभेदादात्मा भिद्यते, भवत्येवोर्द्ध्वं देहभेदादिति ॥ २२ ॥

## अयसोऽयस्कान्ताभिगमनवत् तदुपसर्पणम् ॥ २३ ॥

यथा खलु अयः अभ्यासमन्तरेणायस्कान्तमुपसर्पति, एवम् आहाराभ्यासमन्तरेण बालः स्तन्यमभिलषति ॥ २३ ॥

---

ये विकाराः तेषाम्, उष्णकालाऽऽदिनिमित्तत्वात् । मनुष्याऽऽदीनान्तु हर्षाऽऽदिनिमित्तका मुखविकासादय इति न तुल्यतेति भावः ॥ २१ ॥

आत्मनित्यत्वे हेत्वन्तरमाह ।—प्रेत्य मृत्वा, जातमात्रस्य यः स्तन्याभिलाषः, स तावदाहाराभ्यासजनितः ; जन्मान्तरीयाऽऽहारेष्टसाधनताधीजन्यजीवनादृष्टोद्बोधितसंस्काराधानेष्टसाधनतास्मरणेन हि बालः स्तन्यपाने प्रवर्त्तत इत्यनादित्वमिति ॥ २२ ॥

शङ्कते ।—यथाऽयस्कान्तसन्निहितस्यायसोऽयस्कान्ताभिमुखतया गमनं, तथैव वत्सस्यापि स्तनोपसर्पणम् ; न त्विष्टसाधनताज्ञानाधीनप्रवृत्तिजन्यचेष्टेयमित्यर्थः ॥ २३ ॥

किमिदमयसोऽयस्कान्ताभिसर्पणं निर्निमित्तम्? अथ निमित्तात्? इति। निर्निमित्तं तावत्,—

**नान्यत्र प्रवृत्त्यभावात् ॥ २४ ॥**

यदि निर्निमित्तं, लोष्टाऽऽदयोऽप्ययस्कान्तमुपसर्पेयुः, न जातु नियमे कारणमस्तीति। अथ निमित्तात्, तत्केनोपलभ्यते? इति। क्रियालिङ्गः क्रियाहेतुः, क्रियानियमलिङ्गश्च क्रियाहेतुनियमः, तेनान्यत्र प्रवृत्त्यभावः। बालस्यापि नियतमुपसर्पणं क्रियोपलभ्यते। न च स्तन्याभिलाषलिङ्गमन्यदाहाराभ्यासकृतात् स्मरणानुबन्धात् निमित्तं दृष्टान्तेनोपपाद्यते, न चासति निमित्ते कस्यचिदुत्पत्तिः, न च दृष्टान्तो दृष्टमभिलाषहेतुं बाधते, तस्मादयसोऽयस्कान्ताभिगमनमदृष्टान्त इति। अयसः खल्वपि नान्यत्र प्रवृत्तिर्भवति, न जात्वयो लोष्टमुपसर्पति, किंकृतोऽस्य नियम इति, यदि कारणनियमात्, स च क्रियानियमलिङ्गः। एवं बालस्यापि नियतविषयोऽभिलाषः कारणनियमाद्भवितुमर्हति, तच्च कारणमभ्यस्तस्मरणम् अन्यद्वेति दृष्टेन विशिष्यते, दृष्टो हि शरीरिणामभ्यस्तस्मरणादाहाराभिलाष इति ॥ २४ ॥

इतश्च नित्य आत्मा। कस्मात्?—

**वीतरागजन्मादर्शनात् ॥ २५ ॥**

सरागो जायत इत्यर्थादापद्यते। अयं जायमानो रागानुबद्धो जायते। रागस्य पूर्वानुभूतविषयानुचिन्तनं योनिः, पूर्वानु-

---

समाधत्ते।—स्तन्यपान एव बालः प्रवर्त्तते, न लन्यत्रेति नियमः कथं स्यात्? वस्तुतस्तु अन्यत्र वयसि प्रवृत्त्यभावात्, प्रवृत्तिर्हि चेष्टाऽनुमिता लिङ्गं, न तु क्रियामात्रम्, अतो न व्यभिचार इति भावः ॥ २४ ॥

हेत्वन्तरमाह।—वीतरागो रागशून्यश्चावश्योत्पद्यते, अपि तु सरागः, तत्र च

भवञ्च विषयाणामन्यस्मिन् जन्मनि शरीरमन्तरेण नोपपद्यते, सोऽयमात्मा पूर्वशरीरानुभूतान् विषयाननुस्मरन् तेषु तेषु रज्यते ; तथा चायं द्वयोर्जन्मनोः प्रतिसन्धिः। एवं पूर्वशरीरस्य पूर्वतरेण पूर्वतरस्य पूर्वतमेनेत्यादिनाऽनादिश्चेतनस्य शरीरयोगः ; अनादिश्च रागानुबन्धः, इति सिद्धं नित्यत्वमिति ॥ २५ ॥

कथं पुनर्ज्ञायते पूर्वविषयानुचिन्तनजनितो जातस्य रागः ? न पुनः,—

## सगुणद्रव्योत्पत्तिवत् तदुत्पत्तिः ॥ २६ ॥

यथोत्पत्तिधर्मकस्य द्रव्यस्य गुणाः कारणत उत्पद्यन्ते, तथोत्पत्तिधर्मकस्याऽऽत्मनो रागः कुतश्चिदुत्पद्यते, अत्रायमुदितानुवादो निदर्शनार्थः ॥ २६ ॥

## न सङ्कल्पनिमित्तत्वाद्रागादीनाम् ॥ २७ ॥

न खलु सगुणद्रव्योत्पत्तिवदुत्पत्तिरात्मनो रागस्य च। कस्मात् ?—सङ्कल्पनिमित्तत्वाद्रागादीनाम्। अयं खलु प्राणिनां विषयान् आसेवमानानां सङ्कल्पजनितो रागो गृह्यते। सङ्कल्पश्च पूर्वानुभूतविषयानुचिन्तनयोनिः, तेनानुमीयते,—जातस्यापि पूर्वानुभूतार्थचिन्तनकृतो राग इति। आत्मोत्पादाधिकरणात्तु रागोत्पत्तिर्भवन्ती सङ्कल्पादन्यस्मिन् रागकारणे सति वाच्या, कार्य्यद्रव्यगुणवत् ; न चाऽऽत्मोत्पादः सिद्धः, नापि सङ्कल्पादन्यद्रागकारणमस्ति ; तस्मादयुक्तं सगुणद्रव्योत्पत्तिवत्तयोरुत्पत्ति-

---

जन्मान्तरीयेष्टसाधनताज्ञानाधीनस्मरणं हेतुरिति पूर्वं स्तन्याभिलाष उक्तः ; सम्प्रति तु पतगाऽऽदीनां कणादिभक्षणाभिलाषसाधारणं रागमात्रमित्यपौनरुक्त्यम् ॥ २५ ॥

शङ्कते।—द्रव्यस्य घटादेः, यथा रूपगुणस्य रूपादिविशिष्टस्य, उत्पत्तिः ; यथा घटादिः स्वत एव रूपादिमान् भवति, तथैवाऽऽत्माऽपि स्वत एव सरागो भवतीत्यप्रयोजकत्वं त्वदीयहेतूनामिति भावः ॥ २६ ॥

समाधत्ते।—सङ्कल्पो ज्ञानम्, इष्टसाधनताज्ञानम् इति यावत्, तन्निमित्तका हि

रिति। अथापि सङ्कल्पादन्यद्रागकारणं धर्माधर्मलक्षणमदृष्ट-मुपादीयते, तथाऽपि पूर्वशरीरयोगोऽप्रत्याख्येयः। तत्र हि तस्य निर्वृत्तिः, नास्मिन् जन्मनि, तन्मयत्वाद्राग इति। विषया-भ्यासः खल्वयं भावनाहेतुः तन्मयत्वमुच्यत इति। जातिविशे-षाच्च रागविशेष इति। कर्म खल्विदं जातिविशेषनिर्वर्त्तकम्; तादर्थ्यात्ताच्छब्द्यं विज्ञायते, तस्मादनुपपन्नं सङ्कल्पादन्य-द्रागकारणमिति ॥ २७ ॥

"अनादिश्चेतनस्य शरीरयोगः" इत्युक्तम्। स्वकृतकर्मनिमित्तं चास्य शरीरं सुखदुःखाधिष्ठानम्; तत् परीक्ष्यते,—किं घ्राणादिवदेकप्रकृतिकम्? उत नानाप्रकृति? इति। कुतः संशयः?—विप्रतिपत्तेः संशयः; पृथिव्यादीनि भूतानि सङ्ख्या-विकल्पेन शरीरप्रकृतिरिति प्रतिजानत इति। किं तत्र तत्त्वम्?—

पार्थिवं गुणान्तरोपलब्धेः ॥ २८ ॥

तत्र मानुषं शरीरं पार्थिवम्। कस्मात्?—गुणान्तरोपलब्धेः। गन्धवती पृथिवी, गन्धवच्छरीरम्, अबादीनामगन्धवत्वात् तत्प्रकृत्यगन्धं स्यात्; न त्विदमबादिभिरसम्पृक्तया पृथिव्याऽऽरब्धं चेष्टेन्द्रियार्थाऽऽश्रयभावेन कल्पते, इत्यतः पञ्चानां भूतानां संयोगे सति शरीरं भवति, भूतसंयोगो हि मिथः पञ्चानां न निषिद्ध इति। आप्यतैजसवायव्यानि लोकान्तरे शरीराणि, तेष्वपि भूतसंयोगः पुरुषार्थतन्त्र इति। स्थाल्यादिद्रव्यनिष्पत्तावपि निःसंशया नाबादिसंयोगमन्तरेण निष्पत्तिरिति। * पार्थिवा-ऽऽप्यतैजसं तद्गुणोपलब्धेः। * *निश्वासोच्छ्वासोपलब्धेश्चातुर्भौति-

रागादयः, तथा चेष्टसाधनताज्ञानत्वेनेच्छात्वादिना कार्य्यकारणभावात्, प्रवृत्तित्वेन चेष्टात्वेन च कार्य्यकारणभावान्नाप्रयोजकत्वमिति भावः ॥ २७ ॥

समाप्तमनादिनिधनप्रकरणम्।

क्रमप्राप्ते शरीरपरीक्षणे मानुषाऽऽदिशरीरं पाञ्चभौतिकमित्येके। तत्र सिद्धान्त-

कम्। * * गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम्।* त इमे सन्दिग्धा हेतव इत्युपेक्षितवान् सूत्रकारः। कथं सन्दिग्धाः?—सति च प्रकृतिभावे भूतानां धर्मोपलब्धिः, असति च संयोगाप्रतिषेधात् सन्निहितानामिति; यथा स्थाल्यामुदकतेजोवाय्वाकाशानामिति। तदिदमनेकभूतप्रकृतिशरीरम् (भ) अगन्धमरसमरूपमस्पर्शञ्च प्रकृत्यनुविधानात् स्यात्, न त्विदमित्यम्भूतं, तस्मात् पार्थिवं गुणान्तरोपलब्धेः॥ २८॥

**पार्थिवाऽऽप्यतैजसं तद्गुणोपलब्धेः॥ २८॥ क॥**

**निश्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम्॥ २८॥ ख॥**

**गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम्॥ २८॥ ग॥**

सूत्रम्।—मानुषाऽऽदिशरीरं पार्थिवं पृथिवीसमवायिकारणकं, गुणान्तरस्य गन्धनीलाऽऽदिरूपकाठिन्यादेः, उपलब्धेरिति॥ २८॥

मतान्तराभिधानाय त्रिसूत्री।—तद्गुणानां पृथिव्यप्तेजोगुणानां गन्धस्नेहोष्णस्पर्शानाम्, उपलब्धेः। एतावता त्रिभौतिकत्वे सिद्धे निश्वासादितश्चातुर्भौतिकत्वम्। निश्वासोच्छ्वासौ प्राणवायोर्व्यापारविशेषौ। क्लेदो जलविशेषः, जलविशिष्टपृथिवी वा, इत्युभयथाऽपि जलमावश्यकम्। भुक्ताशादेर्जठरानलैः पाकस्य तेजःसंयोगाधीनत्वात्तेजःसिद्धिः। व्यूहो निश्वासादिः। अवकाशदानं छिद्रम्। एतानि मतानि सूत्रकृता तुच्छत्वान्न दूषितानि। तथा हि, एकस्मिन् शरीरे पृथिवीत्वादिनानाजातेः सङ्कराऽऽपत्तेरसम्भवात्, न वा नानोपादानकत्वं, विजातीयानामनारम्भकत्वात्; तथात्वे वा जलाद्यारब्धस्य न पृथिवीत्वं, व्यभिचारात्; न वा चित्रद्रव्यं, गन्धवत्त्वविरोधात्; गन्धादीनामानाशमनपायाच्च पार्थिवत्वमित्युक्तप्रायम्; यदा पार्थिवत्वे कथं जलादिसम्बन्धः? इत्याशङ्कायां जलादिनिमित्तवशाच्चैभौतिकत्वादिव्यपदेश इत्याशयेन त्रिसूत्री॥ २८॥ क॥ ख॥ ग॥

इति वृत्तिसम्मतानि अधिकसूत्राणि।

(भ) भूतानां परस्परोपमर्दकत्वेनेति यावत्।

श्रुतिप्रामाण्याच्च ॥ २९ ॥

"सूर्य्यन्ते चक्षुर्गच्छतात्" इत्यत्र मन्त्रे "पृथिवीन्ते शरीरम्" इति श्रूयते, तदिदं प्रकृतौ विकारस्य प्रलयाभिधानमिति। "सूर्य्यं ते चक्षुः स्पृणोमि" इत्यत्र मन्त्रान्तरे "पृथिवीन्ते शरीरम्" इति श्रूयते, सेयं कारणाद्विकारस्य सृतिरभिधीयत इति। स्थाल्यादिषु च तुल्यजातीयानामेककार्य्याऽऽरम्भदर्शनात् भिन्नजातीयानामेककार्य्याऽऽरम्भानुपपत्तिः ॥ २९ ॥

अथेदानीमिन्द्रियाणि प्रमेयक्रमेण विचार्य्यन्ते, किमाव्यक्तिकानि? आहोस्विद्भौतिकानि? इति। कुतः संशयः?—

कृष्णसारे सत्युपलम्भाद्व्यतिरिच्य चोपलम्भात् संशयः ॥ ३० ॥

कृष्णसारं भौतिकं, तस्मिन्ननुपहते रूपोपलब्धिः, उपहते चानुपलब्धिरिति। व्यतिरिच्य कृष्णसारमवस्थितस्य विषयस्योपालम्भः, न कृष्णसारप्राप्तस्य, न चाप्राप्यकारित्वमिन्द्रि-

---

पार्थिवत्वे युक्त्यन्तरमाह।—"सूर्य्यन्ते चक्षुः स्पृणामि" इति मन्त्रान्ते "पृथिवीं ते शरीरम्" इत्यभिधानात्, एवं प्रकृतौ विकारस्य लयाभिधाने "सूर्य्यन्ते चक्षुर्गच्छतात्" इति मन्त्रान्ते "पृथिवीं ते शरीरम्" इति। इमां चतुःसूत्रीं केचन भाष्यतया वर्णयन्ति, तन्न; तथा सत्येकसूत्रस्य प्रकरणत्वानुपपत्तेः; अत एव चतुर्थं सूत्रमेवेत्यपरे। अन्ये सूत्रत्रयेवानुपपत्त्या "आप्यतैजसवायव्यानि लोकान्तरशरीराणि, तेष्वपि भूतसंयोगः पुरुषार्थतन्त्रः" इति भाष्यं सूत्रतया वर्णयन्ति; तदर्थस्तु,—आप्यादीनि लोकान्तरेषु वरुणलोकादिषु, प्रसिद्धानि शरीराणि। जलादिरूपत्वे कथमुपभोगक्षमता? इत्यत्र तेष्वपीति।—भूतसंयोगः पृथिव्युपष्टम्भः, पुरुषार्थतन्त्र उपभोगसम्पादकः ॥ २९ ॥

समाप्तं शरीरपरीक्षाप्रकरणम्।

अथेन्द्रियं परीक्षणीयम्। तत्र लक्षणसूत्रोक्त-भौतिकत्वमिन्द्रियाणां परीक्षितं संशयमाह।—कृष्णसारे चक्षुर्गोलके, सति घटाद्युपलम्भाद्गोलकस्येन्द्रियत्वमिति बौद्धाः। व्यतिरिच्य विषयं प्राप्य, उपलम्भात् उपलम्भजननात्, गोलकातिरिक्तानीत्यपरे। तत्र

याणाम् ; तदिदमभौतिकत्वे विभुत्वात् सम्भवति । एवमुभय-धर्मोपलब्धेः संशयः ॥ ३० ॥

अभौतिकानि इत्याह । कस्मात् ?—

**महदणुग्रहणात् ॥ ३१ ॥**

महदिति महत्तरं महत्तमं चोपलभ्यते ; यथा,—न्यग्रोध-पर्वतादि । अणित्यणुतरमणुतमञ्च गृह्यते ; यथा,—न्यग्रोध-धानादि । तदुभयमुपलभ्यमानं चक्षुषो भौतिकत्वं बाधते, भौतिकं हि यावत्, तावदेव व्याप्नोति, अभौतिकन्तु विभुत्वात् सर्वव्यापकमिति ॥ ३१ ॥

न महदणुग्रहणमात्रादभौतिकत्वं विभुत्वञ्चेन्द्रियाणां शक्यं प्रतिपत्तुम् । इदं खलु,—

**रश्म्यर्थसन्निकर्षविशेषात् तद्ग्रहणम् ॥ ३२ ॥**

तयोर्महदण्वोर्ग्रहणं चक्षूरश्मेरर्थस्य च सन्निकर्षविशेषाद् भवति ; यथा,—प्रदीपरश्मेरर्थस्य चेति । रश्म्यर्थसन्निकर्षश्चा-ऽऽवरणलिङ्गः, चाक्षुषो हि रश्मिः कुड्यादिभिरावृतमर्थं न प्रकाशयति ; यथा,—प्रदीपरश्मिरिति ॥ ३२ ॥

---

इन्द्रियाणि गोलकातिरिक्तानि न वेति संशयः । गोलकातिरिक्तानीति नैयायिकाऽऽदयः । तत्राप्य भौतिकान्याहङ्कारिकाणीति साङ्ख्याः, भौतिकानीत्यपरे ॥ ३० ॥

तत्र साङ्ख्यमतेन बौद्धमतमुदस्यन्नाह ।—गोलकं चेन्द्रियम्, अप्राप्यकारित्वेऽति-प्रसङ्गात् ; इत्यञ्च गोलकातिरिक्तं भौतिकमिति वाच्यम् ; तदप्यसङ्गतम् । चक्षुषा हि न्यूनपरिमाणं महत्परिमाणञ्च गृह्यते । न च न्यूनेन महतो व्यापः सम्भवति, न च अव्याप्य ग्रहणम्, अतोऽभौतिकानीन्द्रियाण्याहङ्कारिकाणीति ॥ ३१ ॥

साङ्ख्यं निरस्यति ।—रश्मिर्गोलकावच्छिन्नं तेजः, तेनार्थस्य घटादेः, यः सन्निकर्ष-विशेषः संयोगविशेषः, तस्मात्, तयोर्महदण्वोः, ग्रहणमुपपद्यते ; भौतिकेऽपि प्रदीपादौ महदणुप्रकाशकत्वं दृष्टम्, अभौतिकत्वे तु पुरःपश्चाद्वर्त्तिनां सर्वेषामेव ग्रहः स्यात् ॥ ३२ ॥

आवरणानुमेयत्वे सतीदमाह,—

**तदनुपलब्धेरहेतुः ॥ ३३ ॥**

रूपस्पर्शवद्धि तेजः, महत्त्वादनेकद्रव्यवत्त्वाद्रूपवत्त्वाच्चोपलब्धिरिति। प्रदीपवत् प्रत्यक्षत उपलभ्येत, चक्षुषो रश्मिर्यदि स्यादिति ॥ ३३ ॥

**नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः ॥ ३४ ॥**

सन्निकर्षप्रतिषेधार्थेनाऽऽवरणेन लिङ्गेनानुमीयमानस्य रश्मेर्या प्रत्यक्षतोऽनुपलब्धिः, नासावभावं प्रतिपादयति; यथा,—चन्द्रमसः परभागस्य, पृथिव्याश्चाधोभागस्य ॥ ३४ ॥

**द्रव्यगुणधर्मभेदाच्चोपलब्धिनियमः ॥ ३५ ॥**

भिन्नः खल्वयं द्रव्यधर्मो गुणधर्मश्च, महदनेकद्रव्यवच्च विभक्तावयवमाप्यं द्रव्यं प्रत्यक्षतो नोपलभ्यते, स्पर्शस्तु शीतो गृह्यते, तस्य द्रव्यस्यानुबन्धात् हेमन्तशिशिरौ कल्प्येते। तथाविधमेव च तैजसं द्रव्यमनुद्भूतरूपं सह रूपेण नोपलभ्यते, स्पर्शस्त्वस्योष्ण उपलभ्यते, तस्य द्रव्यस्यानुबन्धात् ग्रीष्मवसन्तौ कल्प्येते ॥ ३५ ॥

---

तैजसे चक्षुष्यनुपलब्धिबाधं बौद्धः शङ्कते।—रश्म्यर्थसन्निकर्षो न हेतुः, गोलकातिरिक्तस्य रश्मेरनुपलब्धेः ॥ ३३ ॥

समाधत्ते।—रूपोपलब्धेः सकरणकत्वादिनाऽनुमीयमानस्य चक्षुषः प्रत्यक्षतोऽनुपलब्धिर्नाभावनिर्णायिकेत्यर्थः ॥ ३४ ॥

कथं तर्हि नोपलम्भः ? इत्यत आह।—द्रव्यस्य धर्मभेदो महत्त्वादिः, गुणस्य धर्मभेदः उद्भूतत्वं, तदधीनत्वात् प्रत्यक्षस्य द्रव्यमात्रे उपलब्धिर्न नियमः, यत्रोद्भूतरूपं महत्त्वादिकं, तस्य प्रत्यक्षं, तदभावाच्चक्षुरादेरप्रत्यक्षम् ॥ ३५ ॥

यत्र त्वेषा भवति,—

**अनेकद्रव्यसमवायाद्रूपविशेषाच्च रूपोपलब्धिः॥३६॥**

यत्र रूपञ्च द्रव्यञ्च तदाश्रयः प्रत्यक्षत उपलभ्यते रूपविशेषस्तु, यद्भावात् क्वचिद्रूपोपलब्धिः, यदभावाच्च द्रव्यस्य क्वचिदनुपलब्धिः, स रूपधर्मोऽयमुद्भवसमाख्यात इति। अनुद्भूतरूपश्चायं नायनो रश्मिः, तस्मात्प्रत्यक्षतो नोपलभ्यत इति। दृष्टश्च तैजसो धर्मभेदः। उद्भूतरूपस्पर्शं प्रत्यक्षं तेजः; यथा,—आदित्यरश्मयः। उद्भूतरूपमनुद्भूतस्पर्शञ्च प्रत्यक्षम्; यथा,—प्रदीपरश्मयः। उद्भूतस्पर्शमनुद्भूतरूपमप्रत्यक्षम्; यथा,—अबादिसंयुक्तं तेजः। अनुद्भूतरूपस्पर्शोऽप्रत्यक्षः,—चाक्षुषो रश्मिरिति ॥ ३६ ॥

**कर्मकारितश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः॥३७॥**

यथा चेतनस्यार्थो विषयोपलब्धिभूतः सुखदुःखोपलब्धिभूतश्च कल्पते, तथेन्द्रियाणि व्यूढानि। विषयप्राप्त्यर्थश्च रश्मेश्चाक्षुषस्य व्यूहः, रूपस्पर्शानभिव्यक्तिश्च व्यवहारप्रक्लृप्त्यर्था, द्रव्यविशेषे च प्रतीघातादावरणोपपत्तिर्व्यवहारार्था, सर्वद्रव्याणां विश्वरूपो व्यूह इन्द्रियवत्कर्मकारितः पुरुषार्थतन्त्रः। कर्म तु धर्माधर्मभूतं चेतनस्योपभोगार्थमिति ॥ ३७ ॥

**अव्यभिचाराच्च प्रतीघातो भौतिकधर्मः ॥ ३८ ॥**

यश्चाऽऽवरणोपलम्भादिन्द्रियस्य द्रव्यविशेषे प्रतीघातः, स भौतिकधर्मो न भूतानि व्यभिचरति, नाभौतिकं प्रतिघातधर्मकं दृष्टमिति। अप्रतिघातस्तु व्यभिचारी, भौतिकाभौति-

चक्षुरादावुद्भूतरूपमेव न कुतः? इत्याशङ्कायां भाष्यम्।—अदृष्टविशेषाधीन इन्द्रियाणां व्यूहो रचनाविशेष उपभोगसाधनमिति। सूत्रमेवेदमिति केचित् ॥ ३७ ॥

कयोः समानत्वादिति। यदपि मन्यते प्रतिघाताद्भौतिकानीन्द्रियाणि, अप्रतिघातादभौतिकानीति प्राप्तम्; दृष्टश्चाप्रतिघातः काचाभ्रपटलस्फटिकान्तरितोपलब्धेः, तन्न युक्तम्; कस्मात्?—यस्माद्भौतिकमपि न प्रतिहन्यते काचाभ्रपटलस्फटिकान्तरितप्रकाशात् प्रदीपरश्मीनाम्; स्थाल्यादिषु पाचकस्य तेजसोऽप्रतिघातः॥ ३८॥

उपपद्यते चानुपलब्धिः कारणभेदात्।—

**मध्यन्दिनोल्काप्रकाशानुपलब्धिवत्तदनुपलब्धिः॥ ३९॥**

यथाऽनेकद्रव्येण समवायाद्रूपविशेषाच्चोपलब्धिरिति, सत्युपलब्धिकारणे मध्यन्दिनोल्काप्रकाशो नोपलभ्यते आदित्यप्रकाशेनाभिभूतः; एवं महदनेकद्रव्यवत्त्वाद्रूपविशेषाच्चोपलब्धिरिति। सत्युपलब्धिकारणे चाक्षुषो रश्मिर्नोपलभ्यते निमित्तान्तरतः, तच्च व्याख्यातम्, अनुद्भूतरूपस्पर्शद्रव्यस्य प्रत्यक्षतोऽनुपलब्धिरिति। अत्यन्तानुपलब्धिश्चाभावकारणम्॥ ३९॥

यो हि ब्रवीति लोष्टप्रकाशो मध्यन्दिने आदित्यप्रकाशाभिभवान्नोपलभ्यत इति, तस्यैतत् स्यात्,—

**न रात्रावप्यनुपलब्धेः॥ ४०॥**

अप्यनुमानतोऽनुपलब्धिरिति। एवमत्यन्तानुपलब्धेर्लोष्टप्रकाशो नास्ति, न त्वेवं चक्षुषो रश्मिरिति॥ ४०॥

---

महतो रूपवतोऽनुपलब्धौ दृष्टान्तमाह।—महतो रूपवतश्चोल्काप्रकाशस्य सौराऽऽलोकेनाभिभवान्मध्यन्दिनेऽनुपलब्धिवदनुद्भूतरूपवत्त्वाच्चक्षुषोऽप्यनुपलम्भः सम्भवतीति भावः॥ ३९॥

नन्वेवं घटादेरपि रश्मिः स्यात्, सौराऽऽलोकेनाभिभवात् पुनरग्रह इत्यत आह।—निषेधश्च घटादौ रश्मिरिति शेषः॥ ४०॥

उपपन्नरूपा चेयम् ।—

**बाह्यप्रकाशानुग्रहाद्विषयोपलब्धेरनभिव्यक्तितोऽनुपलब्धिः ॥ ४१ ॥**

बाह्येन प्रकाशेनानुगृहीतं चक्षुर्विषयग्राहकं, तदभावेऽनुपलब्धिः, सति च प्रकाशानुग्रहे शीतस्पर्शोपलब्धौ च सत्यां तदाश्रयस्य द्रव्यस्य चक्षुषाऽग्रहणं रूपस्यानुद्भूतत्वात्, सेयं रूपानभिव्यक्तितो रूपाऽऽश्रयस्य द्रव्यस्यानुपलब्धिर्दृष्टा, तत्र यदुक्तं,—"तदनुपलब्धेरहेतुः" इत्येतदयुक्तम् ॥ ४१ ॥

कस्मात् पुनरभिभवोऽनुपलब्धिकारणं चाक्षुषस्य रश्मेर्नोच्यते ? इति ।—

**अभिव्यक्तौ चाभिभवात् ॥ ४२ ॥**

बाह्यप्रकाशानुग्रहनिरपेक्षतायाञ्चेति चार्थः । यद्रूपमभिव्यक्तमुद्भूतं बाह्यप्रकाशानुग्रहञ्च नापेक्षते, तद्विषयोऽभिभवः, विपर्य्ययेऽभिभवाभावात् अनुद्भूतरूपत्वाच्चानुपलभ्यमानं बाह्यप्रकाशानुग्रहाच्चोपलभ्यमानं नाभिभूयत इति । एवमुपपन्नम् अस्ति चाक्षुषो रश्मिरिति ॥ ४२ ॥

---

नन्वनुद्भूतरूपवत्त्वाच्चक्षुषोऽनुपलब्धिः, न त्वभिभवादित्यत्र किं विनिगमकम् ? इति सटस्याऽऽशङ्कायामाह ।——अनभिव्यक्तितोऽनुद्भूतरूपवत्त्वात्, चक्षुषोऽनुपलब्धिः । कुतः ?—बाह्यप्रकाशानुग्रहात् सौराऽऽलोकादिसाहित्यात्, विषयोपलम्भः, तस्योद्भूतरूपवत्त्वे बाह्यप्रकाशापेक्षा न स्यात्, अभिभूतत्वे च तत्साहित्येनापि प्रत्यक्षजननं न स्यात्, अभिभूतस्य कार्य्याक्षमत्वादिति भावः ॥ ४१ ॥

ननु चक्षुषो नाभिभवः, किन्तु तद्रूपस्य, तस्य च प्रत्यक्षजनकत्वे मानाभावः । किञ्चाभिभवात् तस्य न प्रत्यक्षम्, इतरप्रत्यक्षजनने च विरोधाभाव इत्याशङ्कायामाह ।—रूपस्य अभिव्यक्तौ प्रत्यक्षे, उद्भूतत्व इति यावत्, उद्भूतरूपस्य प्रत्यक्षाभावे ह्यभिभवकल्पना । न त्वेवं प्रकृते सुवर्णादिवत् सर्वदाऽभिभावकद्रव्यान्तरकल्पने च गौरवमिति भावः ॥ ४२ ॥

## नक्तञ्चरनयनरश्मिदर्शनाच्च ॥ ४३ ॥

दृश्यन्ते हि नक्तं नयनरश्मयो नक्तञ्चराणां वृषदंशप्रभृतीनां, तेन शेषस्यानुमानमिति। जातिभेदवदिन्द्रियभेद इति चेत्, धर्ममात्रं चानुपपन्नम् । आवरणस्य प्राप्तिप्रतिषेधार्थस्य दर्शनादिति ॥४३॥

इन्द्रियार्थसन्निकर्षस्य ज्ञानकारणत्वानुपपत्तिः। कस्मात् ?—

## अप्राप्यग्रहणं काचाभ्रपटलस्फटिकान्तरितोपलब्धेः ॥ ४४ ॥

तृणादिसर्पद्द्रव्यं काचेऽभ्रपटले वा प्रतिहतं दृष्टम्, अव्यवहितेन सन्निकृष्यते, व्यवहन्यते वै प्राप्तिर्व्यवधानेनेति । यदि च रश्म्यर्थसन्निकर्षो ग्रहणहेतुः स्यात्, न व्यवहितस्य सन्निकर्ष इत्यग्रहणं स्यात् । अस्ति चेयं काचाभ्रपटलस्फटिकान्तरितोपलब्धिः, सा ज्ञापयत्यप्राप्यकारीणि इन्द्रियाणि, अत एवाभौतिकानि ; प्राप्यकारित्वं हि भौतिकधर्म इति ॥ ४४ ॥

## न कुड्यान्तरितानुपलब्धेरप्रतिषेधः ॥ ४५ ॥

अप्राप्यकारित्वे सतीन्द्रियाणां कुड्यान्तरितस्यानुपलब्धिर्न स्यात् ॥ ४५ ॥

---

चक्षुषि प्रमाणान्तरमाह ।—नक्तञ्चराणां वृषदंशाऽऽदीनां गोलके रश्मिदर्शनात् तद्दृष्टान्तेन परेषामपि रश्म्यनुमानमिति भावः ; अन्यथा तमसि तस्य प्रत्यक्षं न स्यादिति हृदयम् ॥ ४३ ॥

अप्राप्यकारित्वं चक्षुषः स्यादित्याशङ्कते ॥ ४४ ॥

समाधत्ते ।—परे तु उक्तसूत्रस्य पूर्वपक्षपरत्वं मन्यमानस्य भाष्यकारस्यावतरणिकाऽप्राप्यग्रहणमिति ; वस्तुतः सिद्धान्तसूत्रमेव । तत्प्रदीपदृष्टान्तेन काचाद्यन्तरितप्रकाशकत्वेन तैजसत्वं सिध्यतीति । नन्वप्राप्यकारित्वं किं न स्यात् ? अत्राऽऽह, कुड्येति ।—उक्तस्य तैजसत्वस्य प्रतिषेधो गोलकाऽऽत्मकत्वं न सम्भवति, कुड्यान्तरितस्यानुपलब्धेरित्याहुः ॥ ४५ ॥

प्राप्यकारित्वेऽपि तु काचाभ्रपटलस्फटिकान्तरितोपलब्धिर्न स्यात् ।—

**अप्रतिघातात् सन्निकर्षोपपत्तिः ॥ ४६ ॥**

न च काचोऽभ्रपटलं वा नयनरश्मिं विष्टभ्नाति, सोऽप्रतिहन्यमानः सन्निकृष्यत इति ॥ ४६ ॥

यश्च मन्यते न भौतिकस्याप्रतीघात इति, तन्न,—

**आदित्यरश्मेः स्फटिकान्तरेऽपि दाह्येऽविघातात् ॥ ४७ ॥**

आदित्यरश्मेरविघातात्, स्फटिकान्तरितेऽप्यविघातात्, दाह्येऽविघातात् । अविघातादिति च पदाभिसम्बन्धभेदाद्वाक्यभेद इति । यथा वाक्यस्यार्थभेद इति । प्रतिवाक्यं वाक्यार्थभेदः । आदित्यरश्मिः कुम्भादिषु न प्रतिहन्यते, अविघातात् कुम्भस्थमुदकं तपति, प्राप्तौ हि द्रव्यान्तरगुणस्य उष्णस्पर्शस्य ग्रहणं, तेन च शीतस्पर्शाभिभव इति । स्फटिकान्तरितेऽपि प्रकाशनीये प्रदीपरश्मीनामप्रतिघातः, अप्रतिघातात् प्राप्तस्य ग्रहणमिति । भर्जनकपालादिस्थञ्च द्रव्यमाग्नेयेन तेजसा दह्यते, तत्राविघातात् प्राप्तिः, प्राप्तौ तु दाहः, नाप्राप्यकारि तेज इति । अविघातादिति च केवलं पदमुपादीयते । कोऽयमविघातो नाम ? अव्यूह्यमानावयवेन व्यवधायकेन द्रव्येण सर्वतो द्रव्यस्याविष्टम्भः, क्रियाहेतोरप्रतिबन्धः, प्राप्तेरप्रतिषेध इति । दृष्टं हि कलशनिषक्तानामपां बहिः शीतस्पर्शस्य ग्रहणम् ; न च

---

ननु कुड्यान्तरित इव काचान्तरितेऽपि सन्निकर्षो न सम्भवतीति कथं प्राप्यकारित्वम् ? इत्याशङ्कायामाह ।—काचादिना स्वच्छद्रव्येणाप्रतिघाताद‌प्रतिबन्धात्, सन्निकर्ष उपपद्यत इति भावः ॥ ४६ ॥

इन्द्रियेणासन्निकृष्टस्य द्रव्यस्य स्पर्शोपलब्धिः ; दृष्टौ च प्रस्यन्द-परिस्रवौ, तत्र काचाभ्रपटलादिभिर्नयनरश्मेरप्रतिघाताद्विभिद्यार्थेन सह सन्निकर्षादुपपन्नं ग्रहणमिति ॥ ४७ ॥

नेतरेतरधर्मप्रसङ्गात् ॥ ४८ ॥

काचाभ्रपटलादिवद्वा कुड्यादिभिरप्रतिघातः, कुड्यादिवद्वा काचाभ्रपटलादिभिः प्रतिघातः, इति नियमे कारणं वाच्यमिति ॥ ४८ ॥

आदर्शोदकयोः प्रसादस्वाभाव्याद्रूपोपलब्धिवत् तदुपलब्धिः ॥ ४९ ॥

आदर्शोदकयोः प्रसादो रूपविशेषः स्वो धर्मो नियमदर्शनात्, प्रसादस्य वा स्वो धर्मो रूपोपलम्भनम् ; यथाऽऽदर्शप्रतिहतस्य परावृत्तस्य नयनरश्मेः स्वेन मुखेन सन्निकर्षे सति स्वमुखोपलम्भनं प्रतिबिम्बग्रहणाऽऽख्यमादर्शरूपानुग्रहात् तन्निमित्तं भवति, आदर्शरूपोपघाते तदभावात् कुड्यादिषु च प्रतिबिम्बग्रहणं न भवति ; एवं काचाभ्रपटलादिभिरविघातश्चक्षूरश्मेः कुड्यादिभिश्च प्रतिघातो द्रव्यस्वभावनियमादिति ॥४९॥

---

तत्र दृष्टान्तमाह ।—दाह्य इति वस्तुमात्रोपलक्षणम् ; परे तु दाह्ये कपालादौ वङ्गादेरविघातपरं तदित्याहुः ॥ ४७ ।

आक्षिपति ।—अप्रतिघातो न युक्तः, इतरस्य स्फटिकादेः, इतरस्य कुड्यादेः, यो धर्मः प्रतिघातकत्वं, तत्प्रसङ्गात् ; स्फटिकादिकमपि कुड्यादिवत्प्रतिबन्धकं भवेदित्यर्थः ॥ ४८ ॥

समाधत्ते ।—आदर्शे उदके च प्रसादस्वाभाव्यात् स्वच्छस्वभावत्वात्, मुखादिरूपोपलब्धिः, न तु भित्त्यादौ, एवं स्फटिकाद्यन्तरितस्योपलब्धिः, न तु कुड्याद्यन्तरितस्येति स्वाभाव्यान्न दोषः । एतेन वङ्गादेर्घटादिनाऽप्रतिघातवच्चक्षुषोऽपि प्रतिघातो न स्यादिति प्रत्युक्तम् ; वङ्गाद्यप्रतिबन्धेऽपि दीपाऽऽलोकादेः प्रतिबन्धसम्भवादिति भावः ॥ ४९ ॥

**दृष्टानुमितानां नियोगप्रतिषेधानुपपत्तिः ॥ ५० ॥**

प्रमाणस्य तत्त्वविषयत्वात् न खलु भोः! परीक्ष्यमाणेन दृष्टानुमिता अर्थाः शक्या नियोक्तुमेवं भवतेति, नापि प्रतिषेद्धुमेवं मा भवतेति। न ह्येदमुपपद्यते रूपवद्गन्धोऽपि चाक्षुषो भवत्विति ; गन्धवद्वा रूपञ्चाक्षुषं मा भूदिति। अग्निप्रतिपत्तिवद्धूमेनोदकप्रतिपत्तिरपि भवत्विति, उदकाप्रतिपत्तिवद्वा धूमेनाग्निप्रतिपत्तिरपि मा भूदिति। किं कारणम्?—यथा खल्वर्था भवन्ति, य एषां स्वो भावः स्वो धर्म इति, तथाभूताः प्रमाणेन प्रतिपद्यन्त इति, तथाभूतविषयकं हि प्रमाणमिति। इमौ खलु नियोगप्रतिषेधौ भवताऽदिष्टौ, काचाभ्रपटलादिवद्वा कुड्याऽऽदिभिरप्रतिघातो भवतु, कुड्याऽऽदिवद्वा काचाभ्रपटलादिभिरप्रतिघातो मा भूदिति। न दृष्टानुमिताः खल्विमे द्रव्यधर्माः, प्रतिघाताप्रतिघातयोर्ह्युपलब्ध्यनुपलब्धी व्यवस्थापिके ; व्यवहितानुपलब्ध्याऽनुमीयते कुड्यादिभिः प्रतिघातः, व्यवहितोपलब्ध्याऽनुमीयते काचाभ्रपटलादिभिरप्रतिघात इति ॥ ५० ॥

अथापि खल्वेकमिदमिन्द्रियम्? बहूनीन्द्रियाणि वा? कुतः संशयः?—

**स्थानान्यत्वे नानात्वादवयविनानास्थानत्वाच्च संशयः ॥ ५१ ॥**

बहूनि द्रव्याणि नानास्थानानि दृश्यन्ते, नानास्थानश्च

---

चक्षुषस्तादृशत्वकल्पने किं मानम्? इत्यत्राऽऽह।—हि यस्मात्, दृष्टानामनुमितानां वा पदार्थानां, दृष्टेनानुमितानामिति वाऽर्थः, तेषामेवं भवतेति नियोगः, एवं मा भवतेति प्रतिषेधो वा नोपपद्यते ; युक्त्यनुसारिणी हि कल्पनेति भावः ॥ ५० ॥

समाप्तमिन्द्रियपरीक्षाप्रकरणम् ।

दर्शनस्पर्शनाभ्यामित्यादिकमिन्द्रियनानात्वे युज्यते, इत्युपोद्घातेनेन्द्रियनानात्वं

सन्नेकोऽवयवी चेति । तेनेन्द्रियेषु भिन्नस्थानेषु संशय इति ॥ ५१ ॥

एकमिन्द्रियम्,—

**त्वगव्यतिरेकात् ॥ ५२ ॥**

त्वगेकमिन्द्रियमित्याह । कस्मात् ?—अव्यतिरेकात् । न त्वचा किञ्चिदिन्द्रियाधिष्ठानं न प्राप्तम् । न चासत्यां त्वचि किञ्चिद्विषयग्रहणं भवति । यया सर्वेन्द्रियस्थानानि व्याप्तानि, यस्याञ्च सत्यां विषयग्रहणं भवति, सा त्वगेकमिन्द्रियमिति॥५२॥

**नेन्द्रियान्तरार्थानुपलब्धेः ॥ ५३ ॥**

स्पर्शोपलब्धिलक्षणायां सत्यां त्वचि गृह्यमाणे त्वगिन्द्रियेण स्पर्शे इन्द्रियान्तरार्था रूपाऽऽदयो न गृह्यन्ते अन्धादिभिः, न स्पर्शग्राहकादिन्द्रियान्तरमस्तीति स्पर्शवदन्धादिभिर्गृह्येरन् रूपादयः, न च गृह्यन्ते, तस्मान्नैकमिन्द्रियं त्वगिति ॥ ५३ ॥

**त्वगवयवविशेषेण धूमोपलब्धिवत्तदुपलब्धिः ॥५४॥**

यथा त्वचोऽवयवविशेषः कश्चिच्चक्षुषि सन्निकृष्टो धूमस्पर्शं गृह्णाति, नान्यः, एवं त्वचोऽवयवविशेषो रूपादिग्राहकः, तेषामुपघातादन्धादिभिर्न गृह्यन्ते रूपादय इति ॥ ५४ ॥

**व्याहतत्वादहेतुः ॥ ५५ ॥**

त्वगव्यतिरेकादेकमिन्द्रियमित्युक्त्वा त्वगवयवविशेषेण धूमोपलब्धिवद्रूपोपलब्धिरित्युच्यते ; एवञ्च सति नानाभूतानि

---

परीक्षणीयम् ; तत्र संशयमाह ।—स्थानान्यत्वे स्थानभेदे, घटपटाऽऽदीनां नानात्वदर्शनान्नानाऽवयवस्थितस्यावयविन एकत्वदर्शनाच्च इन्द्रियाणां नानात्वमेकत्वं वेति संशयः ॥ ५१ ॥

पूर्वपक्षसूत्रम् ।—सर्वेन्द्रियप्रदेशेष्वव्यतिरेकात् सत्त्वात्, त्वगेवैकमिन्द्रियमस्ति ॥ ५२ ॥

विषयग्राहकाणि विषयव्यवस्थानात्, तद्भावे विषयग्रहणस्य भावात् तदुपघाते चाभावात्; तथा च पूर्वो वाद उत्तरेण वादेन व्याहन्यत इति। सन्दिग्धश्चाव्यतिरेकः। पृथिव्यादिभिरपि भूतैरिन्द्रियाधिष्ठानानि व्याप्तानि, न च तेष्वसत्सु विषयग्रहणं भवतीति। तस्मान्न त्वगन्यद्वा सर्वविषयकमेकमिन्द्रियमिति ॥ ५५ ॥

## न युगपदर्थानुपलब्धेः ॥ ५६ ॥

आत्मा मनसा सम्बध्यते, मन इन्द्रियेण, इन्द्रियं सर्वार्थैः सन्निकृष्टमिति, आत्मेन्द्रियमनोऽर्थसन्निकर्षेभ्यो युगपद्ग्रहणानि स्युः, न च युगपद्रूपाऽऽदयो गृह्यन्ते, तस्मान्नैकमिन्द्रियं सर्वविषयमस्तीति। असाहचर्याच्च विषयग्रहणानां नैकमिन्द्रियं सर्वविषयकं, साहचर्ये हि विषयग्रहणानामन्याद्यनुपपत्तिरिति ॥ ५६ ॥

## विप्रतिषेधाच्च न त्वगेका ॥ ५७ ॥

न खलु त्वगेकमिन्द्रियं, व्याघातात्; त्वचा रूपाण्यप्राप्तानि गृह्यन्त इति। अप्राप्यकारित्वे स्पर्शाऽऽदिष्वप्येवं प्रसङ्गः। स्पर्शादीनाञ्च प्राप्तानां ग्रहणाद्रूपादीनामप्राप्तानामग्रहणमिति प्राप्तम्। * प्राप्याप्राप्यकारित्वमिति चेत्, आवरणानुपपत्तेर्विषयमात्रस्य ग्रहणम् * अथापि मन्येत, प्राप्ताः स्पर्शाऽऽदयस्त्वचा गृह्यन्ते, रूपाणि त्वप्राप्तानीति। एवं सति नास्त्यावरणम्, आवरणानुपपत्तेश्च रूपमात्रस्य ग्रहणं व्यवहितस्य चाव्यवहितस्य चेति। * दूरान्तिकानुविधानञ्च रूपोपलब्ध्यनुपलब्ध्योर्न

---

उत्तरयति।—युगपत् एकदा, अर्थानां गन्धरूपाऽऽदीनाम्, अनुपलब्धेर्न त्वगेकैकमिन्द्रियम्, अन्यथा तस्य व्यापकत्वाच्चक्षुरादिकाले प्राणजाऽऽदिकमपि ज्ञानं स्यादिति भावः ॥ ५६ ॥

स्यात् * अप्राप्तं त्वचा गृह्यते रूपमिति दूरे रूपस्याग्रहणमन्तिके च ग्रहणमित्येतन्न स्यादिति ॥ ५७ ॥

एकत्वप्रतिषेधाच्च नानात्वसिद्धौ स्थापनाहेतुरप्युपादीयते,—

इन्द्रियार्थपञ्चत्वात् ॥ ५८ ॥

अर्थः प्रयोजनम् ; तत् पञ्चविधमिन्द्रियाणां, स्पर्शनेनेन्द्रियेण स्पर्शग्रहणे सति न तेनैव रूपं गृह्यते, इति रूपग्रहणप्रयोजनं चक्षुरनुमीयते। स्पर्शरूपग्रहणे च ताभ्यामेव गन्धो न गृह्यते, इति गन्धग्रहणप्रयोजनं घ्राणमनुमीयते। त्रयाणां ग्रहणे न तैरेव रसो गृह्यते, इति रसग्रहणप्रयोजनं रसनमनुमीयते। न चतुर्णां ग्रहणे तैरेव शब्दः श्रूयते, इति शब्दग्रहणप्रयोजनं श्रोत्रमनुमीयते। एवमिन्द्रियप्रयोजनस्यानितरेतरसाधनसाध्यत्वात् पञ्चैवेन्द्रियाणि ॥ ५८ ॥

न तदर्थबहुत्वात् ॥ ५९ ॥

न खल्विन्द्रियार्थपञ्चत्वात् पञ्चेन्द्रियाणीति सिध्यति। कस्मात् ?—तेषामर्थानां बहुत्वात् ; बहवः खल्विमे इन्द्रियार्थाः, स्पर्शास्तावच्छीतोष्णानुष्णाशीता इति ; रूपाणि शुक्लहरितादीनि ; गन्धा इष्टानिष्टोपेक्षणीयाः ; रसाः कटुकादयः ; शब्दाः वर्णाऽऽत्मानो ध्वनिमात्राश्च भिन्नाः ; तद्यस्येन्द्रियार्थपञ्चत्वात्पञ्चेन्द्रियाणि, तस्येन्द्रियार्थबहुत्वाद्बहूनीन्द्रियाणि प्रसज्यन्त इति ॥ ५९ ॥

---

इन्द्रियाणां नानात्वे कार्य्यभेदमानमाह।—इन्द्रियार्थानामिन्द्रियग्राह्याणां रूपाऽऽदीनां, पञ्चत्वात् पञ्चविधत्वात्, रूपाऽऽदीनां हि चक्षुराद्येकैकेन्द्रियमात्रग्राह्यत्वाद्वैलक्षण्यं, तच्चैकेन्द्रियपक्षे न सम्भवति, अन्धाऽऽदीनां रूपाद्युपलब्धिप्रसङ्गश्चेति भावः ॥ ५८॥

शङ्कते।—इन्द्रियार्थानां नीलपीताऽऽदीनां बहुत्वादिन्द्रियाणां बहुत्वप्रसङ्गादिन्द्रियार्थपञ्चत्वादिन्द्रियभेदो न युक्तः ॥ ५९ ॥

**गन्धत्वाद्यव्यतिरेकात् गन्धाऽऽदीनामप्रतिषेधः ॥६०॥**

गन्धत्वादिभिः स्वसामान्यैः कृतव्यवस्थानां गन्धाऽऽदीनां यानि गन्धाऽऽदिग्रहणानि, तान्यसमानसाधनसाध्यत्वाद्ग्राहकान्तराणि प्रयोजयन्ति। अर्थसमूहोऽनुमानमुक्तः, नार्थैकदेशः, अर्थैकदेशश्चाऽऽश्रित्य विषयपञ्चत्वमात्रं भवान् प्रतिषेधति, तस्मादयुक्तोऽयं प्रतिषेध इति। कथं पुनर्गन्धत्वादिभिः स्वसामान्यैः कृतव्यवस्था गन्धादयः ? इति।—स्पर्शः खल्वयं त्रिविधः, शीत उष्णोऽनुष्णशीतश्च स्पर्शत्वेन स्वसामान्येन सङ्गृहीतः, गृह्यमाणे च शीतस्पर्शे नोष्णस्यानुष्णाशीतस्य वा ग्रहणं ग्राहकान्तरं प्रयोजयति, स्पर्शभेदानामेकसाधनसाध्यत्वात्; येनैव शीतस्पर्शो गृह्यते, तेनैवेतरावपीति। एवं गन्धत्वेन गन्धानां, रूपत्वेन रूपाणां, रसत्वेन रसानां, शब्दत्वेन शब्दानामिति। गन्धादिग्रहणानि पुनरसमानसाधनसाध्यत्वात् ग्राहकान्तराणां प्रयोजकानि, तस्मादुपपन्नमिन्द्रियार्थपञ्चत्वात् पञ्चेन्द्रियाणीति ॥ ६० ॥

यदि सामान्यं सङ्ग्राहकं, प्राप्तमिन्द्रियाणाम्,—

**विषयत्वाव्यतिरेकादेकत्वम् ॥ ६१ ॥**

विषयत्वेन हि सामान्येन गन्धादयः सङ्गृहीता इति ॥ ६१ ॥

---

समाधत्ते।—उक्तप्रतिषेधो न, गन्धाऽऽदीनां सौरभाऽऽदीनां, गन्धत्वाद्यव्यतिरेकात् गन्धत्वाऽऽदिसत्त्वात्; तथा च गुणविभाजकगन्धत्वावच्छिन्नग्राहकत्वमभिप्रेतं, न त्ववान्तरधर्मावच्छिन्नग्राहकत्वमिति भावः ॥ ६० ॥

यदि गन्धत्वाऽऽदिना सुरभ्यादीनामैक्यं, तदा विषयत्वेन गन्धरसाऽऽदीनामप्यैक्यादिन्द्रियैक्यं स्यादिति शङ्कते।—विषयत्वाव्यतिरेकात् विषयत्वेनैक्यात् ॥ ६१ ॥

न बुद्धिलक्षणाधिष्ठान-गत्याकृति-जातिपञ्चत्वेभ्यः ॥ ६२ ॥

न खलु विषयत्वेन सामान्येन कृतव्यवस्था विषया ग्राहकान्तरनिरपेक्षा एकसाधनग्राह्या अनुमीयन्ते ; अनुमीयन्ते च पञ्च गन्धाऽऽदयो गन्धत्वादिभिः स्वसामान्यैः कृत-व्यवस्था इन्द्रियान्तरग्राह्याः, तस्मादसम्बद्धमेतत् । अयमेव चार्थोऽनूद्यते बुद्धिलक्षणपञ्चत्वादिति ।—बुद्धय एव लक्षणानि विषयग्रहणलिङ्गत्वादिन्द्रियाणाम् ; तदेतदिन्द्रियार्थपञ्चत्वादित्येतस्मिन् सूत्रे कृतभाष्यमिति । तस्माद्बुद्धिलक्षणपञ्चत्वात् पञ्चेन्द्रियाणि । अधिष्ठानान्यपि खलु पञ्च इन्द्रियाणाम् ; सर्वशरीराधिष्ठानं स्पर्शनं स्पर्शग्रहणलिङ्गम् ; कृष्णसाराधिष्ठानं चक्षुर्बहिर्निःसृतं रूपग्रहणलिङ्गम् ; नासाऽधिष्ठानं घ्राणम् ; जिह्वाऽधिष्ठानं रसनम् ; कर्णच्छिद्राधिष्ठानं श्रोत्रम् ; गन्धरसरूपस्पर्शशब्दग्रहणलिङ्गत्वादिति । गतिभेदादपीन्द्रियभेदः ; कृष्णसारोपनिबद्धं चक्षुर्बहिर्निःसृत्य रूपाधिकरणानि द्रव्याणि प्राप्नोति । स्पर्शनादीनि त्विन्द्रियाणि विषया एवाश्रयोपसर्पणात् प्रत्यासीदन्ति । सन्तानवृत्त्या शब्दस्य श्रोत्रप्रत्यासत्तिरिति । आकृतिः खलु परिमाणमियत्ता ; सा पञ्चधा ;—स्वस्थानमात्राणि घ्राणरसनस्पर्शनानि विषयग्रहणेनानुमेयानि । चक्षुः कृष्णसाराऽऽश्रयं बहिर्निःसृतं विषयव्यापि । श्रोत्रं नान्यदाकाशात्, तच्च विभु शब्दमात्रानुभवानुमेयं पुरुषसंस्कारोपग्रहाच्चाधिष्ठाननियमेन

---

उत्तरयति ।—इन्द्रियाणामैक्यं न । हेतुमाह, बुद्धीत्यादि ।—बुद्धेश्चाक्षुषादेः, लक्षणं चाक्षुषत्वादि, तत्पञ्चत्वेन तदवच्छिन्नकरणानां पञ्चत्वम्, एवमधिष्ठानं रूपादिविषयः, तत्पञ्चत्वात्, गतिः दूरादौ गमनम्, इदं चक्षुरधिकृत्य ; यद्वा,—गतिः प्रकारः, तथा च प्रकाराणां पञ्चत्वात् चक्षुर्हि गत्वा गृह्णाति, त्वग्देशावच्छेदेन, श्रोत्रं

शब्दस्य व्यञ्जकमिति। जातिरिति योनिं प्रचक्षते, पञ्च खल्विन्द्रिययोनयः पृथिव्यादीनि भूतानि, तस्मात् प्रकृति-पञ्चत्वादपि पञ्चेन्द्रियाणीति सिद्धम्॥ ६२॥

कथं पुनर्ज्ञायते भूतप्रकृतीनीन्द्रियाणि, नाव्यक्तप्रकृतीनि? इति।—

**भूतगुणविशेषोपलब्धेस्तादात्म्यम्॥ ६३॥**

दृष्टो हि वाय्वादीनां भूतानां गुणविशेषाभिव्यक्तिनियमः, वायुः स्पर्शव्यञ्जकः, आपो रसव्यञ्जिकाः, तेजो रूपव्यञ्जकं, पार्थिवं किञ्चिद्द्रव्यं कस्यचिद्द्रव्यस्य गन्धव्यञ्जकम्। अस्ति चायमिन्द्रियाणां भूतगुणविशेषोपलब्धिनियमः, तेन भूतगुण-विशेषोपलब्धेर्मन्यामहे भूतप्रकृतीनीन्द्रियाणि, नाव्यक्तप्रकृती-नीति॥ ६३॥

गन्धादयः पृथिव्यादिगुणा इत्युपदिष्टम्, उद्देशश्च पृथि-व्यादीनामेकगुणत्वे समानः; इत्यत आह,—

**गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्य्यन्ताः पृथिव्याः अप्तेजोवायूनां पूर्वं पूर्वमपोह्याऽऽकाशस्योत्तरः॥ ६४॥**

स्पर्शपर्य्यन्तानामिति विभक्तिविपरिणामः, आकाशस्योत्तरः शब्दः स्पर्शपर्य्यन्तेभ्य इति। कथं तर्प्निर्देशः?—स्वतन्त्रविनि-

---

कर्णावच्छेदेनेत्यादिप्रकारभेदात्, आकृतिः गोलकाऽऽदीनां संस्थानविशेषः, जातिः पृथिवीत्वादिः, वस्तुतो जातिः धर्मः, तेन गोलत्वसङ्ग्रहः॥ ६२॥

घ्राणादेः पृथिवीत्वादिसत्त्वे मानमाह।—भूतानां पृथिव्यादीनां, ये गुणविशेषा गन्धाऽऽदयः, तदुपलम्भकत्वात् कुङ्कुमगन्धाभिव्यञ्जकघृतादिदृष्टान्तेन पृथिवीत्वादिसाधन-मिति भावः॥ ६३॥

समाप्तमिन्द्रियनानात्वप्रकरणम्।

क्रमप्राप्तार्थपरीक्षणाय सिद्धान्तसूत्रम्।—स्पर्शपर्य्यन्तेषु मध्ये पूर्वं पूर्वं त्यक्त्वा

योगसामर्थ्यात्; तेनोत्तरशब्दस्य परार्थाभिधानं विज्ञायते। उद्देशसूत्रे हि स्पर्शपर्य्यन्तेभ्यः परः शब्द इति। तन्त्रं वा, स्पर्शस्य विवक्षितत्वात् स्पर्शपर्य्यन्तेषु नियुक्तेषु योऽन्यस्तदुत्तरः शब्द इति ॥ ६४ ॥

न सर्वगुणानुपलब्धेः ॥ ६५ ॥

नायं गुणनियोगः साधुः। कस्मात्?—यस्य भूतस्य ये गुणाः, न ते तदात्मकेनेन्द्रियेण सर्वे उपलभ्यन्ते, पार्थिवेन हि घ्राणेन स्पर्शपर्य्यन्ता न गृह्यन्ते, गन्ध एवैको गृह्यते, एवं शेषेष्वपीति ॥ ६५ ॥

कथं तर्हीमे गुणाः विनियोक्तव्या इति?—

एकैकश्येनोत्तरोत्तरगुणसद्भावादुत्तरोत्तराणां तदनुपलब्धिः ॥ ६६ ॥

गन्धाऽऽदीनामेकैको यथाक्रमं पृथिव्यादीनामेकैकस्य गुणः, अतस्तदनुपलब्धिः तेषां तयोस्तस्य चानुपलब्धिः, घ्राणेन रसरूपस्पर्शानां, रसनेन रूपस्पर्शयोः, चक्षुषा स्पर्शस्येति ॥ ६६ ॥

---

अप्तेजोवायूनां गुणा ज्ञातव्याः, उत्तरः शब्दः, आकाशस्य गुणः, तथा च स्पर्शान्ताः पृथिव्याः, रसरूपस्पर्शा जलस्य, रूपस्पर्शौ तेजसः, स्पर्शो वायोः, शब्द आकाशस्य ॥६४॥

आक्षिपति।—उक्तो गुणनियमो न युक्तः, पृथिव्यादेर्गुणत्वाभिमतानां सर्वेषां घ्राणाऽऽदिग्राह्यत्वाभावान्न पार्थिवत्वादिकम्; घ्राणेन पृथिव्या रसाद्यग्रहणात् बहिरिन्द्रियाणां स्वप्रकृतिवर्त्तियोग्याशेषविशेषगुणग्राहकत्वनियमो भज्येतेति भावः ॥ ६५ ॥

इत्थञ्च पृथिव्यादावुपलभ्यमानानां रसाऽऽदीनां का गतिः? इत्यत्र स्वमतमाह।—उत्तरोत्तराणाम् अबादीनाम्, एकैकश्येन एकैकक्रमेण, तदुत्तरोत्तरगुणसद्भावात् रसाऽऽदिगुणसद्भावात्, तदनुपलब्धिस्तेषां रसाऽऽदीनां घ्राणादिनाऽनुपलब्धिरित्यर्थः ॥ ६६ ॥

कथं तर्ह्यनेकगुणानि भूतानि गृह्यन्त इति ?—

**संसर्गाच्चानेकगुणग्रहणम् ॥ ६७ ॥**

अबादिसंसर्गाच्च पृथिव्यां रसाऽऽदयो गृह्यन्ते, एवं शेषेष्वपीति ॥ ६७ ॥

नियमस्तर्हि न प्राप्नोति, संसर्गस्यानियमात् ; चतुर्गुणा पृथिवी, त्रिगुणा आपः, द्विगुणं तेजः, एकगुणो वायुरिति नियमश्चोपपद्यते कथम् ?—

**विष्टं ह्यपरम्परेण ॥ ६८ ॥**

पृथिव्यादीनां पूर्वं पूर्वमुत्तरेणोत्तरेण विष्टम्, अतः संसर्गनियम इति । तच्चैतद्भूतसृष्टौ वेदितव्यं, नैतर्हीति ॥ ६८ ॥

**न पार्थिवाऽऽप्ययोः प्रत्यक्षत्वात् ॥ ६९ ॥**

नेति त्रिसूत्रीं प्रत्याचष्टे । कस्मात्,—पार्थिवस्य द्रव्यस्याऽऽप्यस्य च प्रत्यक्षत्वात् । महत्त्वादनेकद्रव्यवत्त्वाद्रूपाच्चोपलब्धिरिति तैजसमेव द्रव्यं प्रत्यक्षं स्यात्, न पार्थिवमाप्यं वा, रूपाभावात् ; तैजसवत्तु पार्थिवाऽऽप्ययोः प्रत्यक्षत्वात् न संसर्गादनेकगुणग्रहणं भूतानामिति । भूतान्तररूपकृतञ्च पार्थिवाऽऽप्ययोः प्रत्यक्षत्वं ब्रुवतः प्रत्यक्षो वायुः प्रसज्यते । नियमे वा कारणमुच्यताम् इति । रसयोर्वा पार्थिवाऽऽप्ययोः प्रत्यक्षत्वात्, पार्थिवो रसः षड्विधः, आप्यो मधुर एव, न चैतत् संसर्गाद्भवितुमर्हति । रूपयोर्वा पार्थिवाऽऽप्ययोः प्रत्यक्षत्वात् तैजसरूपानुगृहीतयोः, संसर्गे हि व्यञ्जकमेव

---

तर्हि कथं पृथिव्यादौ रसादिग्रहणम् ? तत्राऽऽह ।—अपरं पृथिव्यादि, परेण जलाऽऽदिना, हि यस्मात्, विष्टं सम्बद्धम् ; तथा च पृथिव्याद्यवच्छिन्नजलाऽऽदिना रसनासंयोगाद्रसाऽऽदिग्रह इति भावः ॥ ६८ ॥

सिद्धान्तसूत्रम् ।—उक्तो गुणनियमो न युक्तः ; कुतः ?—पार्थिवस्याऽऽप्यस्य च

रूपं, न व्यञ्जकमस्तीति। एकानेकविधत्वे च पार्थिवाऽऽप्ययोः प्रत्यक्षत्वात् रूपयोः, पार्थिवं हरितलोहितपीताद्यनेकविधं रूपम्, आप्यन्तु शुक्लमप्रकाशकम्; न चैतदेकगुणानां संसर्गे सत्युपलभ्यत इति। उदाहरणमात्रञ्चैतत्। अतः परं प्रपञ्चः। स्पर्शयोर्वा पार्थिवतैजसयोः प्रत्यक्षत्वात् पार्थिवोऽनुष्णाशीतः स्पर्शः, उष्णस्तैजसः प्रत्यक्षः; न चैतदेकगुणाना-मनुष्णाशीतस्पर्शेन वायुना संसर्गेणोपपद्यत इति। अथवा पार्थिवाऽऽप्ययोर्द्रव्ययोर्व्यवस्थितगुणयोः प्रत्यक्षत्वात् चतुर्गुणं पार्थिवं द्रव्यं त्रिगुणमाप्यं प्रत्यक्षम्; तेन तत्कारणमनुमीयते तथाभूतमिति। तस्य कार्य्यं लिङ्गम्; कारणभावाद्धि कार्य्यभाव इति। एवं तैजसवायव्ययोर्द्रव्ययोः प्रत्यक्षत्वाद् गुणव्यवस्थायाः तत्कारणे द्रव्ये व्यवस्थाऽनुमानमिति। दृष्टश्च विवेकः पार्थिवाऽऽप्ययोः प्रत्यक्षत्वात्, पार्थिवं द्रव्यमबादिभिर्वियुक्तं प्रत्यक्षतो गृह्यते, आप्यञ्च पराभ्यां, तैजसञ्च वायुना; न चैकैकगुणं गृह्यत इति। निरनुमानन्तु विष्टं ह्यपरं परेणेत्येतदिति; नात्र लिङ्गमनुमापकं गृह्यत इति, येनैतदेवं प्रतिपद्येमहि। यच्चोक्तं,—"विष्टं ह्यपरं परेण" इति भूतसृष्टौ वेदितव्यं न साम्प्रतमिति नियमकारणाभावादयुक्तम्; दृष्टञ्च साम्प्रतमपरम्परेण विष्टमिति, वायुना च विष्टं तेज इति। विष्टत्वं संयोगः, स च द्वयोः समानः, वायुना च विष्टत्वात् स्पर्शवत्तेजः, न तु तेजसा विष्टत्वाद्रूपवान् वायुः, इति नियमे कारणं नास्तीति। दृष्टञ्च तैजसेन स्पर्शेन वायव्यस्पर्शस्याभिभवादग्रहणमिति, न च तेनैव तस्याभिभव इति॥ ६९॥

द्रव्यस्य प्रत्यक्षत्वाद्रूपस्पर्शसिद्धेः, तस्य रूपस्पर्शशून्यत्वे चक्षुषा त्वचा च ग्रहणं न स्यात्, रूपादेश्च क्वचित्साक्षात्त्वस्येन क्वचिच्च परम्परया हेतुत्वे गौरवमिति भावः॥ ६९॥

तदेवं न्यायविरुद्धं प्रवादं प्रतिषिध्य "न सर्वगुणानुपलब्धेः" इति चोदितं समाधीयते ।—

## पूर्वं पूर्वं गुणोत्कर्षात्तत्प्रधानम् ॥ ७० ॥

तस्मान्न सर्वगुणोपलब्धिः, घ्राणाऽऽदीनां पूर्वं पूर्वं गन्धादेर्गुणस्योत्कर्षात् तत्तत्प्रधानम् । का प्रधानता ?—विषयग्राहकत्वम् ; को गुणोत्कर्षः ?—अभिव्यक्तौ समर्थत्वम् । यथा वाह्यानां पार्थिवाऽऽप्यतैजसानां द्रव्याणां चतुर्गुणत्रिगुणद्विगुणानां न सर्वगुणव्यञ्जकत्वं, गन्धरसरूपोत्कर्षात्तु यथाक्रमं गन्धरसरूपव्यञ्जकत्वम्, एवं घ्राणरसनचक्षुषां चतुर्गुणत्रिगुणद्विगुणानां न सर्वगुणग्राहकत्वं, गन्धरसरूपोत्कर्षात्तु यथाक्रमं गन्धरसरूपग्राहकत्वम् ; तस्मात् घ्राणाऽऽदिभिर्न सर्वेषां गुणानामुपलब्धिरिति । यस्तु प्रतिजानीते गन्धगुणत्वाद्घ्राणं गन्धग्राहकम्, एवं रसनादिष्वपीति, तस्य यथागुणयोगं घ्राणाऽऽदिभिर्गुणग्रहणं प्रसज्यत इति ॥ ७० ॥

किं कृतं पुनर्व्यवस्थानम् ?—किञ्चित् पार्थिवमिन्द्रियं, न सर्वाणि ; कानिचिदाप्यतैजसवायव्यानीन्द्रियाणि, न सर्वाणीति ।—

## तद्व्यवस्थानन्तु भूयस्त्वात् ॥ ७१ ॥

अर्थनिर्वृत्तिसमर्थस्य प्रविभक्तस्य द्रव्यस्य संसर्गः पुरुषसंस्कारकारितं भूयस्त्वम् ; दृष्टो हि प्रकर्षे भूयस्त्वशब्दः, प्रकृष्टो

---

रसाऽऽदेः पृथिव्यादिगुणत्वे घ्राणादिनाऽपि तद्ग्रहणप्रसङ्ग इत्यत्र नियामकमाह ।—पूर्वं पूर्वं घ्राणादि, तत्तत्प्रधानं गन्धाऽऽदिप्रधानम् । प्राधान्ये बीजमाह ।—गुणोत्कर्षात् गुणस्य गन्धाऽऽदेः, उत्कर्षात् तद्व्यवस्थापकत्वात्, तथा च गन्धाऽऽदिषु मध्ये स्वव्यवस्थापकगुणस्यैव ग्राहकत्वं घ्राणाऽऽदीनामिति ॥ ७० ॥

ननु पृथिव्यन्तरस्यापि गन्धप्राधान्यात् किमिन्द्रियं किमनिन्द्रियम् ? इत्यत आह ।—

यथा,—विषयो भूयानित्युच्यते। यथा पृथगर्थक्रियासमर्थानि पुरुषसंस्कारवशाद्विषौषधमणिप्रभृतीनि द्रव्याणि निर्वर्त्त्यन्ते, न सर्वं सर्वार्थम्; एवं पृथग्विषयग्रहणसमर्थानि घ्राणाऽऽदीनि निर्वर्त्त्यन्ते, न सर्वविषयग्रहणसमर्थानीति ॥ ७१ ॥

स्वगुणान्नोपलभन्ते इन्द्रियाणि कस्मात्? इति चेत्,—

**सगुणानामिन्द्रियभावात् ॥ ७२ ॥**

स्वान् गन्धादीन्नोपलभन्ते घ्राणाऽऽदीनि। केन कारणेन? इति चेत्, स्वगुणैः सह घ्राणाऽऽदीनामिन्द्रियभावात्, घ्राणं स्वेन गन्धेन समानार्थकारिणा सह वाह्यं गन्धं गृह्णाति, तस्य स्वगन्धग्रहणं सहकारिवैकल्यात् न भवति, एवं शेषाणामपि ॥ ७२ ॥

यदि पुनर्गन्धः सहकारी च स्यात्, घ्राणस्य ग्राह्यश्चेत्यत आह,—

**तेनैव तस्याग्रहणाच्च ॥ ७३ ॥**

न गुणोपलब्धिरिन्द्रियाणाम्। यो ब्रूते, यथा वाह्यद्रव्यं चक्षुषा गृह्यते, तथा तेनैव चक्षुषा तदेव चक्षुर्गृह्यतामिति, तादृगिदम्; तुल्यो ह्युभयत्र प्रतिपत्तिहेत्वभाव इति ॥ ७३ ॥

---

भूयस्त्वात् गन्धाऽऽद्यविशिष्टपृथिव्याद्यारब्धत्वात्, तद्व्यवस्थानं घ्राणादीन्द्रियत्वव्यवस्थितिः ॥ ७१ ॥

घ्राणाऽऽदीनां गन्धाऽऽदिगुणवत्त्वे मानमाह।—सगुणानां गन्धाऽऽदिविशिष्टानां घ्राणाऽऽदीनाम्, इन्द्रियभावात् गन्धाऽऽदिसाक्षात्कारकरणत्वात्, कुङ्कुमगन्धाभिव्यञ्जकघृताऽऽदौ तथैव दर्शनात् ॥ ७२ ॥

इत्यत्र गन्धाऽऽदिसिद्धावप्रत्यक्षत्वादनुद्भूतत्वकल्पनमित्याशयेनाऽऽह।—तेन इन्द्रियेण, तस्य सगुणस्येन्द्रियस्य, अग्रहणादनुद्भूतकल्पनमिति ॥ ७३ ॥

**न शब्दगुणोपलब्धेः ॥ ७४ ॥**

स्वगुणान्नोपलभन्त इन्द्रियाणीत्येतत् न भवति, उपलभ्यते हि स्वगुणः शब्दः श्रोत्रेणेति ॥ ७४ ॥

**तदुपलब्धिरितरेतरद्रव्यगुणवैधर्म्यात् ॥ ७५ ॥**

न शब्देन गुणेन सगुणमाकाशमिन्द्रियं भवति, न शब्दः शब्दस्य व्यञ्जकः, न च घ्राणादीनां स्वगुणग्रहणं प्रत्यक्षं, नाप्यनुमीयते, अनुमीयते तु श्रोत्रेणाऽऽकाशेन शब्दस्य ग्रहणं, शब्दगुणत्वञ्चाऽऽकाशस्येति ; परिशेषश्चानुमानं वेदितव्यम्, आत्मा तावत् श्रोता, न करणम् ; मनसः श्रोत्रत्वे बधिरत्वाभावः, पृथिव्यादीनां घ्राणाऽऽदिभावे सामर्थ्यं, श्रोत्रभावे चासामर्थ्यम् । अस्ति चेदं श्रोत्रम्, आकाशञ्च शिष्यते, परिशेषादाकाशं श्रोत्रमिति ॥ ७५ ॥

इति वात्स्यायनीये न्यायभाष्ये तृतीयाध्यायस्याद्यमाह्निकम् ।

---

नन्विन्द्रियगुणानामप्रत्यक्षत्वनियमो नेत्याशङ्कते ।—उक्तनियमो न युक्तः, शब्दस्य श्रोत्रगुणस्य, उपलब्धेः ॥ ७४ ॥

समाधत्ते ।—द्रव्यगुणानां रूपशब्दाऽऽदीनां, परस्परं वैधर्म्याच्छब्दस्योपलब्धिः, न चक्षुरूपाऽऽदीनां शब्दाऽऽश्रयस्य लाघवेनैक्यासिद्धेरिति भावः ॥ ७५ ॥

समाप्तमर्थपरीक्षाप्रकरणम् ।

इति तृतीयाध्यायस्याद्यमाह्निकम् आत्मादिप्रमेयचतुष्कपरीक्षणं नाम ।

## तृतीयाध्यायस्य द्वितीयाह्निकम्।

परीक्षितानीन्द्रियाण्यर्थाश्च। बुद्धेरिदानीं परीक्षाक्रमः। सा किमनित्या? नित्या वा? इति। कुतः संशयः?—

**कर्माऽऽकाशसाधर्म्यात् संशयः ॥ १ ॥**

अस्पर्शवत्त्वं ताभ्यां समानो धर्म्म उपलभ्यते बुद्धौ, विशेषश्चोपजनापायधर्म्मवत्त्वं, विपर्य्ययश्च यथास्वमनित्यनित्ययोस्तस्यां बुद्धौ नोपलभ्यते, तेन संशय इति ॥ १ ॥

अनुपपन्नरूपः खल्वयं संशयः। सर्व्वशरीरिणां हि प्रत्यात्मवेदनीयाऽनित्या बुद्धिः सुखादिवत्, भवति च संवित्तिर्ज्ञास्यामि जानामि अज्ञासिषमिति; न चोपजनापायौ अन्तरेण त्रैकाल्यव्यक्तिः, ततश्च त्रैकाल्यव्यक्तेरनित्या बुद्धिरित्येतत् सिद्धम्। प्रमाणसिद्धश्चेदम्। शास्त्रेऽप्युक्तम्,—"इन्द्रियार्थसन्निकर्षोत्पन्नं युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्" इत्येवमादि। तस्मात् संशयप्रक्रियाऽनुपपत्तिरिति। दृष्टिप्रवादोपालम्भार्थन्तु प्रकरणम्। एवं हि पश्यन्तः प्रवदन्ति साङ्ख्याः पुरुषस्यान्तःकरणभूता नित्या बुद्धिरिति; साधनञ्च प्रचक्षते।—

**विषयप्रत्यभिज्ञानात् ॥ २ ॥**

किं पुनरिदं प्रत्यभिज्ञानम्?—यं पूर्व्वमज्ञासिषमर्थं, तमिमं

---

अथ क्रमप्राप्ततया बुद्धेर्मनसश्च परीक्षा सप्तभिः प्रकरणैः, तत्परीक्षैव चाऽऽह्निकार्थः; परे तु शरीरावच्छेदव्याप्यभोगानुकूलसम्बन्धवत्परीक्षा, शरीरान्तर्वर्त्तिप्रमेयपरीक्षैवाऽऽह्निकार्थ इति। तदसत्, इन्द्रियपरीक्षायामतिव्याप्तेः; तत्र च बुद्धिपरीक्षा पञ्चभिः प्रकरणैः, तत्राऽऽदौ बुद्ध्यनित्यताप्रकरणम्; तत्र संशयदर्शनाय सूत्रम्।—कर्म्मण आकाशस्य च साधर्म्यान्निस्पर्शत्वात्, बुद्धिपदार्थे नित्यत्वसंशयः; बुद्धिपदं नित्यं न वा? इति संशयः पर्य्यवसन्नः ॥ १ ॥

तत्र बुद्धेर्नित्यत्वं साङ्ख्याः साधयति।—बुद्धिर्नित्येति शेषः, योऽहं घटमद्राक्षं, सोऽहं

जानामीति ज्ञानयोः समानेऽर्थे प्रतिसन्धिज्ञानं प्रत्यभिज्ञानम् । एतच्चावस्थितायाः बुद्धेरुपपन्नम् । नानात्वे तु बुद्धिभेदेषूत्पन्नापवर्गिषु प्रत्यभिज्ञानानुपपत्तिः, नान्यज्ञातमन्यः प्रत्यभिजानातीति ॥ २ ॥

## साध्यसमत्वादहेतुः ॥ ३ ॥

यथा खलु नित्यत्वं बुद्धेः साध्यम्, एवं प्रत्यभिज्ञानमपीति । किं कारणम् ?—चेतनधर्मस्य करणेऽनुपपत्तिः, पुरुषधर्मः खल्वयं ज्ञानं दर्शनमुपलब्धिर्बोधः प्रत्ययोऽध्यवसाय इति, चेतनो हि पूर्वज्ञातमर्थं प्रत्यभिजानातीति तस्यैतस्माद्धेतोर्नित्यत्वं युक्तमिति । * करणचैतन्याभ्युपगमे तु चेतनस्वरूपं वचनीयम्, * नानिर्दिष्टस्वरूपमात्माऽन्तरं शक्यमस्तीति प्रतिपत्तुम् ; ज्ञानञ्चेत् बुद्धेरन्तःकरणस्याभ्युपगम्यते, चेतनस्येदानीं किं स्वरूपम् ? को धर्मः ? किं तत्त्वम् ? ज्ञानेन च बुद्धौ वर्त्तमानेनायं चेतनः किं करोति ? इति । * चेतयत इति चेत्, न ज्ञानादर्थान्तरवचनम् । * पुरुषश्चेतयते बुद्धिर्जानातीति नेदं ज्ञानादर्थान्तरमुच्यते ; चेतयते जानीते बुध्यते पश्यत्युपलभ्यत इत्येकोऽयमर्थ इति । बुद्धिर्ज्ञापयतीति चेत्, अद्धा जानीते पुरुषः, बुद्धिर्ज्ञापयतीति । सत्यमेतत्, एवञ्चाभ्युपगमे ज्ञानं पुरुषस्येति सिद्धं भवति, न बुद्धेरन्तःकरणस्य इति । * प्रतिपुरुषञ्च शब्दान्तरव्यवस्थाप्रतिज्ञाने प्रतिषेधहेतुवचनम् । * यश्च प्रतिजानीते, कश्चित् पुरुषश्चेतयते, कश्चिद्बुध्यते, कश्चिदुपलभते, कश्चित् पश्यतीति ; पुरुषान्तराणि खल्विमानि, चेतनो बोद्धोपलब्धा द्रष्टेति, नैकस्यैते

---

घटं स्प्राक्षीत्ति प्रत्यभिज्ञानमेकं वृत्तिमन्तं विषयीकरोति, न चाऽऽत्मा तथा, तस्य अन्यधर्मानधिकरणस्य कूटस्थत्वात्, तस्मात् वृत्तिमती बुद्धिरेव । वृत्तिस्तु तस्याः परिणामः, बुद्धेरप्याविर्भावतिरोभावावेव, न तूत्पादविनाशाविति ॥ २ ॥

परिहरति ।—साध्यसमत्वात् असिद्धत्वात्, प्रतिसन्धानत्वं न हेतुः, यद्‍ जानामीति

धर्मा इति। अत्र कः प्रतिषेधहेतुः ? इति। * अर्थस्याभेद इति चेत्, समानम्, अभिन्नार्था एते शब्दा इति। तत्र व्यवस्थाऽनुपपत्तिरित्येवं चेत् मन्यसे, समानं भवति ; पुरुषश्चेतयते बुद्धिर्जानीते इत्यत्राप्यर्थो न भिद्यते, तत्रोभयोश्चेतनत्वादन्यतरलोप इति। यदि पुनर्बुध्यतेऽनयेति बोधनं बुद्धिर्मन एवोच्यते, तच्च नित्यम्। अस्त्वेतदेवं, न तु मनसो विषयप्रत्यभिज्ञानान्नित्यत्वम्। दृष्टं हि करणभेदे ज्ञातुरेकत्वात् प्रत्यभिज्ञानम् ; सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात्, इति चक्षुर्वत्। प्रदीपवच्च, प्रदीपान्तरदृष्टस्य प्रदीपान्तरेण प्रत्यभिज्ञानमिति। तस्माज्ज्ञातुरयं नित्यत्वे हेतुरिति ॥ ३ ॥

यच्च मन्यते, बुद्धेरवस्थिताया यथाविषयं वृत्तयो ज्ञानानि निश्चरन्ति, वृत्तिश्च वृत्तिमतो नान्येति।—

## न युगपद्ग्रहणात् ॥ ४ ॥

वृत्तिवृत्तिमतोरनन्यत्वे वृत्तिमतोऽवस्थानाद् वृत्तीनामवस्थानमिति ; यानीमानि विषयग्रहणानि, तान्यवतिष्ठन्त इति युगपद्विषयाणां ग्रहणं प्रसज्यत इति ॥ ४ ॥

## अप्रत्यभिज्ञाने च विनाशप्रसङ्गः ॥ ५ ॥

अतीते च प्रत्यभिज्ञाने वृत्तिमानप्यतीत इत्यन्तःकरणस्य विनाशः प्रसज्यते, विपर्यये च नानात्वमिति ॥ ५ ॥

---

त्यादिना आत्मन एव प्रतिसन्धानप्रत्ययात्। अनादिनिधनत्वमेव तस्य कौटस्थ्यम्, अन्यादृशं त्वसिद्धमिति भावः ॥ ३ ॥

बुद्धेरेव स्थायिन्या यथाविषयं ज्ञानाऽऽत्मिका वृत्तयो वृत्तिमदभिन्ना वह्नेरिव स्फुलिङ्गा निःसरन्तीति साङ्ख्यमतं निरस्यति।—वृत्तिवृत्तिमतोरभेदे वृत्तिमदवस्थित्या वृत्तेरप्यवस्थितिर्वाच्या ; तथा च सर्वपदार्थग्रहणं युगपत् स्यात्, न चैवं, तस्मान्नाभेद इति ॥ ४ ॥

अथ वृत्तीनामनवस्थायित्वमुच्यते, तत्राऽऽह।—अप्रत्यभिज्ञाने प्रत्यभिज्ञानस्य अभावे, विनाशे, वृत्तिमतोऽपि विनाशः स्यात्, अतो न तयोरैक्यम् ॥ ५ ॥

अविभु चैकं मनः पर्य्यायेणेन्द्रियैः संयुज्यत इति।—

**क्रमवृत्तित्वादयुगपद्ग्रहणम् ॥ ६ ॥**

इन्द्रियार्थानां वृत्तिवृत्तिमतोर्नानात्वमिति, एकत्वे च प्रादुर्भावतिरोभावयोरभाव इति ॥ ६ ॥

**अप्रत्यभिज्ञानञ्च विषयान्तरव्यासङ्गात् ॥ ७ ॥**

अप्रत्यभिज्ञानमनुपलब्धिः ; अनुपलब्धिश्च कस्यचिदर्थस्य विषयान्तरव्यासक्ते मनस्युपपद्यते, वृत्तिवृत्तिमतोर्नानात्वात्। एकत्वे ह्यनर्थको व्यासङ्गः इति ॥ ७ ॥

विभुत्वे चान्तःकरणस्य पर्य्यायेणेन्द्रियैः संयोगः,—

**न गत्यभावात् ॥ ८ ॥**

प्राप्तानीन्द्रियाण्यन्तःकरणेनेति प्राप्त्यर्थस्य गमनस्य अभावः, तत्र क्रमवृत्तित्वाभावादयुगपद्ग्रहणानुपपत्तिरिति। गत्यभावाच्च प्रतिषिद्धं विभुनोऽन्तःकरणस्यायुगपद्ग्रहणं न लिङ्गान्तरेणानुमीयते। यथा चक्षुषो गतिः प्रतिषिद्धा सन्निकृष्टविप्रकृष्टयोस्तुल्यकालग्रहणात् पाणिचन्द्रमसोर्व्यवधानप्रतीघातेनानुमीयत इति। सोऽयं नान्तःकरणे विवादः, न तस्य नित्यत्वे, सिद्धं हि मनोऽन्तःकरणं नित्यञ्चेति। क्व तर्हि विवादः ?—तस्य विभुत्वे, तच्च प्रमाणतोऽनुपलब्धेः प्रतिषिद्ध-

---

अयुगपद्ग्रहणं लभते व्युत्पादयति, मनस इत्यादि।—मनसोऽणुत्वादिन्द्रियैः सह क्रमेण सम्बन्धात् ज्ञानानां क्रमिकत्वम् ; तथा च,—"अविभु चैकं मनः पर्य्यायेण सर्वैरिन्द्रियैः सम्बध्यते" इत्यवतारभाष्यम् ; तत्तदिन्द्रियमनःसंयोगे सति ज्ञानमुपपद्यते ॥ ६ ॥

तद्व्यतिरेके ज्ञानाभावमुपपादयति।—अप्रत्यभिज्ञानं तत्तदिन्द्रियजज्ञानाभावः, विषयान्तरेण इन्द्रियान्तरेण, मनसः सम्बन्धादित्यर्थः ॥ ७ ॥

लभ्यते चेदं नोपपद्यत इत्याह।—लभ्यते मनसः क्रमेणेन्द्रियसम्बन्धः, न, मनसः

मिति। एकञ्चान्तःकरणं, नाना चैता ज्ञानाऽऽत्मिका वृत्तयः, चक्षुर्विज्ञानं, घ्राणविज्ञानं, रूपविज्ञानं, गन्धविज्ञानम्; एतच्च वृत्तिवृत्तिमतोरेकत्वेऽनुपपन्नमिति। एतेन विषयान्तरव्यासङ्गः प्रत्युक्तः। विषयान्तरग्रहणलक्षणो विषयान्तरव्यासङ्गः पुरुषस्य, नान्तःकरणस्येति। केनचिदिन्द्रियेण सन्निधिः केनचिदसन्निधिरिति; अयन्तु व्यासङ्गोऽनुज्ञायते मनस इति॥ ८॥

एकमन्तःकरणं, नाना वृत्तयः (ञ) इति सत्यभेदे वृत्तेरिदमुच्यते।—

**स्फटिकान्यत्वाभिमानवत्तदन्यत्वाभिमानः॥ ९॥**

तस्यां वृत्तौ नानात्वाभिमानः, यथा—द्रव्यान्तरोपहिते स्फटिके अन्यत्वाभिमानो नीलो लोहित इति। एवं विषयान्तरोपधानादिति॥ ९॥

**न हेत्वभावात्॥ १०॥**

स्फटिकान्यत्वाभिमानवदयं ज्ञानेषु नानात्वाभिमानो गौणः, न पुनर्गन्धाद्यन्यत्वाभिमानवदिति हेतुर्नास्ति, हेत्वभावादनुपपन्न इति। समानो हेत्वभाव इति चेत्, न, ज्ञानानां क्रमेणोपजननापायदर्शनात्, क्रमेण 'हीन्द्रियार्थेषु ज्ञानान्युपजायन्ते

---

विभुत्वेन गत्यभावात्; परे तु नकारो न सूत्रान्तर्गतः, किन्तु विभुत्वे चान्तःकरणस्य पर्य्यायेणेन्द्रियैः संयोगो नेति भाष्यावतरणिकायाम् इत्याहुः॥ ८॥

वृत्तिवृत्तिमतोर्वस्तुतोऽभेदेऽपि भेदप्रत्ययप्रतिपादनाय प्रवृत्ते।—यथा जवाकुसुमाऽऽदिसन्निधानादेकस्यापि स्फटिकस्य तत्तद्रूपाभिमानः, तथा वृत्तिमदभिन्नाऽपि वृत्तिस्तत्तद्विषयसन्निकर्षवशान्नानेव प्रतिभासत इति॥ ९॥

दूषयति।—समत्वे साधकाभावान्नोक्तं युक्तमित्यर्थः, केचित्तु न हेत्वभावादिति

---

(ञ) "चोद्यभाष्यमेतत्" इति तात्पर्य्यटीका।

चापयन्ति चेति दृश्यते ; तस्माद्गन्धाद्यन्यत्वाभिमानवदयं ज्ञानेषु नानात्वाभिमान इति ॥ १० ॥

स्फटिकान्यत्वाभिमानवदित्येतदमृष्यमाणः क्षणिकवाद्याह,—

**स्फटिकेऽप्यपरापरोत्पत्तेः क्षणिकत्वाद्व्यक्तीनामहेतुः ॥ ११ ॥**

स्फटिकस्याभेदेनावस्थितस्योपधानभेदान्नानात्वाभिमान इत्ययमविद्यमानहेतुकः पक्षः । कस्मात् ?—स्फटिकेऽप्यपरापरोत्पत्तेः ; स्फटिकेऽप्यन्या व्यक्तय उत्पद्यन्ते, अन्या निरुध्यन्त इति । कथम् ?—क्षणिकत्वाद्व्यक्तीनाम् ; क्षणश्चाल्पीयान् कालः, क्षणस्थितिकाः क्षणिकाः । कथं पुनर्गम्यते क्षणिका व्यक्तयः ? इति ।—उपचयापचयप्रबन्धदर्शनाच्छरीरादिषु ; पक्तिनिर्वृत्तस्याऽऽहाररसस्य शरीररुधिराऽऽदिभावेनोपचयोऽपचयश्च प्रबन्धेन प्रवर्त्तते, उपचयाद्व्यक्तीनामुत्पादः, अपचयाद्व्यक्तिनिरोधः । एवञ्च सत्यवयवपरिणामभेदेन वृद्धिः शरीरस्य कालान्तरे गृह्यते इति, सोऽयं व्यक्तिमात्रे वेदितव्य इति ॥ ११ ॥

---

भाष्यमिति, टीकाऽदर्शनान्नेदं सूत्रं, किन्तु तुच्छतया सूत्रकृताऽदूषणान्न्यूनतापरिहाराय भाष्यकृता तदुक्तमिति मन्यन्ते ॥ १० ॥

समाप्तं बुद्ध्यनित्यताप्रकरणम् ।

स्फटिके इव नानात्वभ्रम इत्यसहमानः सौगतः शङ्कते ।—स्फटिकान्यत्वाभिमानवदित्यहेतुः । कुतः ?—स्फटिकेऽप्यपरापरोत्पत्तेः विलक्षणविलक्षणस्फटिकोत्पत्तेः । तत्र मानमाह, व्यक्तीनां भावानां, क्षणिकत्वात् । तत्साधनाय भाष्यम्,—“उपचयापचयप्रबन्धदर्शनाच्छरीराऽऽदिषु” प्रतिक्षणं शरीरेषूपचयापचयदर्शनान्नानात्वम् ; न ह्येकस्मिन्नवयविनि परिमाणद्वयसमावेश इति भावः । इदं सूत्रमेवेति केचित् ॥ ११ ॥

## नियमहेत्वभावाद्यथादर्शनमभ्यनुज्ञा ॥ १२ ॥

पदार्थानां सर्वासु व्यक्तिषूपचयापचयप्रबन्धः शरीरवदिति नायं नियमः। कस्मात्?—हेत्वभावात्। नात्र प्रत्यक्षमनुमानं वा प्रतिपादकमस्तीति। तस्माद्यथादर्शनमभ्यनुज्ञा। यत्र यत्रोपचयापचयप्रबन्धो दृश्यते, तत्र तत्र व्यक्तीनामपरापरोत्पत्ति-रुपचयापचयप्रबन्धदर्शनेनाभ्यनुज्ञायते, यथा शरीराऽऽदिषु। यत्र यत्र न दृश्यते, तत्र तत्र प्रत्याख्यायते, यथा ग्रावप्रभृतिषु। स्फटिकेऽप्युपचयापचयप्रबन्धो न दृश्यते, तस्मादयुक्तं स्फटिकेऽप्यपरापरोत्पत्तिरिति। यथा चार्कस्य कटुकिम्ना सर्वद्रव्याणां कटुकिमानमापादयेत्, तादृगेतदिति ॥ १२ ॥

यश्चाशेषनिरोधेनापूर्वोत्पादं निरन्वयं द्रव्यसन्ताने क्षणिकानां मन्यते, तस्यैतत्,—

## न, उत्पत्तिविनाशकारणोपलब्धेः ॥ १३ ॥

उत्पत्तिकारणं तावदुपलभ्यते, अवयवोपचयो वल्मीका-दीनाम्। विनाशकारणञ्चोपलभ्यते, घटादीनामवयवविभागः। यस्य त्वनपचितावयवं निरुध्यते, अनुपचितावयवञ्चोत्पद्यते, तस्याशेषनिरोधे निरन्वये वाऽपूर्वोत्पादे न कारणमुभयत्राप्युप-लभ्यत इति ॥ १३ ॥

---

सिद्धान्तसूत्रम्।—पदार्थानां विनाशसामग्रीवैशिष्ट्यनियमे मानाभावात् अभ्युपेत्या-ऽऽह, यथादर्शनमिति।—यदि कस्यचिद्विनाशसामग्रीवैशिष्ट्ये मानं स्यात्, तदा क्षणिकत्वं तस्याभ्यनुज्ञायत एव, यथाऽन्त्यशब्द इति ॥ १२ ॥

युक्त्यन्तरमाह।—न स्फटिकादेः क्षणिकत्वम्; यत उत्पत्तिविनाशकारणान्युप-लभ्य निर्णीतान्यवयवोपचयापचयादीनि; न च स्फटिके विनाशकारणमुपलभ्यते, येन पूर्वविनाशोऽपरोत्पत्तिश्च स्यादिति भावः ॥ १३ ॥

**क्षीरविनाशे कारणानुपलब्धिवद्दध्युत्पत्तिवच्च तदुपपत्तिः ॥ १४ ॥**

यथाऽनुपलभ्यमानं क्षीरविनाशकारणं दध्युत्पत्तिकारणञ्चाभ्यनुज्ञायते, तथा स्फटिकेऽपरापरासु व्यक्तिषु विनाशकारणमुत्पत्तिकारणञ्चाभ्यनुज्ञेयमिति ॥ १४ ॥

**लिङ्गतो ग्रहणान्नानुपलब्धिः ॥ १५ ॥**

क्षीरविनाशलिङ्गं क्षीरविनाशकारणम्। दध्युत्पत्तिलिङ्गं दध्युत्पत्तिकारणञ्च गृह्यते, अतो नानुपलब्धिः। विपर्य्ययस्तु स्फटिकाऽऽदिषु द्रव्येषु, अपरापरोत्पत्तौ व्यक्तीनां न लिङ्गमस्तीत्यनुत्पत्तिरेवेति ॥ १५ ॥

अत्र कश्चित् परिहारमाह।—

**न पयसः परिणामो गुणान्तरप्रादुर्भावात् ॥ १६ ॥**

पयसः परिणामो न विनाश इत्येक आह। परिणामश्चावस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिरिति। गुणान्तरप्रादुर्भाव इत्यपर आह। गुणान्तरप्रादुर्भावश्च सतो द्रव्यस्य पूर्वगुणनिवृत्तौ गुणान्तरमुत्पद्यत इति, स खल्वेकपक्षीभाव इव ॥ १६ ॥

---

आक्षिपति।—दध्युत्पत्तिवद्दध्युत्पत्तिकारणानुपलब्धिवत् तदुपपत्तिः। पूर्वस्फटिकविनाशकारणानुपलब्धेरुत्तरस्फटिकोत्पत्तिकारणानुपलब्धेश्चोपपत्तिः स्यादिति भावः ॥ १४ ॥

सिद्धान्तसूत्रम्।—दध्नः क्षीरविनाशस्य च प्रत्यक्षसिद्धत्वात्तत्कारणं कल्प्यते, न त्वेवं स्फटिकविनाशोत्पादावुपलभ्येते, येन तत्कारणकल्पनम् ॥ १५ ॥

सौगतमते साङ्ख्यदूषणमुपन्यस्यति।— न क्षीरस्य नाशो दध्नश्चोत्पत्तिः, किन्तु क्षीरस्य परिणामः, परिणामशब्दार्थो गुणान्तरप्रादुर्भावः, विद्यमानस्य क्षीरस्य पूर्वरसतिरोभावोऽम्लरसाऽऽत्मकगुणान्तरस्याऽऽविर्भावादित्यर्थः ॥ १६ ॥

अत्र तु प्रतिषेधः।—

व्यूहान्तराद्द्रव्यान्तरोत्पत्तिदर्शनं पूर्वद्रव्यनिवृत्तेरनुमानम् ॥ १७ ॥

सम्मूर्च्छनलक्षणादवयवव्यूहात् द्रव्यान्तरे दध्युत्पन्ने गृह्यमाणे पूर्वं पयोद्रव्यमवयवविभागेभ्यो निवृत्तमित्यनुमीयते, यथा मृदवयवानां व्यूहान्तराद्द्रव्यान्तरे स्थाल्यामुत्पन्नायां पूर्वं मृत्पिण्डद्रव्यं मृदवयवविभागेभ्यो निवर्त्तत इति। * मृद्वच्चाऽवयवान्वयः।* पयोदध्नोर्नाशेषनिरोधे निरन्वयो द्रव्यान्तरोत्पादो घटत इति, अभ्यनुज्ञाय च निष्कारणं क्षीरविनाशं दध्युत्पादञ्च प्रतिषेध उच्यते इति ॥ १७ ॥

क्वचिद्विनाशकारणानुपलब्धेः क्वचिच्चोपलब्धेरनेकान्तः ॥ १८ ॥

क्षीरदधिवन्निष्कारणौ विनाशोत्पादौ स्फटिकादिव्यक्तीनामिति नायमेकान्त इति। कस्मात्?—हेत्वभावात्। नात्र हेतुरस्ति, अकारणौ विनाशोत्पादौ स्फटिकादिव्यक्तीनां क्षीरदधिवत्, न पुनर्यथा विनाशकारणभावात् कुम्भस्य विनाशः, उत्पत्तिकारणभावाच्चोत्पत्तिः; एवं स्फटिकाऽऽदिव्यक्तीनां विनाशोत्पत्तिकारणभावाद्विनाशोत्पत्तिभाव इति। * निरधिष्ठानञ्च दृष्टान्तवचनम्, * गृह्यमाणयोर्विनाशोत्पादयोः स्फटिकाऽऽदिषु स्यादयमाश्रयवान् दृष्टान्तः, क्षीरविनाशकारणानुपलब्धिवद्दध्युत्प-

---

एतन्निराकरोति सूत्रकारः।—व्यूहान्तरात् रचनाऽन्तरात्, पूर्वावयवसंयोगनाशो द्रव्यान्तरोत्पादश्चाऽऽनुभविक इति भावः॥ १७॥

दोषान्तराभिधानाय सिद्धान्तिनां सूत्रम्।—क्षीरदधिदृष्टान्तेन विनाशोत्पादावकारणकाविति न युक्तम्;—घटाऽऽदौ सकारणकत्वोपलम्भेर्व्यभिचारात्। वस्तुतः

त्तिवच्चेति, तौ तु न गृह्येते, तस्मान्निरधिष्ठानोऽयं दृष्टान्त इति । अभ्यनुज्ञाय च स्फटिकस्योत्पादविनाशौ योऽत्र साधकः, तस्याभ्यनुज्ञानादप्रतिषेधः । कुम्भवन्न निष्कारणौ विनाशोत्पादौ स्फटिकाऽऽदीनामित्यभ्यनुज्ञेयोऽयं दृष्टान्तः प्रतिषेद्धुमशक्यत्वात् । क्षीरदधिवत्तु निष्कारणौ विनाशोत्पादाविति शक्योऽयं प्रतिषेद्धुं कारणतो विनाशोत्पत्तिदर्शनात् । क्षीरदध्नोर्विनाशोत्पत्ती पश्यता तत्कारणमनुमेयम् ; कार्य्यलिङ्गं हि कारणमित्युपपन्नमनित्या बुद्धिरिति ॥ १८ ॥

इदन्तु चिन्त्यते, कस्येयं बुद्धिः आत्मेन्द्रियमनोऽर्थानां गुण इति ?—प्रसिद्धोऽपि च खल्वयमर्थः परीक्षाशेषं प्रवर्त्तयामीति प्रक्रियते, सोऽयं बुद्धौ सन्निकर्षोत्पत्तेः संशयः, विशेषस्याग्रहणादिति । तत्रायं विशेषः,—

**नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात् ॥१९॥**

नेन्द्रियाणामर्थानां वा गुणो ज्ञानम् ; तेषां विनाशे ज्ञानस्य भावात् । भवति खल्विदमिन्द्रियेऽर्थे च विनष्टे ज्ञानमद्राक्षमिति, न च ज्ञातरि विनष्टे ज्ञानं भवितुमर्हति । अन्यत् खलु चैतदिन्द्रियार्थसन्निकर्षजं ज्ञानं, यदिन्द्रियार्थविनाशे न भवति ; इदमन्यदात्ममनःसन्निकर्षजं, तस्य युक्तो भाव इति । स्मृतिः खल्वियमद्राक्षमिति पूर्वदृष्टविषया, न च विज्ञातरि नष्टे

---

क्षीरविनाशेऽम्लद्रव्यसंयोगस्य हेतुत्वादम्लरसवत्परमाणुभिश्च दध्न आरम्भान्नाकारणकौ क्षीरविनाशदध्युत्पादाविति ॥ १८ ॥

समाप्तं क्षणभङ्गप्रकरणम् ।

बुद्धेरात्मगुणत्वं यद्यप्यात्मपरीक्षात एव सिद्धप्रायं, तथाऽपि विशिष्य व्युत्पादनाय बुद्ध्यात्मगुणत्वप्रकरणम् ; तत्र चेन्द्रियार्थसन्निकर्षाधीनत्वादिन्द्रियादिनिष्ठत्वमेवास्तु, भेर्य्याकाशसंयोगाधीनशब्दस्याऽऽकाशनिष्ठत्ववदिति पूर्वपक्षे सिद्धान्तसूत्रम् ।—बुद्धि-

पूर्वोपलब्धेः स्मरणं युक्तम् ; न चान्यदृष्टमन्यः स्मरति, न च मनसि ज्ञातर्य्यभ्युपगम्यमाने शक्यमिन्द्रियार्थयोर्ज्ञातृत्वं प्रतिपादयितुम् ॥ १९ ॥

अस्तु तर्हि मनोगुणो ज्ञानम् ?—

**युगपज्ज्ञेयानुपलब्धेश्च न मनसः ॥ २० ॥**

युगपज्ज्ञेयानुपलब्धिरन्तःकरणस्य लिङ्गम् ; तत्र युगपज्ज्ञेयानुपलब्ध्याऽनुमीयते अन्तःकरणम् ; न तस्य गुणो ज्ञानम् ; कस्य तर्हि ?—ज्ञस्य, वशित्वात् । वशी ज्ञाता, वश्यं करणम् ; ज्ञानगुणत्वे च करणभावनिवृत्तिः । घ्राणाऽऽदिसाधनस्य च ज्ञातुर्गन्धाऽऽदिज्ञानभावादनुमीयते, अन्तःकरणसाधनस्य सुखाऽऽदिज्ञानं स्मृतिश्चेति । तत्र यज्ज्ञानगुणं, स आत्मा ; यत्तु सुखाद्युपलब्धिसाधनमन्तःकरणं, मनस्तत्, इति संज्ञाभेदमात्र, नार्थभेद इति । युगपज्ज्ञेयानुपलब्धेश्चायोगिन इति चार्थः । योगी खलु ऋद्धौ प्रादुर्भूतायां विकरणधर्मान् निर्माय सेन्द्रियाणि शरीरान्तराणि तेषु तेषु युगपज्ज्ञेयानुपलभते, तच्चैतद्विभौ ज्ञातर्य्युपपद्यते, नाणौ मनसीति । विभुत्वे वा मनसो ज्ञानस्य नाऽऽत्मगुणत्वप्रतिषेधः । विभु मनः, तदन्तःकरणभूतमिति, तस्य सर्वेन्द्रियैर्युगपत् संयोगाद्युगपज्ज्ञानान्युत्पद्येरन्निति ॥ २० ॥

---

नेन्द्रियस्य न वाऽर्थस्य गुणः, तन्नाशेऽपि ज्ञानस्य स्मरणस्य, अवस्थानात् उत्पत्तेः, न ह्यनुभवितुरभावे स्मरणमुपपद्यतेऽतिप्रसङ्गादिति भावः ॥ १९ ॥

मनोगुणत्वं निरस्यति ।—युगपज्ज्ञेयानुपलब्धेर्हेतोः सिद्धस्य मनसो न कर्त्तृत्वम् ;—धर्मिग्राहकमानेन करणत्वेनैव सिद्धेः । वस्तुतो युगपज्ज्ञेयानुपलब्धेरित्यनेन मनसोऽणुत्वं सूचितम् ; तथा च तद्गतसुखाद्यप्रत्यक्षता स्यात्, एवं कायव्यूहे तत्तद्देहावच्छेदेन ज्ञानाऽऽदिकं न स्यादिति ॥ २० ॥

तदात्मगुणत्वेऽपि तुल्यम् ॥ २१ ॥

विभुरात्मा सर्वेन्द्रियैः संयुक्तः, इति युगपज्ज्ञानोत्पत्तिप्रसङ्ग इति ॥ २१ ॥

इन्द्रियैर्मनसः सन्निकर्षाभावात् तदनुत्पत्तिः ॥२२॥

गन्धाद्युपलब्धेरिन्द्रियार्थसन्निकर्षवदिन्द्रियमनःसन्निकर्षोऽपि कारणं, तस्य चायौगपद्यमणुत्वात् मनसः; अयौगपद्यादनुत्पत्तिर्युगपज्ज्ञानानामात्मगुणत्वेऽपीति ॥ २२ ॥

यदि पुनरात्मेन्द्रियार्थसन्निकर्षमात्राद्गन्धादिज्ञानमुत्पद्यते,—

नोत्पत्तिकारणानपदेशात् ॥ २३ ॥

आत्मेन्द्रियसन्निकर्षमात्राद्गन्धाऽऽदिज्ञानमुत्पद्यते, इति नात्रोत्पत्तिकारणमपदिश्यते, येनैतत् प्रतिपद्येमहीति ॥ २३ ॥

विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः ॥ २४ ॥

तदात्मगुणत्वेऽपि तुल्यमित्येतदनेन समुच्चीयते। द्विविधो हि गुणनाशहेतुः,—गुणानामाश्रयाभावः, विरोधी च गुणः; अभावो नित्यत्वादात्मनोऽनुपपन्नः, विरोधी च बुद्धेर्गुणो न गृह्यते, तस्मादात्मगुणत्वे सति बुद्धेर्नित्यत्वप्रसङ्गः ॥ २४ ॥

---

शङ्कते।—तस्या बुद्धेरात्मगुणत्वेऽपि ज्ञानयौगपद्यं तुल्यम्, आत्मनः सर्वेन्द्रियसंयोगात्; तथा च स दोषस्तदवस्थ एवेति कथं तया युक्त्या मनःसिद्धिरिति भावः ॥२१॥

उत्तरयति।—युगपज्ज्ञानेन्द्रियैः सह मनसः सन्निकर्षाभावान्न युगपज्ज्ञानाविषयोपलब्धिरिति भावः ॥ २२ ॥

आक्षिपति।—बुद्ध्युत्पत्तौ कारणस्यानपदेशात् अकथनात्, नाऽऽत्मगुणो बुद्धिः, आत्ममनःसंयोगस्य कारणत्वे ज्ञानस्य सार्वदिकत्वप्रसङ्ग इति भावः ॥ २३ ॥

बुद्धेरात्मगुणत्वे दोषमप्याह।—बुद्धेरात्मन्यवस्थाने विनाशकारणस्याऽऽश्रयनाशादेरनुपलब्धस्तस्या बुद्धेर्नित्यता-प्रसङ्गः ॥ २४ ॥

**अनित्यत्वग्रहाद्बुद्धेर्बुद्ध्यन्तराद्विनाशः शब्दवत् ॥२५॥**

अनित्या बुद्धिरिति सर्वशरीरिणां प्रत्यात्मवेदनीयमेतत्, गृह्यते च बुद्धिसन्तानः, तत्र बुद्धेर्बुद्ध्यन्तरं विरोधी गुण इत्यनुमीयते; यथा शब्दसन्ताने शब्दः शब्दान्तरविरोधीति। असङ्ख्येयेषु ज्ञानकारितेषु संस्कारेषु स्मृतिहेतुष्वात्ममनसोश्च सन्निकर्षे समाने स्मृतिहेतौ सति न कारणस्यायौगपद्यमस्तीति युगपत् स्मृतयः प्रादुर्भवेयुः, यदि बुद्धिरात्मगुणः स्यादिति ॥ २५ ॥

तत्र कश्चित् सन्निकर्षस्यायौगपद्यमुपपादयिष्यन्नाह,—

**ज्ञानसमवेताऽऽत्मप्रदेशसन्निकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः॥ २६ ॥**

ज्ञानसाधनः संस्कारो ज्ञानमित्युच्यते, ज्ञानसंस्कृतैरात्मप्रदेशैः पर्य्यायेण मनः सन्निकृष्यते, आत्ममनःसन्निकर्षात् स्मृतयोऽपि पर्य्यायेण भवन्तीति ॥ २६ ॥

**नान्तःशरीरवृत्तित्वान्मनसः ॥ २७ ॥**

सदेहस्याऽऽत्मनो मनसा संयोगो विपच्यमानकर्माऽऽशयसहितो जीवनमिष्यते। तत्रास्य प्राक् प्रायणादन्तःशरीरे

---

उत्तरयति।—बुद्धेरनित्यत्वस्य ग्रहणात् उत्पादनाशयोरानुभविकत्वात् तत्कारणे कल्पनीये आत्ममनोयोगादिकृत्पादकत्वमनन्तरोत्पन्नबुद्धेः संस्कारादेर्वा नाशकत्वं कल्प्यते; चरमबुद्धेस्तु अदृष्टनाशात् कालाद्वा नाशः। बुद्धेर्बुद्ध्यन्तरनाश्यत्वेऽनुरूपं दृष्टान्तमाह, शब्दवदिति।—शब्दस्य यथा शब्दान्तरान्नाशश्चरमशब्दस्य निमित्तनाशनाश्यत्वं, तथा प्रकृतेऽपीति भावः ॥ २५ ॥

ननु बुद्धेरात्मगुणत्वे संस्काराऽऽत्ममनोयोगयोः सत्त्वात् स्मृतीनां यौगपद्यं स्यात्, अतैकदेशिनः परिहारमाशङ्कते।—ज्ञानं संस्कारकारणं समवेतं यदवच्छेदेन, तदवच्छेदेन मनःसन्निकर्षस्य स्मृत्युत्पादकत्वात् तस्य च क्रमिकत्वान्न स्मृतियौगपद्यमित्यर्थः। ज्ञायतेऽनेनेति व्युत्पत्त्या ज्ञानपदं संस्कारपरमित्यन्ये ॥ २६ ॥

तन्मतं दूषयति।—उक्तं न युक्तम्;—मनसः अन्तःशरीरवृत्तित्वात् अन्तःशरीरे

वर्त्तमानस्य मनसः शरीराद्बहिर्ज्ञानसंस्कृतैरात्मप्रदेशैः संयोगो नोपपद्यत इति ॥ २७ ॥

## साध्यत्वादहेतुः ॥ २८ ॥

विपच्यमानकर्माऽऽशयमात्रं जीवनम् ; एवञ्च सति साध्यमन्तःशरीरवृत्तित्वं मनस इति ॥ २८ ॥

## स्मरतः शरीरधारणोपपत्तेरप्रतिषेधः ॥ २९ ॥

सुस्मूर्षया खल्वयं मनः प्रणिदधानः चिरादपि कञ्चिदर्थं स्मरति, स्मरतश्च शरीरधारणं दृश्यते ; आत्ममनःसन्निकर्षजश्च प्रयत्नो द्विविधः,—धारकः, प्रेरकश्च ; निःसृते च शरीराद्बहिर्मनसि धारकस्य प्रयत्नस्याभावात् गुरुत्वात्पतनं स्यात् शरीरस्य स्मरत इति ॥ २९ ॥

## न तदाशुगतित्वान्मनसः ॥ ३० ॥

आशुगति मनः, तस्य वहिः शरीरादात्मप्रदेशेन ज्ञानसंस्कृतेन सन्निकर्षः, प्रत्यागतस्य च प्रयत्नोत्पादनम्, उभयं युज्यत इति । उत्पाद्य वा धारकं प्रयत्नं शरीरान्निःसरणं मनसः, अतस्तत्रोपपन्नं धारणमिति ॥ ३० ॥

---

वृत्तिर्ज्ञानजनकीभूतो व्यापारो यस्य तस्मात्, शरीरातिरिक्तावच्छेदेनाऽऽत्ममनोयोगस्य ज्ञानाहेतुत्वाच्छरीरावच्छिन्नस्य हेतुत्वे तद्दोषतादवस्थ्यमिति भावः ॥ २७ ॥

एकदेशी शङ्कते ।—शरीरावच्छिन्नाऽऽत्ममनोयोगो न हेतुः ; साध्यत्वात् असिद्धत्वात्, मानाभावादिति भावः ॥ २८ ॥

सिद्धान्तसूत्रम् ।—उक्तप्रतिषेधो न युक्तः, स्मरतः शरीरधारणरूपाया उपपत्तेर्युक्तेः, अन्यथा मनसो वहिर्भावे शरीरावच्छिन्नाऽऽत्ममनोयोगाभावेन प्रयत्नाभावे शरीरधारणं न स्यादिति भावः ॥ २९ ॥

पुनः शङ्कते ।—शरीराधारणं न मनसः, आशुगतित्वाच्छीघ्रमेव शरीरे परावृत्तेः ॥ ३० ॥

न स्मरणकालानियमात् ॥ ३१ ॥

किञ्चित् क्षिप्रं स्मर्य्यते, किञ्चिच्चिरेण ; यदा चिरेण, तदा सुस्मूर्षया मनसि धार्य्यमाणे चिन्ताप्रबन्धे सति कस्यचिदर्थस्य लिङ्गभूतस्य चिन्तनमाराधितं स्मृतिहेतुर्भवति, तच्चैतच्चिरनिश्चरिते मनसि नोपपद्यते इति। शरीरसंयोगानपेक्षश्चाऽऽत्मनः संयोगो न स्मृतिहेतुः, शरीरस्य भोगाऽऽयतनत्वात्, उपभोगाऽऽयतनं पुरुषस्य ज्ञातुः शरीरम् ; न ततो निश्चरितस्य मनस आत्मसंयोगमात्रं ज्ञानसुखाऽऽदीनामुत्पत्तौ कल्पते, क्लृप्तौ वा शरीरवैयर्थ्यमिति ॥ ३१ ॥

आत्मप्रेरणयदृच्छा-ज्ञताभिश्च न संयोगविशेषः ॥ ३२ ॥

आत्मप्रेरणेन वा मनसो बहिः शरीरात् संयोगविशेषः स्यात्, यदृच्छया वाऽऽकस्मिकतया, ज्ञतया वा मनसः, सर्वथा चानुपपत्तिः। कथम् ?—* स्मर्त्तव्यत्वादिच्छातः स्मरणज्ञानासम्भवाच्च, * यदि तावदात्मा "अमुष्यार्थस्य स्मृतिहेतुः संस्कारः अमुष्मिन्नात्मप्रदेशे समवेतः, तेन मनः संयुज्यताम्" इति मनः प्रेरयति, तदा स्मृत एवासावर्थो भवति, न स्मर्त्तव्यः। न

---

दूषयति।—मनसः शीघ्रमागमनं न युक्तम् ;—स्मरणे कालनियमाभावात् ; कदाचिच्छीघ्रं स्मर्य्यते, कदाचित् प्रणिधानात् विलम्बेनापीति। न च प्रणिधानं शरीरान्तःस्थितमनस एव, बहिर्निर्गमस्तु स्मरणाव्यवहितपूर्वमेवेति वाच्यम् ; बहिर्निर्गमनान्तःप्रवेशानुकूलक्रियाविभागाऽऽदिकालकलापं यावच्छरीरधारणं न स्यादिति भावः ॥ ३१ ॥

एकदेशिमतमन्य एकदेशी दूषयति।—बहिःप्रदेशविशेषे मनःसंयोगविशेषो न सम्भवति, स हि न स्मृत्यर्थमात्मप्रेरणेन, तस्य स्मरणीयज्ञानपूर्वकतया प्रागेव स्मृत्यापत्तेः ; नापि यदृच्छया अकस्मात्, आकस्मिकत्वस्य निषेधात्। नापि मनसो

चाऽऽत्मप्रत्यच आत्मप्रदेशः संस्कारो वा ; तन्नानुपपन्नाऽऽत्मप्रत्यक्षेण संवित्तिरिति। सुस्मूर्षया चायं मनः प्रणिदधानश्चिरादपि कञ्चिदर्थं स्मरति, नाकस्मात्। ज्ञत्वञ्च मनसो नास्ति, ज्ञानप्रतिषेधादिति ॥ ३२ ॥

एतच्च—

**व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानम् ॥ ३३ ॥**

यदा खल्वयं व्यासक्तमनाः क्वचिद्देशे शर्करया कण्टकेन वा पादव्यथनमाप्नोति, तदाऽऽत्ममनःसंयोगविशेष एषितव्यः ; दृष्टं हि दुःखं दुःखवेदनञ्चेति। तत्रायं समानः प्रतिषेधः। यदृच्छया तु विशेषः, नाऽऽकस्मिकी क्रिया, नाऽऽकस्मिकः संयोगः इति। * कर्मादृष्टमुपभोगार्थं क्रियाहेतुरिति चेत्, समानम् ; * कर्मादृष्टं पुरुषस्थं पुरुषोपभोगार्थं मनसि क्रियाहेतुः। एवं दुःखं दुःखसंवेदनञ्च सिध्यतीत्येवञ्चेन्मन्यसे, समानम् ; स्मृतिहेतावपि संयोगविशेषो भवितुमर्हति। तत्र यदुक्तम्,—"आत्मप्रेरणयदृच्छा-ज्ञताभिश्च न संयोगविशेषः" इत्ययमप्रतिषेध इति ; पूर्वस्तु प्रतिषेधः,—"नान्तःशरीरवृत्तित्वान्मनसः" इति ॥ ३३ ॥

---

ज्ञतया ज्ञातृतया, मनसो ज्ञातृत्वानभ्युपगमात्। प्रेरणयदृच्छा-ज्ञताभिः प्रयत्नेच्छाज्ञानैरित्यर्थः इति कश्चित्, तन्न ; प्रयत्नेनैव चरितार्थत्वाऽऽपत्तेः ॥ ३२ ॥

एतन्निराकरोति।—नृत्यादिकं पश्यतः कण्टकाऽऽदिना पादव्यथनेन तदवच्छेदेन मनःसंयोगो यथा जायते, तथैतदपीति भावः ; इतरथा तत्र मनःसंयोगेऽप्युक्तदोषाः स्युः। अदृष्टविशेषाधीनसंस्काराद्भवितीति चेत्, तुल्यं प्रकृतेऽपीति भावः ॥ ३३ ॥

कः खल्विदानीं कारणयौगपद्यसद्भावे युगपदस्मरणस्य हेतुरिति ?—

**प्रणिधानलिङ्गाऽऽदिज्ञानानामयुगपद्भावात् युगपदस्मरणम् ॥ ३४ ॥**

यथा खल्वात्ममनसोः सन्निकर्षः संस्कारश्च स्मृतिहेतुः, एवं प्रणिधानं लिङ्गाऽऽदिज्ञानानि, तानि च न युगपद्भवन्ति, तत्कृता स्मृतीनां युगपदनुत्पत्तिरिति ॥ ३४ ॥

**प्रातिभवत्तु प्रणिधानाद्यनपेक्षे स्मार्त्ते यौगपद्यप्रसङ्गः ॥ ३५ ॥**

यत् खल्विदं प्रातिभमिव ज्ञानं प्रणिधानाद्यनपेक्षं स्मार्त्तमुत्पद्यते, कदाचित् तस्य युगपदुत्पत्तिप्रसङ्गो हेत्वभावात्, * सतः स्मृतिहेतोरसंवेदनात् प्रातिभेन समानाभिमानः, * बह्वर्थविषये वै चिन्ताप्रबन्धे कश्चिदेवार्थः कस्यचित् स्मृतिहेतुः, तस्यानुचिन्तनात् तस्य स्मृतिर्भवति, न चायं स्मर्त्ता सर्वं स्मृतिहेतुं संवेदयते, एवं मे स्मृतिरुत्पन्नेत्यसंवेदनात्; प्रातिभमिव ज्ञानमिदं स्मार्त्तमिति । * प्रातिभे कथमिति चेत्, पुरुषकर्मविशेषादुपभोगवन्नियमः । * प्रातिभमिदानीं ज्ञानं युगपत् कस्मात् नोत्पद्यते ?—यथोपभोगार्थं कर्म युगपदुपभोगं न करोति, एवं पुरुषकर्मविशेषः प्रतिभाहेतुर्न युगपदनेकं प्रातिभं ज्ञानमुत्पादयति । * हेत्वभावादयुक्तमेतदिति चेन्न,

---

स्मरणायौगपद्यं स्वयमुपपादयति ।—प्रणिधानं चित्तैकाग्र्य, सुस्मूर्षेति यावत्, लिङ्गज्ञानम् उद्बोधकम्, उद्बोधकानामानन्त्यादादिपदं ज्ञानान्परतो योजनीयम्; तस्य क्रमात् स्मरणक्रमः । यदि च युगपदुद्बोधकानि, तदा तावद्विषयकस्मरणमिष्यत एव, यथा पदज्ञानादाविति मन्तव्यम् ॥ ३४ ॥

करणस्य प्रत्ययपर्य्याये सामर्थ्यात् * उपभोगवन्नियम इत्यस्ति दृष्टान्तः। हेतुर्नास्तीति चेन्मन्यसे, न, करणस्य प्रत्ययपर्य्याये सामर्थ्यात्; नैकस्मिन् ज्ञेये युगपदनेकं ज्ञानमुत्पद्यते, न चानेकस्मिन्, तदिदं दृष्टेन प्रत्ययपर्य्यायेणानुमेयं करणसामर्थ्य-मित्थम्भूतमिति। न ज्ञातुः, विकरणधर्म्मिणो देहनानात्वे प्रत्यययौगपद्यादिति, अयञ्च द्वितीयः प्रतिषेधः। * अवस्थित-शरीरस्य चानेकज्ञानसमवायादेकप्रदेशे युगपदनेकार्थस्मरणं स्यात् * क्वचिदेवावस्थितशरीरस्य ज्ञातुरिन्द्रियार्थप्रबन्धेन ज्ञानमनेकमेकस्मिन्नात्मप्रदेशे समवैति, तेन यदा मनः संयुज्यते, तदा ज्ञातपूर्वस्यानेकस्य युगपत् स्मरणं प्रसज्यते, प्रदेशस्य संयोगपर्य्यायाभावादिति। * आत्मप्रदेशानामद्रव्या-न्तरत्वादेकार्थसमवायस्याविशेषे स्मृतियौगपद्यप्रतिषेधानुप-पत्तिः; * शब्दसन्ताने तु श्रोत्राधिष्ठानप्रत्यासत्त्या शब्द-श्रवणवत् संस्कारप्रत्यासत्त्या मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्ति-प्रसङ्गः। पूर्व एव तु प्रतिषेधः, नानेकज्ञानसमवायादेकप्रदेशे युगपत् स्मृतिप्रसङ्ग इति॥ २५॥

यत् पुरुषधर्मो ज्ञानम्, अन्तःकरणस्येच्छाद्वेषप्रयत्नसुख-दुःखानि धर्मा इति कस्यचिद्दर्शनं, तत् प्रतिषिध्यते,—

**ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः॥ २६॥**

अयं खलु जानीते तावत्—इदं मे सुखसाधनम्, इदं मे दुःखसाधनमिति; ज्ञातं सुखसाधनमाप्तुमिच्छति, दुःखसाधनं हातुमिच्छति, प्राप्तुम् इच्छाप्रयुक्तस्यास्य सुखसाधनावाप्तये समीहाविशेष आरम्भः, जिहासाप्रयुक्तस्य दुःखसाधनपरिवर्जनं

---

नन्विच्छाऽऽदीनां मनोधर्मत्वात्तेषां ज्ञानजन्यत्वात् समानाधिकरणत्वेन च तत्र कार्य्यकारणभावात् कथं ज्ञानस्याऽऽत्मगुणत्वम्? इत्याशङ्कायां सिद्धान्तसूत्रम्।—अत्र

निवृत्तिः ; एवं ज्ञानेच्छाप्रयत्नसुखदुःखानामेकेनाभिसम्बन्धः, एककर्तृकत्वं, ज्ञानेच्छाप्रवृत्तीनां समानाऽऽश्रयत्वञ्च । तस्माज्ज्ञस्येच्छाद्वेषप्रयत्नसुखदुःखानि धर्माः, नाचेतनस्येति.; आरम्भनिवृत्त्योश्च प्रत्यगात्मनि दृष्टत्वात् परत्रानुमानं वेदितव्यमिति ॥ ३६॥

अत्र भूतचैतनिक आह,—

तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः ॥३७॥

आरम्भनिवृत्तिलिङ्गाविच्छाद्वेषाविति यस्याऽऽरम्भनिवृत्ती, तस्येच्छाद्वेषौ, तस्य ज्ञानमिति प्राप्तं पार्थिवाऽऽप्यतैजसवायवीयानां शरीराणामारम्भनिवृत्तिदर्शनादिच्छाद्वेषज्ञानैर्योग इति चैतन्यम् ॥ ३७ ॥

परश्वादिष्वारम्भनिवृत्तिदर्शनात् ॥ ३८ ॥

शरीरे चैतन्यानिवृत्तिः। आरम्भनिवृत्तिदर्शनादिच्छाद्वेषज्ञानैर्योग इति प्राप्तं परश्वादेः करणस्याऽऽरम्भनिवृत्तिदर्शनाच्चैतन्यमिति। अथ शरीरस्येच्छाऽऽदिभिर्योगः, परश्वादेस्तु करणस्याऽऽरम्भनिवृत्ती व्यभिचरतः, न तर्ह्ययं हेतुः,पार्थिवाऽऽप्यतैजसवायवीयानां शरीराणामारम्भनिवृत्तिदर्शनादिच्छाद्वेषज्ञानैर्योग इति। अयं तर्ह्यन्योऽर्थः, "तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवा-

---

ज्ञानवत आत्मनः, इच्छाऽऽदयः। हेतुमाह,—आरम्भनिवृत्त्योरिच्छाद्वेषनिमित्तत्वादिति प्रवृत्तिनिवृत्त्योरिच्छाद्वेषजन्यत्वात्, तत्र सामानाधिकरण्येन ज्ञानस्य हेतुत्वमिति भावः ; यद्वा,—यस्य ज्ञानवतः, याविच्छाद्वेषौ, तन्निमित्तत्वादित्यर्थः, तथा च ज्ञानेच्छाप्रयत्नानां सामानाधिकरण्यं नासिद्धम् ॥ ३६ ॥

नन्वस्तु तेषां सामानाधिकरण्यं, परन्तु तेषामधिकरणं कायाकारः पार्थिवादिपरमाणुपुञ्ज एवेति चार्वाकः शङ्कते।—पार्थिवाद्येषु देहेषु ज्ञानादेर्न प्रतिषेधः। कुतः ?—इच्छाद्वेषयोस्तल्लिङ्गत्वादारम्भनिवृत्तिलिङ्गकत्वात् तयोः चेष्टाविशेषलिङ्गकत्वाच्चेष्टायाश्च शरीरे प्रत्यक्षसिद्धत्वादिति भावः ॥ ३७ ॥

समाधत्ते: प्रतिबन्दिमाह।—आरम्भनिवृत्त्यनुमापकक्रियाविशेषदर्शनात् परश्वा-

द्येष्वप्रतिषेधः" । पृथिव्यादीनां भूतानामारम्भस्तावत् त्रस-(ट)-स्थावरशरीरेषु, तदवयवव्यूहलिङ्गः प्रवृत्तिविशेषः, लोष्टाऽऽदिषु च लिङ्गाभावात् प्रवृत्तिविशेषाभावो निवृत्तिः, आरम्भनिवृत्ति-लिङ्गाविच्छाद्वेषाविति, पार्थिवाऽऽप्येष्वणुषु तद्दर्शनादिच्छा-द्वेषयोस्तद्योगाज्ज्ञानयोग इति सिद्धं भूतचैतन्यमिति ॥ ३८ ॥

## कुम्भाऽऽदिष्वनुपलब्धेरहेतुः ॥ ३९ ॥

कुम्भाऽऽदिमृदवयवानां व्यूहलिङ्गः प्रवृत्तिविशेष आरम्भः, सिकताऽऽदिषु प्रवृत्तिविशेषाभावो निवृत्तिः, न च मृत्सिकतानामारम्भनिवृत्तिदर्शनादिच्छाद्वेषप्रयत्नज्ञानैर्योगः, तस्मात् तल्लिङ्गत्वादिच्छाद्वेषयोरित्यहेतुरिति ॥ ३९ ॥

## नियमानियमौ तु तद्विशेषकौ ॥ ४० ॥

तयोरिच्छाद्वेषयोर्नियमानियमौ विशेषकौ भेदकौ, ज्ञस्येच्छा-द्वेषनिमित्ते प्रवृत्तिनिवृत्ती, न स्वाऽऽश्रये; किं तर्हि ?— प्रयोज्याऽऽश्रये । तत्र प्रयुज्यमानेषु भूतेषु प्रवृत्तिनिवृत्ती स्तः, न सर्वेषु, इत्यनियमोपपत्तिः । यस्य तु ज्ञानाद्भूतानामिच्छाद्वेष-निमित्ते आरम्भनिवृत्ती स्वाऽऽश्रये, तस्य नियमः स्यात् ; यथा भूतानां गुणान्तरनिमित्ता प्रवृत्तिर्गुणप्रतिबन्धाच्च निवृत्ति-र्भूतमात्रे भवति नियमेन, एवं भूतमात्रे ज्ञानेच्छाद्वेषनिमित्ते प्रवृत्तिनिवृत्ती स्वाऽऽश्रये स्याताम् । तस्मात् प्रयोजकाऽऽश्रिता ज्ञानेच्छाद्वेषप्रयत्नाः, प्रयोज्याऽऽश्रये तु प्रवृत्तिनिवृत्ती इति सिद्धम् । * एकशरीरे तु ज्ञातृबहुत्वं निरनुमानम् । * भूतचैत-

दिषु ज्ञानाऽऽदिविरहिप्रसङ्गः । तस्मात् क्रियाविशेषाणां प्रयत्नादिजन्यत्वं सम्बन्धान्तरेण, न तु समवायेन, व्यभिचारादिति भावः ॥ ३८ ॥

स्वमते व्युत्पादयति ।—तद्विशेषकौ तयोश्चेतनाचेतनयोः, विशेषकौ इतरव्यावर्तकौ, नियमानियमौ समवायेन अन्यतानियमतदभावौ, समवायेन ज्ञानेच्छाऽऽदीनां चेतन-

(ट) त्रसशब्दस्य जङ्गम इत्यर्थः, जङ्गमस्थावरशरीरेष्वित्यर्थः ।

निकपदार्थस्यैकशरीरे बहूनि भूतानि ज्ञानेच्छाद्वेषप्रयत्नगुणा-नीति ज्ञातृबहुत्वं प्राप्तम्, ओमिति ब्रुवतः प्रमाणं नास्ति ; यथा नाना शरीरेषु नाना ज्ञातारो बुद्ध्यादिगुणव्यवस्थानात्, एव-मेकशरीरेऽपि बुद्ध्यादिव्यवस्थाऽनुमानं स्यात् ज्ञातृबहुत्वस्येति । * दृष्टश्चान्यगुणनिमित्तः प्रवृत्तिविशेषो भूतानाम् ; सोऽनुमान-मन्यत्रापि * दृष्टः करणलक्षणेषु भूतेषु परश्वादिषूपादान-लक्षणेषु च मृत्प्रभृतिष्वन्यगुणनिमित्तः प्रवृत्तिविशेषः ; सोऽनु-मानम् अन्यत्रापि च त्रसस्थावरशरीरेषु तदवयवव्यूहलिङ्गः प्रवृत्तिविशेषो भूतानामन्यगुणनिमित्त इति ; स च गुणः प्रयत्न-समानाऽऽश्रयः संस्कारो धर्माधर्मसमाख्यातः सर्वार्थः पुरुषार्था-ऽऽराधनाय प्रयोजको भूतानां प्रयत्नवदिति। आत्मास्तित्व-हेतुभिरात्मनित्यत्वहेतुभिश्च भूतचैतन्यप्रतिषेधः कृतो वेदितव्यः, नेन्द्रियार्थयोः ; तद्विनाशेऽपि ज्ञानावस्थानादिति च समानः प्रतिषेध इति। क्रियामात्रं क्रियोपरममात्रञ्च प्रवृत्तिनिवृत्ती इत्यभिप्रेत्योक्तं,—"तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रति-षेधः" ; अन्यथा त्विमे आरम्भनिवृत्ती आख्याते ; न च तथाविधे पृथिव्यादिषु दृश्येते, तस्मादयुक्तं "तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः" इति ॥ ४० ॥

भूतेन्द्रियमनसां समानः प्रतिषेधः, मनस्तूदाहरणमात्रम्,—

**यथोक्तहेतुत्वात् पारतन्त्र्यादकृताभ्यागमाच्च न मनसः ॥ ४१ ॥**

इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमित्यतः प्रभृति

---

धर्मत्वात् अवच्छेदकतया च शरीरे तेषां जन्यजनकभावः। परश्वादौ यत्नविषय-तया क्रिया, वस्तुतस्तु चेष्टैव परश्वादिक्रियाजनिका, यत्नादेस्तद्धेतुत्वे मानाभावः ॥४०॥

इच्छाऽऽदीनां मनोगुणत्वाभावे युक्त्यन्तरमाह।—इच्छादय इति शेषः, यथोक्त-

यथोक्तं मङ्क्ष्यते, तेन भूतेन्द्रियमनसां चैतन्यप्रतिषेधः। पारतन्त्र्यात्—परतन्त्राणि भूतेन्द्रियमनांसि धारणप्रेरणव्यूहनक्रियासु प्रयत्नवशात् प्रवर्त्तन्ते, चैतन्ये पुनः स्वतन्त्राणि स्युरिति। अकृताभ्यागमाच्च—प्रवृत्तिर्वाग्बुद्धिशरीराऽऽरम्भ इति चैतन्ये भूतेन्द्रियमनसां परकृतं कर्म पुरुषेण भुज्यत इति स्यात्, अचैतन्ये तु तत्साधनस्य स्वकृतकर्मफलोपभोगः पुरुषस्येत्युपपद्यत इति ॥ ४१ ॥

अथायं सिद्धोपसङ्ग्रहः,—

**परिशेषाद्यथोक्तहेतूपपत्तेश्च ॥ ४२ ॥**

आत्मगुणो ज्ञानमिति प्रकृतम्। परिशेषो नाम प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे सम्प्रत्ययः; भूतेन्द्रियमनसां प्रतिषेधे द्रव्यान्तरं न प्रसज्यते, शिष्यते चाऽऽत्मा, तस्य गुणो ज्ञानमिति ज्ञायते। यथोक्तहेतूपपत्तेश्चेति।—दर्शनस्पर्शनाभ्यामेकार्थ-

हेतुत्वात् ज्ञानेच्छाऽऽदीनां सामानाधिकरण्येन कार्य्यकारणभावात्, पारतन्त्र्यात् मनसश्चेतनसहकारित्वान, इच्छाऽऽदयो न तद्गुणाः, वस्तुतस्तु इच्छाऽऽदीनां पारतन्त्र्यात् पराधीनविषयताशालित्वात्; इच्छाऽऽदीनां हि समानाधिकरणस्वजनकज्ञानविषयतैव विषयता, ज्ञानवैयधिकरण्ये च तन्न स्यादिति भावः। स्वकृतात् स्वयंकृतात्, कर्म्मण अभ्यागमो भोगः, स मनसो यत्नाऽऽदिसत्त्वे न स्यात्, न ह्यन्यकृतात्कर्म्मणो भोगः, न वा भोगोऽपि मनसः, भोक्तुर्बन्धमोक्षाऽऽदिभागिन एवाऽऽत्मत्वात्, तद्भिन्ने आत्मनि मानाभावात्, आत्मनः सुखाऽऽदिसाक्षात्कारानुरोधान्महत्त्वम्; मनसश्च धर्मिग्राहकमानादणुत्वम्, अतोऽपि नैक्यम्। न च मनसः परमाणुत्वाल्लाघवाच्च नित्यत्वं त्वन्मतम्; तथा चाऽऽत्ममनसोर्नित्यत्वात् सदा ज्ञानाऽऽदिप्रसङ्गादनिर्मोक्षः स्यात्, अतोऽन्तःकरणस्यानित्यत्वं, तन्नाशश्च मोक्ष इति वाच्यम्; अदृष्टाद्यभावेन नित्ययोरपि बन्ध्ययोरिव फलाजनकत्वात्। न च ज्ञानाऽऽदिकं प्रक्रम्य इत्येतत्सर्वं मन एवेति श्रुतेर्मनस एव ज्ञानादिकम्, अभेदस्तुतिनोपादानोपादेयभावकथनादिति वाच्यम्; "अन्नं वै प्राणाः" इत्यादौ निमित्तेऽपि अभेदोल्लेखदर्शनात् कारणत्वमात्रे तात्पर्य्यादिति तत्त्वम् ॥ ४१ ॥

आत्मगुणत्वमुपसंहरति।—इच्छाऽऽदिकमात्मगुण इत्यादि। हेतुमाह,—परि-

ग्रहणादित्येवमादीनामात्मप्रतिपत्तिहेतूनामप्रतिषेधादिति, परिशेषज्ञापनार्थं प्रकृतस्थापनाऽऽदिज्ञानार्थञ्च यथोक्तहेतूपपत्तिवचनमिति। अथवोपपत्तेश्चेति हेत्वन्तरमेवेदम्;—नित्यः खल्वयमात्मा यस्मादेकस्मिन् शरीरे धर्मञ्चरित्वा कायभेदात् स्वर्गे देवेषूपपद्यते, अधर्मञ्चरित्वा देहभेदान्नरकेषूपपद्यत इति उपपत्तिः शरीरान्तरप्राप्तिलक्षणा; सा सति सत्त्वे नित्ये चाऽऽश्रयवती, बुद्धिप्रबन्धमात्रे तु निरात्मके निराश्रया नोपपद्यत इति। एकसत्त्वाधिष्ठानश्चानेकशरीरयोगः संसार उपपद्यते, शरीरप्रबन्धोच्छेदश्चापवर्गो मुक्तिरित्युपपद्यते, बुद्धिसन्ततिमात्रे त्वेकसत्त्वानुपपत्तेर्न कश्चिद्दीर्घमध्वानं सन्धावति, न कश्चिच्छरीरप्रबन्धाद्विमुच्यत इति संसारापवर्गानुपपत्तिरिति। बुद्धिसन्ततिमात्रे च सत्त्वभेदात् सर्वमिदं प्राणिव्यवहारजातमप्रतिसंहितमव्यावृत्तमपरिनिष्ठञ्च (ठ) स्यात्, ततः स्मरणाभावान्नान्यदृष्टमन्यः स्मरतीति; स्मरणञ्च खलु पूर्वज्ञातस्य समानेन ज्ञात्रा ग्रहणम्, अज्ञासिषममुमर्थं ज्ञेयमिति; सोऽयमेको ज्ञाता पूर्वज्ञातमर्थं गृह्णाति, तच्चास्य ग्रहणं स्मरणमिति, तत् बुद्धिप्रबन्धमात्रे निरात्मके नोपपद्यते ॥ ४२ ॥

**स्मरणन्त्वात्मनो ज्ञस्वाभाव्यात् ॥ ४३ ॥**

उपपद्यत इति। आत्मन एव स्मरणं, न बुद्धिसन्ततिमात्रस्येति। तुशब्दोऽवधारणे। कथम्?—ज्ञस्वभावत्वात्; ज्ञ इत्यस्य स्वभावः स्वो धर्मः, अयं खलु ज्ञास्यति जानाति अज्ञासो-

शेषात् शरीराऽऽदिहेतुनिरासात्, यथोक्तहेतूनां दर्शनस्पर्शनाभ्यामेकार्थग्रहणादित्यादीनाम्, उपपत्तेः उपपन्नत्वात् ॥ ४२ ॥

स्मृतेरात्मगुणत्वमर्थसिद्धमपि शिष्यबुद्धिवैशद्याय पृथग्व्युत्पादयति।—तुरप्यर्थे। ज्ञस्वाभाव्यात् ज्ञानवत्स्वाभाव्यात्, ज्ञानत्वावच्छिन्नवत्त्वं ह्यात्मनः स्वभावः, स्मृतेश्च

(ठ) "अपारनिष्ठानञ्च" इत्यपि पाठः।

दिति त्रिकालविषयेणानेकेन ज्ञानेन सम्बध्यते, तच्चास्य त्रिकालविषयं ज्ञानं प्रत्यात्मवेदनीयं ज्ञास्यामि जानामि अज्ञासिषमिति वर्त्तते, तत् यस्यायं स्वो धर्मः, तस्य स्मरणं, न बुद्धिप्रबन्धमात्रस्य निरात्मकस्येति ॥ ४३ ॥

स्मृतिहेतूनामयौगपद्यात् युगपदस्मरणमित्युक्तम्। अथ केभ्यः स्मृतिरुत्पद्यते इति ?—स्मृतिः खलु,—

**प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्य-परिग्रहाऽऽश्रयाऽऽश्रितसम्बन्धाऽऽनन्तर्य्यवियोगैक-कार्य्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेष-भयार्थित्वक्रियारागधर्माधर्मनिमित्तेभ्यः ॥ ४४ ॥**

सुस्मूर्षया मनसो धारणं—प्रणिधानं, सुस्मूर्षितलिङ्गचिन्तनञ्चार्थस्मृतिकारणम्। निबन्धः खलु—एकग्रन्थोपयमोऽर्थानाम्,

---

ज्ञानत्वावच्छिन्नत्वात् तद्धर्मत्वमर्थात् सिद्धम् ; यद्वा,—स्वाभाव्यात् स्मृतिहेतुज्ञानस्याऽऽत्मवृत्तित्वे सिद्धे स्मृतेरात्मवृत्तित्वमपि सिद्धम् ; परे तु,—"ज्ञानस्याऽऽशुविनाशित्वात्कथं स्मृतिहेतुतेत्यत्राऽऽह, स्मरणमित्यादि।—ज्ञानवतः स्वभावः संस्कारः तस्मादित्यर्थः" इत्याहुः ॥ ४३ ॥

स्मृतेर्यौगपद्यसमाधानाय प्रणिधानाऽऽदीनामुद्बोधकानां क्रमो हेतुरुक्तः, तत्र प्रणिधानाऽऽदीनि दर्शयति।—स्मरणमित्यनुवर्त्तते। निमित्तशब्दस्य द्वन्द्वात्परं श्रुतस्य प्रत्येकमभेदेनान्वयः। प्रणिधानं मनसो विषयान्तरसञ्चारवारणम् ; निबन्ध एकग्रन्थोपनिबन्धनम् ; यथा प्रमाणेन प्रमेयाऽऽदिस्मरणम्। अभ्यासः संस्कारबाहुल्यम् ; एतस्य यद्यपि नोद्बोधकत्वं, तथाऽपि तादृशे शीघ्रमुद्बोधकसमवधानं स्यादित्याशयेन तदुपन्यासः। अभ्यासो दृढतरसंस्कार उद्बोधकत्वेनोक्त इति केचित्। लिङ्गं व्याप्यम् ; व्यापकस्य स्मारकम् ; लक्षणं यथा कपिध्वजाऽऽदि अर्जुनादेः। सादृश्यं देहादेः। परिग्रहः स्वीकारः, तस्य स्वस्वामिभावोऽर्थः ; तदेकतरेणान्यतरस्मरणम्। आश्रयाऽऽश्रितौ राजाऽऽदितत्परिजनौ परस्परस्मारकौ। सम्बन्धो गुरुशिष्यभावादिः, गोवृषन्यायात् पृथगुक्तः। आनन्तर्य्यं प्रोक्षणावघातादिः। वियोगो यथा दारादेः। एककार्य्या

एकग्रन्थोपयता: खल्वर्था अन्योऽन्यस्मृतिहेतव आनुपूर्व्व्येणतरथा वा भवन्तीति। धारणाशास्त्रकृतो वा प्रज्ञातेषु वस्तुषु स्मर्त्तव्यानामुपनिक्षेपो निबन्ध इति। अभ्यासस्तु—समाने विषये ज्ञानानामभ्यावृत्तिरभ्यासजनित: संस्कार आत्मगुणोऽभ्यासशब्देनोच्यते, स च स्मृतिहेतु: समान इति। लिङ्गं पुन:,—संयोगिसमवाय्येकार्थसमवायि-(ङ)-विरोधि चेति। संयोगी यथा,—धूमोऽग्ने:, गोर्विषाणं, पाणि: पादस्य, रूपं स्पर्शस्य, अभूतं भूतस्येति। लक्षणं—पश्ववयवस्थं गोत्रस्य स्मृतिहेतु: ; विदानामिदं, गर्गाणामिदमिति। सादृश्यं—चित्रगतं प्रतिरूपकम् ; देवदत्तस्येत्येवमादि। परिग्रहात्—स्वेन वा स्वामी स्वामिना वा स्वं स्मर्य्यते। आश्रयात्—ग्रामण्या तदधीनं स्मरति। आश्रितात्—तदधीनेन ग्रामण्यमिति। सम्बन्धात्—अन्तेवासिना गुरुं स्मरति, ऋत्विजा याज्यमिति। आनन्तर्य्यात् इति—करणीयेष्वर्थेषु। वियोगात्—येन विप्रयुज्यते, तद्वियोगप्रतिसंवेदो भृशं स्मरति। एककार्य्यात्—कर्त्रन्तरदर्शनात् कर्त्रन्तरे स्मृति:। विरोधात्—विजिगीषमाणयोरन्यतरदर्शनादन्यतर: स्मर्य्यते। अतिशयात्—येनातिशय उत्पादित:। प्राप्ते:,—यतो येन किञ्चित्

---

अन्तेवासिप्रभृतय: परस्परस्मारका:। विरोधादहिनकुलादेरन्यतरेणापरस्मरणम्। अतिशय: संस्कार उपनयनाऽऽदिराधार्य्याऽऽदिस्मारक:। प्राप्तिर्धनाऽऽदेर्दातारं स्मारयति। व्यवधानमावरणम् ; यथा खड्गाऽऽदे: कोषाऽऽदि। सुखदु:खयोरन्यतरेणापरस्य, ताभ्यां तत्प्रयोजकस्य वा स्मरणम्। इच्छाद्वेषौ यद्विषयकतया गृहीतौ, तस्य स्मारकौ। भयं मरणादेर्भयहेतोर्वा स्मारकम्। अर्थित्वं दातु:। क्रिया शाखादे: वाय्वादे:। रागात् प्रीते:, पुत्रादे: स्मरणम्। धर्माधर्माभ्यां जन्मान्तरानुभूतसुखदु:खसाधनयो:

---

(ङ) अत्र षष्ठीतत्पुरुषसप्तमीतत्पुरुषसमासौ बोध्यौ ; यद्वा,—षष्ठीतत्पुरुषबहुव्रीहिसमासौ।

प्रातमात्मव्यं वा भवति, तमभीक्ष्णं स्मरति। व्यवधानात्—कोशाऽऽदिभिरसिप्रभृतीनि स्मर्य्यन्ते। सुखदुःखाभ्यां—तद्धेतुः स्मर्य्यते। इच्छाद्वेषाभ्यां—यमिच्छति, यञ्च द्वेष्टि, तं स्मरति। भयात्—यतो बिभेति। अर्थित्वात्—येनार्थी भोजनेनाऽऽच्छादनेन वा। क्रियायाः—रथेन रथकारं स्मरति। रागात्—यस्यां स्त्रियां रक्तो भवति, तामभीक्ष्णं स्मरति। धर्मात्—जात्यन्तरस्मरणम्, इह चाधीतश्रुतावधारणमिति। अधर्मात्—प्रागनुभूतदुःखसाधनं स्मरति। न चैतेषु निमित्तेषु युगपत्संवेदनानि भवन्तीति युगपदस्मरणमिति। निदर्शनञ्चेदं स्मृतिहेतूनां, न परिसङ्ख्यानमिति ॥ ४४ ॥

अनित्यायाञ्च बुद्धावुत्पन्नाऽपवर्गित्वात् कालान्तरावस्थानाच्चानित्यानां संशयः,—किमुत्पन्नाऽपवर्गिणी बुद्धिः शब्दवत्?—आहोस्वित् कालान्तरावस्थायिनी कुम्भवदिति? उत्पन्नाऽपवर्गिणीति पक्षः परिगृह्यते। कस्मात्?—

(ढ) कर्मानवस्थायित्वग्रहणात् ॥ ४५ ॥

कर्मणोऽनवस्थायिनो ग्रहणादिति। क्षिप्तस्येषोरापतनात् क्रियासन्तानो गृह्यते, प्रत्यर्थनियमाच्च बुद्धीनां क्रियासन्तानवत् बुद्धिसन्तानोपपत्तिरिति। * अवस्थितग्रहणे च व्यवधीयमानस्य प्रत्यक्षनिवृत्तेः। * अवस्थिते च कुम्भे गृह्यमाणेन

प्रागनुभूतसुखादेश्च स्मरणमिति। उक्तेषु च किञ्चित्स्वरूपं सत्किञ्चिच्च ज्ञातमुद्बोधकं, शिष्यव्युत्पादनाय चायं प्रपञ्चः ॥ ४४ ॥

समाप्तं बुद्ध्यात्मगुणत्वप्रकरणम्।

बुद्धेर्बुद्ध्यन्तरादिनाश उक्तः, स च तृतीयक्षणवर्त्तिध्वंसप्रतियोगित्वसिद्धौ स्यात्, अतो बुद्धेरुत्पन्नापवर्गित्वं व्युत्पादनीयम्; तत्र सिद्धान्तसूत्रम्।—शरीराऽऽदिकर्म-

(ढ) स्थिरगोचराः बुद्धयः क्षणिकाः, बुद्धित्वात्; कर्माऽऽदिबुद्धिवत् इति तात्पर्य्यटीका।

सन्तानेनैव बुद्धिर्वर्त्तते, प्राग्व्यवधानात् ; तेन व्यवहिते प्रत्यक्षं ज्ञानं निवर्त्तते । कालान्तरावस्थाने तु बुद्धेर्दृश्यव्यवधानेऽपि प्रत्यक्षमवतिष्ठेतेति । स्मृतिश्चालिङ्गं बुद्ध्यवस्थाने, संस्कारस्य बुद्धिजन्यस्य स्मृतिहेतुत्वात् । यश्च मन्येतावतिष्ठते बुद्धिः, दृष्टा हि बुद्धिविषये स्मृतिः, सा च बुद्धावनित्यायां कारणाभावान्न स्यादिति ; तदिदमलिङ्गम् । कस्मात् ?—बुद्धिजो हि संस्कारो गुणान्तरं स्मृतिहेतुः, न बुद्धिरिति ॥ ४५ ॥

हेत्वभावादयुक्तमिति चेत्,—

**बुद्ध्यवस्थानात् प्रत्यक्षत्वे स्मृत्यभावः ॥ ४६ ॥**

यावदवतिष्ठते बुद्धिः, तावदसौ बोद्धव्योऽर्थः प्रत्यक्षः, प्रत्यक्षे च स्मृतिरनुपपन्नेति ॥ ४६ ॥

**अव्यक्तग्रहणमनवस्थायित्वात् विद्युत्सम्पाते रूपाव्यक्तग्रहणवत् ॥ ४७ ॥**

यद्युत्पन्नाऽपवर्गिणी बुद्धिः, प्राप्तमव्यक्तं बोद्धव्यस्य ग्रहणम् ; यथा विद्युत्सम्पाते वैद्युतस्य प्रकाशस्यानवस्थानादव्यक्तं रूप-ग्रहणमिति । व्यक्तं तद्द्रव्याणां ग्रहणं, तस्माद्युक्तमेतदिति ॥४७॥

**हेतूपादानात् प्रतिषेद्धव्याभ्यनुज्ञा ॥ ४८ ॥**

उत्पन्नाऽपवर्गिणी बुद्धिरिति प्रतिषेद्धव्यं, तदेवाभ्यनुज्ञायते, विद्युत्सम्पाते रूपाव्यक्तग्रहणवदिति । * यत्राव्यक्तं ग्रहणं,

---

धारायां अनवस्थायिन्याः प्रत्यक्षधाराऽपि वाच्या, न चाऽऽद्यबुद्धेरुत्तरोत्तरग्राहकत्वं, चिरस्य व्यापाराभावात्; पूर्वपूर्वस्य च परपरतोऽननुभवादिनाशसिद्धावाश्रयनाशादे रभावाद्विरोधिगुणस्यैव नाशकत्वमिति ; कथं बुद्धेरनवस्थायित्वग्रहणादिति वाऽर्थः ॥४५॥

शङ्कते ।—बुद्धिर्यद्याशुविनाशिनी स्यात्, योग्यांशधर्मविशेषधर्मविशिष्टधर्मिणोर्ग्रहो न स्यात्, विद्युत्सम्पातकालीनवस्तुग्रहणवत् ; न चैवं, तस्मान्न तथेत्यर्थः ॥ ४७ ॥

उत्तरयति ।—प्रतिषिद्धव्यस्य बुद्धेराशुविनाशित्वस्याभ्यनुज्ञा त्वया कृता,

तत्रोत्पन्नाऽपवर्गिणी बुद्धिरिति ग्रहणहेतुविकल्पाद्ग्रहणविकल्पः, न बुद्धिविकल्पात्, * यदिदं क्वचिदव्यक्तं ग्रहणम्, अयं विकल्पो ग्रहणहेतुविकल्पात्; यत्रानवस्थितो ग्रहणहेतुः, तत्राव्यक्तं ग्रहणं, यत्रावस्थितः, तत्र व्यक्तं, न तु बुद्धेरवस्थानानवस्थानाभ्यामिति। कस्मात्?—अर्थग्रहणं हि बुद्धिः, यत्तदर्थग्रहणमव्यक्तं व्यक्तं वा, बुद्धिः सेति। विशेषाग्रहणे च सामान्यग्रहणमात्रमव्यक्तग्रहणम्; तत्र विषयान्तरे बुद्ध्यन्तरानुत्पत्तिर्निमित्ताभावात्। यत्र समानधर्मयुक्तश्च धर्मी गृह्यते, विशेषधर्मयुक्तश्च, तद्व्यक्तं ग्रहणम्; यत्र तु विशेषेऽगृह्यमाणे सामान्यग्रहणमात्रं तदव्यक्तं ग्रहणम्। समानधर्मयोगाच्च विशिष्टधर्मयोगो विषयान्तरं, तत्र यत् ग्रहणं न भवति, तत् ग्रहणनिमित्ताभावात्, न बुद्धेरनवस्थानादिति। यथाविषयञ्च ग्रहणं व्यक्तमेव, प्रत्यर्थनियतत्वाच्च बुद्धीनाम्; सामान्यविषयञ्च ग्रहणं स्वविषयं प्रति व्यक्तं, विशेषविषयञ्च प्रत्यव्यक्तम्; विशेषविषयञ्च ग्रहणं स्वविषयं प्रति व्यक्तम्; प्रत्यर्थनियता हि बुद्धयः, तदिदमव्यक्तग्रहणं देशितं क्व विषये बुद्ध्यनवस्थानकारितं स्यादिति। धर्मिणस्तु धर्मभेदे बुद्धिनानात्वस्य भावाभावाभ्यां तदुपपत्तिः, धर्मिणः खल्वर्थस्य समानाश्च धर्मा विशिष्टाश्च, तेषु प्रत्यर्थनियता नानाबुद्धयः, ता उभय्यो यदा धर्मिणि वर्त्तन्ते, तदा व्यक्तं ग्रहणं धर्मिणमभिप्रेत्य, यदा तु सामान्यग्रहणमात्रं तदाऽव्यक्तं ग्रहणमिति। एवं धर्मिणमभिप्रेत्य व्यक्ताव्यक्तयोर्ग्रहणयोरुपपत्तिरिति; न चेदमव्यक्तं ग्रहणं बुद्धेर्बोद्धव्यस्य वाऽनवस्थायित्वादुपपद्यत इति ॥ ४८ ॥

विद्युत्सम्पातदृष्टान्तोपदस्य हेतोः साधकस्य, उपादानात्, तथा चाशक्तौ चाप इति स्यात्. ॥ ४८ ॥

इदं हि न,—

**प्रदीपार्चिःसन्तत्यभिव्यक्तग्रहणवत्तद्ग्रहणम् ॥४९॥**

अनवस्थायित्वेऽपि बुद्धेस्तेषां द्रव्याणां ग्रहणं व्यक्तं प्रतिपत्तव्यम् ; कथम् ?—प्रदीपार्चिःसन्तत्यभिव्यक्तग्रहणवत् । प्रदीपार्चिषां सन्तत्या वर्त्तमानानां ग्रहणानवस्थानं ग्राह्यानवस्थानञ्च प्रत्यर्थनियतत्वात् बुद्धीनां, यावन्ति प्रदीपार्चीँषि, तावत्यो बुद्धय इति, दृश्यते चात्र व्यक्तं प्रदीपार्चिषां ग्रहणमिति ॥४९॥

चेतना शरीरगुणः, सति शरीरे भावादसति चाभावादिति,—

**द्रव्ये स्वगुणपरगुणोपलब्धेः संशयः ॥ ५० ॥**

सांशयिक इति भावः । स्वगुणोऽप्सु द्रवत्वमुपलभ्यते, परगुणश्चोष्णता, तेनायं संशयः, किं शरीरगुणश्चेतना शरीरे गृह्यते, अथ द्रव्यान्तरगुणः ? इति ॥ ५० ॥

**यावच्छरीरभावित्वाद्रूपाऽऽदीनाम् ॥ ५१ ॥**

न शरीरगुणश्चेतना ; कस्मात् ?—न रूपाऽऽदिहीनं शरीरं गृह्यते, चेतनाहीनन्तु गृह्यते ; यथोष्णताहीना आपः ; तस्मान्न

---

अस्तु तर्हि तद्दृष्टान्तेनान्यासां बुद्धीनामनवस्थायित्वमित्याह ।—यथा प्रदीपार्चिषां सन्तन्यमानानामनवस्थायित्वेऽप्यभिव्यक्तग्रहणं, तथाऽन्यत्रापि स्यात्, विद्युत्सम्पातस्थले या बुद्धिरुत्पन्ना, सा स्वविषये व्यक्तैवेति भावः ॥ ४९ ॥

समाप्तं बुद्धेरुत्पन्नाऽपवर्गित्वप्रकरणम् ।

अथ बुद्धेः शरीरगुणत्वाभावप्रकरणम् । न च प्रागेव तत्सिद्धेरनारम्भणीयमेतत्, गौरोऽहं जानामीत्याद्यनुभवेन तत्साधकानामाभासीकरणात् ; अतो विभिद्य तद्दूषणाय संशयबीजमाह ।—द्रव्ये चन्दनाऽऽदौ, स्वगुणस्य रूपाऽऽदेः, परगुणस्य शैत्यादेश्च, ग्रहात् ; एवं शरीरे रूपाऽऽदेरौष्ण्यस्य च ग्रहात् बुद्ध्यादिः शरीरगुणो न वेति संशयः ॥ ५० ॥

तत्र सिद्धान्तसूत्रम् ।—"न शरीरगुणश्चेतना" इति भाष्ये भाष्यकारः पूरयं, न

शरीरगुणश्चेतनेति। संस्कारवदिति चेत्, न, कारणानुच्छेदात्। यथाविधे द्रव्ये संस्कारः, तथाविधे एवोपरमः, न तत्र कारणोच्छेदात् अत्यन्तं संस्कारानुपपत्तिर्भवति ; यथाविधे शरीरे चेतना गृह्यते, तथाविध एवात्यन्तोपरमश्चेतनाया गृह्यते, तस्मात् संस्कारवदित्यसमः समाधिः। अथापि शरीरस्थं चेतनोत्पत्तिकारणं स्यात् द्रव्यान्तरस्थं वोभयस्थं वा, तन्न ; नियमहेत्वभावात्। शरीरस्थेन कदाचिच्चेतनोत्पद्यते, कदाचिन्न, इति नियमहेतुर्नास्तीति ; द्रव्यान्तरस्थेन शरीर एव चेतनोत्पद्यते, न लोष्टाऽऽदिषु, इत्यत्र न नियमहेतुरस्तीति। उभयस्य निमित्तत्वे शरीरसमानजातीये द्रव्ये चेतना नोत्पद्यते, शरीर एव चोत्पद्यते इति नियमहेतुर्नास्तीति ॥ ५१ ॥

यच्च मन्येत सति श्यामादिगुणे द्रव्ये श्यामाद्युपरमो दृष्टः, एवं चेतनोपरमः स्यादिति,—

## न पाकजगुणान्तरोत्पत्तेः ॥ ५२ ॥

नात्यन्तं रूपोपरमः, द्रव्यस्य श्यामे रूपे निवृत्ते पाकजं गुणान्तरं रक्तं रूपमुत्पद्यते, शरीरे तु चेतनामात्रोपरमोऽत्यन्तमिति ॥ ५२ ॥

---

शरीरविशेषगुण इत्यर्थः। अयं तर्काऽऽकारः, बुद्ध्यादिकं शरीरविशेषगुणः स्यात्, यावच्छरीरभावि स्यात् रूपाऽऽदिवत्, तर्पारिष्कार्यं चानुमानम् ; बुद्ध्यादिकं न शरीरविशेषगुणः, अयावद्द्रव्यभावित्वात् शब्दवत्, व्यतिरेके रूपवदा। अयावद्द्रव्यभावित्वञ्च आश्रयत्वाभिमतकालीननाशप्रतियोगित्वम् ॥ ५१ ॥

पिठरपाकमते व्यभिचारमाशङ्कते।—शरीरे पाकाधीनरूपाऽऽदिना व्यभिचाराद्वोक्तं साधनं युक्तमित्यर्थः। परे तु सिद्धान्तसूत्रमेवेदम्। तथा हि, पाकजरूपे न व्यभिचारः शङ्कनीयः, पाकजगुणान्तरस्य रूपान्तरस्योत्पत्तेः। तथा च स्वसमानाधिकरणस्वसमानजातीय-समानकालीनत्वं पूर्वोक्तहेतौ नाशप्रतियोगित्वे विशेषणीयमित्यर्थ इत्याहुः ॥ ५२ ॥

प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः ॥५३॥

अथापि यावत्सु द्रव्येषु पूर्वगुणप्रतिद्वन्द्विसिद्धिः, तावत्सु पाकजोत्पत्तिर्दृश्यते, पूर्वगुणैः सह पाकजानामवस्थानस्याग्रहणात् ; न च शरीरे चेतनाप्रतिद्वन्द्विसिद्धौ सहानवस्थायिगुणान्तरं गृह्यते, येनानुमीयेत, तेन चेतनाया विरोधः ; तस्मादप्रतिषिद्धा चेतना यावच्छरीरं वर्त्तेत, न तु वर्त्तते, तस्मान्न शरीरगुणश्चेतना इति ॥ ५३ ॥

इतश्च न शरीरगुणश्चेतना,—

शरीरव्यापित्वात् ॥ ५४ ॥

शरीरं शरीरावयवाश्च सर्वे चेतनोत्पत्त्या व्याप्ता इति न क्वचिदनुत्पत्तिश्चेतनायाः, शरीरवच्छरीरावयवाश्चेतना इति प्राप्तं चेतनबहुत्वम् ; तत्र यथा प्रतिशरीरं चेतनबहुत्वे सुखदुःखज्ञानानां व्यवस्थालिङ्गम्, एवमेकशरीरेऽपि स्यात्, न तु भवति, तस्मान्न शरीरगुणश्चेतनेति ॥ ५४ ॥

---

सिद्धान्तसूत्रम् ।—पाकजानां प्रतिद्वन्द्विनि पूर्वशरीरप्रतिरूपके शरीरान्तरे सिद्धेः ; घटाऽऽदौ पाकजरूपसम्भवेऽपि शरीरे न तत्सम्भवः, शरीरावयवानां चर्माऽऽदीनामग्निसंयोगविशेषेण नाशाऽऽवश्यकत्वात् । परे तु पाकजानां प्रतिद्वन्द्विनोऽग्निसंयोगात् सिद्धेः ; तथा च तादृशाग्निसंयोगासमानाधिकरणत्वमर्थः ; तेनाग्निसंयोगनाश्येऽग्निसंयोगजन्ये च न व्यभिचार इत्याहुः । अन्ये तु शरीरगुणत्वाभावे हेत्वन्तरमाह, प्रतिद्वन्द्वीति ।—पाकजानां पूर्वरूपाऽऽदिकं प्रतिद्वन्द्वि विरोधि, एकस्मिन् रूपे विद्यमाने रूपान्तराभावात् ; प्रकृते त्वेकस्मिन् ज्ञाने सत्यपि द्वितीयक्षणे ज्ञानान्तरोत्पत्तेर्ज्ञानादिकं न शरीरविशेषगुण इत्यर्थ इत्याहुः ॥ ५३ ॥

हेत्वन्तरमाह ।—शरीरविशेषगुणानामिति शेषः, ज्ञानसुखाऽऽदिकन्तु न शरीरव्यापकम् ; हृदयाद्यवच्छेदेन तदानुभविकत्वादिति भावः ॥ ५४ ॥

यदुक्तं न क्वचिच्छरीरावयवे चेतनाया अनुत्पत्तिरिति, सा,—

**न केशनखाऽऽदिष्वनुपलब्धेः ॥ ५५ ॥**

केशेषु नखाऽऽदिषु चानुत्पत्तिश्चेतनाया इति अनुपपन्नं शरीरव्यापित्वमिति ॥ ५५ ॥

**त्वक्पर्य्यन्तत्वाच्छरीरस्य केशनखाऽऽदिष्वप्रसङ्गः ॥ ५६ ॥**

इन्द्रियाऽऽश्रयत्वं शरीरलक्षणं, त्वक्पर्य्यन्तं जीवमनःसुखदुःखसंवित्त्यायतनभूतं शरीरम् ; तस्मान्न केशाऽऽदिषु चेतनोत्पद्यते। अर्थकारितस्तु शरीरोपनिबन्धः केशाऽऽदीनामिति ॥ ५६ ॥

इतश्च न शरीरगुणश्चेतना,—

**शरीरगुणवैधर्म्यात् ॥ ५७ ॥**

द्विविधश्च शरीरगुणः, अप्रत्यक्षश्च गुरुत्वम्, इन्द्रियग्राह्यश्च रूपाऽऽदि, विधाऽन्तरन्तु चेतना प्रत्यक्षा संवेद्यत्वात्, नेन्द्रियग्राह्या मनोविषयत्वात्, तस्मात् द्रव्यान्तरगुण इति ॥ ५७ ॥

**न रूपाऽऽदीनामितरेतरवैधर्म्यात् ॥ ५८ ॥**

यथेतरेतरविधर्म्माणो रूपाऽऽदयो न शरीरगुणत्वं जहति, एवं रूपाऽऽदिवैधर्म्याच्चेतना शरीरगुणत्वं न हास्यतीति ॥ ५८ ॥

---

दूषयति।—शरीररूपाऽऽदेराश्रयव्यापकत्वं, न शरीरस्य गौररूपस्पर्शाऽऽदेः, केशनखादावनुपलब्धेरित्यर्थः ॥ ५५ ॥

दूषयति।—स्पष्टम्। अन्ये तु,—चेतना न शरीरगुणः, शरीरव्यापित्वात् शरीरतदवयवेषु सर्वेष्वेकेन सम्बन्धेन सत्त्वात्, शरीरगुणास्तु न स्वावयववृत्तिः, शङ्कते, न केशेति।—चैतन्यस्यानुपलब्धेः। समाधत्ते, त्वगितीत्याहुः ॥ ५६ ॥

हेत्वन्तरमाह।—बुद्धिर्न शरीरगुणः, शरीरगुणवैधर्म्यात्, वहिरिन्द्रियाऽऽवेद्यत्वे सति मनसा वेद्यत्वात् ॥ ५७ ॥

आक्षिपति।—नोक्तं युक्तं, रूपाऽऽदीनां परस्परवैधर्म्यात् ; तथा च तद्रीत्या स्पर्शाऽऽदीनां शरीरगुणत्वं न स्यात्, अचाक्षुषत्वात् ; तथा चोक्तमप्रयोजकमिति भावः ॥ ५८ ॥

## ऐन्द्रियकत्वाद्रूपाऽऽदीनामप्रतिषेधः ॥ ५९ ॥

अप्रत्यक्षत्वाच्चेति । यथेतरेतरविधर्माणो रूपाऽऽदयो न द्वैविध्यमतिवर्त्तन्ते, तथा चेतनाऽपि नातिवर्त्तेत, यदि शरीरगुणः स्यादिति । अतिवर्त्तते तु, तस्मान्न शरीरगुण इति ॥ ५९ ॥

भूतेन्द्रियमनसां ज्ञानप्रतिषेधात् सिद्धे सत्याऽऽरम्भो विशेषज्ञापनार्थं, बहुधा परीक्ष्यमाणं तत्त्वं सुनिश्चिततरं भवतीति परीक्षिता बुद्धिः । मनस इदानीं परीक्षाक्रमः । तत् किं प्रतिशरीरमेकमनेकम् ? इति विचारे.—

## ज्ञानायौगपद्यादेकं मनः ॥ ६० ॥

अस्ति खलु वै ज्ञानायौगपद्यमेकैकस्येन्द्रियस्य, यथाविषयं करणस्यैकप्रत्ययनिर्वृत्तौ सामर्थ्यान्न तदेकत्वे मनसो लिङ्गम् ; यत्तु खल्विदमिन्द्रियान्तराणां विषयान्तरेषु ज्ञानायौगपद्यमिति, तल्लिङ्गम् ; कस्मात् ?—सम्भवति खलु वै बहुषु मनस्सु इन्द्रियमनःसंयोगयौगपद्यमिति ज्ञानयौगपद्यं स्यात्, न तु भवति, तस्माद्विषये प्रत्ययपर्य्यायादेकं मनः ॥ ६० ॥

---

समाधत्ते ।—रूपाऽऽदीनां न शरीरगुणत्वप्रतिषेधः । कुतः ?—ऐन्द्रियकत्वात् । तत्तदिन्द्रियग्राह्यत्वरूपतत्तद्गुणवैधर्म्येऽपि शरीरगुणत्वावच्छिन्नवैधर्म्यस्य बहिरिन्द्रियग्राह्यत्वे सति ग्राह्यत्वस्याभावात्, बुद्धौ च तत्सत्त्वादिति भावः ॥ ५९ ॥

समाप्तं बुद्धेः शरीरगुणभेदप्रकरणम् ।

अथ क्रमप्राप्ता मनःपरीक्षा, तत्र प्रतिशरीरमेकं मनश्चक्षुरादिसहकारितया मनःपञ्चकं वेति संशये मनःपञ्चकमेवोचितम् ; तेन च प्रत्येकं सकलमनःसम्बन्धासम्बन्धाभ्यां व्यासङ्गयौगपद्ये उपपद्येते इति पूर्वपक्षे सिद्धान्तसूत्रम् ।—प्रतिशरीरं मनोनानात्वे व्यासङ्गस्थलेऽपि यौगपद्यं स्यात्, अतो न मनोनानात्वमिति भावः ॥ ६० ॥

न युगपदनेकक्रियोपलब्धेः ॥ ६१ ॥

अयं खल्वध्यापकोऽधीते, व्रजति, कमण्डलुं धारयति, पन्थानं पश्यति, शृणोत्यरण्यजान् शब्दान्, बिभ्यत् व्याललिङ्गानि बुभुत्सते, स्मरति च गन्तव्यं स्थानीयमिति क्रमस्याग्रहणात् युगपदेताः क्रियाः, इति प्राप्तं मनसो बहुत्वमिति॥६१॥

अलातचक्रदर्शनवत्तदुपलब्धिराशुसञ्चारात् ॥ ६२ ॥

आशुसञ्चारादलातस्य सम्भ्रमतो विद्यमानः क्रमो न गृह्यते, क्रमस्याग्रहणादविच्छेदबुद्ध्या चक्रवद्बुद्धिर्भवतीति, तथा बुद्धीनां क्रियाणाञ्चाऽऽशुवृत्तित्वाद्विद्यमानः क्रमो न गृह्यते, क्रमस्याग्रहणात् युगपत् क्रिया भवन्तीत्यभिमानो भवति। किं पुनः क्रमस्याग्रहणात् युगपत् क्रियाऽभिमानः?—अथ युगपद्भावादेव युगपदनेकक्रियोपलब्धिरिति? नात्र विशेषप्रतिपत्तेः कारणमुच्यते इति। उक्तमिन्द्रियान्तराणां विषयान्तरेषु पर्य्यायेण बुद्धयो भवन्तीति, तच्चाप्रत्याख्येयमात्मप्रत्यक्षत्वात्। अथापि दृष्टश्रुतानर्थांश्चिन्तयतः क्रमेण बुद्धयो वर्त्तन्ते, न युगपत्, अनेनानुमातव्यमिति। वर्णपदवाक्यबुद्धीनां तदर्थबुद्धीनाञ्चाऽऽशुवृत्तित्वात् क्रमस्याग्रहणम्; कथम्?—वाक्यस्थेषु खलु वर्णेषूच्चरत्सु प्रतिवर्णं तावत् श्रवणं भवति, श्रुतं वर्णमेकमनेकं वा पदभावेन स प्रतिसन्धत्ते, प्रतिसन्धाय पदं व्यवस्यति, पदव्यवसायेन स्मृत्या पदार्थं प्रतिपद्यते, पदसमूहप्रतिसन्धानाच्च वाक्यं व्यवस्यति, सम्बद्धांश्च पदार्थान् गृहीत्वा वाक्यार्थं प्रतिपद्यते, न चाऽऽसौ क्रमेण वर्त्तमानानां बुद्धीनामाशुवृत्तित्वात्

---

दीर्घशष्कुलीभक्षणाऽऽदौ ज्ञानयौगपद्याभिमानात् स्यादित्याशङ्कते।—न एकं मनः, अनेकक्रियाणाम् अनेकज्ञानानाम्, उपलब्धेरित्यर्थः॥ ६१॥

समाधत्ते।—क्रमिकेऽपि तदुपलब्धिर्यौगपद्योपलब्धिः, आशुसञ्चारात् शीघ्रसञ्चाः

क्रमो गृह्यते, तदेतदनुमानमतत्त्वं बुद्धिक्रियायौगपद्याभिमानस्येति ; न चास्ति मुक्तसंशया युगपदुत्पत्तिर्बुद्धीनां, यया मनसां बहुत्वमेकशरीरेऽनुमीयत इति ॥ ६२ ॥

## यथोक्तहेतुत्वाच्चाणु ॥ ६३ ॥

अणु मन एकञ्चेति धर्मसमुच्चयो ज्ञानायौगपद्यात्, महत्त्वे मनसः सर्वेन्द्रियसंयोगात् युगपद्विषयग्रहणं स्यादिति ॥ ६३ ॥

मनसः खलु भोः! सेन्द्रियस्य शरीरे वृत्तिलाभः, नान्यत्र शरीरात् ; ज्ञातुश्च पुरुषस्य शरीराऽऽयतना बुद्ध्यादयः, विषयोपभोगो जिहासितहानमीप्सितावाप्तिश्च सर्वे च शरीराऽऽश्रया व्यवहाराः। तत्र खलु विप्रतिपत्तेः संशयः,—किमयं पुरुषकर्मनिमित्तः शरीरसर्गः ?—आहोस्वित् भूतमात्रादकर्मनिमित्तः ? इति। श्रूयते खल्वत्र विप्रतिपत्तिरिति। तत्रेदं तत्त्वम्,—

## पूर्वकृतफलानुबन्धात्तदुत्पत्तिः ॥ ६४ ॥

पूर्वशरीरे या प्रवृत्तिर्वाग्बुद्धिशरीराऽऽरम्भलक्षणा, तत् पूर्वकृतं कर्मोक्तं, तस्य फलं तज्जनितौ धर्माधर्मौ, तत्फलस्यानुबन्धः आत्मसमवेतस्यावस्थानं, तेन प्रयुक्तेभ्यो भूतेभ्यस्तस्योत्पत्तिः शरीरस्य, न स्वतन्त्रेभ्य इति। यदधिष्ठानोऽयमात्माऽयमहमिति मन्यमानो यत्राभियुक्तो यत्रोपभोगतृष्णया विषयानुपलभमानो धर्माधर्मौ संस्करोति, तदस्य

---

राऽऽत्मकदोषात्, यथा चलातचक्रे वेगातिशयेन भ्राम्यमाणे क्रियासन्तानस्य भेदनानुपलब्धिरिति ॥ ६२ ॥

ननु यौगपद्योपपादकतया मनसो वैभवं स्यादत्राऽऽह।—मन इति शेषः, यथोक्तस्य ज्ञानायौगपद्यस्य, हेतुत्वान्मनोऽणुत्वसाधकत्वादित्यर्थः ॥ ६३ ॥

समाप्तं मनःपरीक्षाप्रकरणम्।

अथ प्रसङ्गाच्छरीरस्य तत्तत्पुरुषादृष्टनिष्पाद्यताप्रकरणम्, अथवा एकत्रैव शरीरे मनसः सर्वैरात्मभिः सह संयोगात् सर्वत्रैव मनसा ज्ञानं जन्यताम्; अतस्तदृष्टानुन्यता·

शरीरं, तेन संस्कारेण धर्माधर्मलक्षणेन भूतसहितेन पतितेऽस्मिन् शरीरे उत्तरं निष्पाद्यते, निष्पन्नस्य चास्य पूर्वशरीरवत् पुरुषार्थक्रिया. पुरुषस्य च पूर्वशरीरवत् प्रवृत्तिरिति कर्मापेक्षेभ्यो भूतेभ्यः शरीरसर्गे सत्येतदुपपद्यत इति। दृष्टा च पुरुषगुणेन प्रयत्नेन प्रयुक्तेभ्यो भूतेभ्यः पुरुषार्थक्रियासमर्थानां द्रव्याणां रथप्रभृतीनामुत्पत्तिः; तथाऽनुमातव्यं,—शरीरमपि पुरुषार्थक्रियासमर्थमुत्पद्यमानं पुरुषस्य गुणान्तरापेक्षेभ्यो भूतेभ्य उत्पद्यते इति ॥ ६४ ॥

अत्र नास्तिक आह,—

**भूतेभ्यो मूर्त्त्युपादानवत् तदुपादानम् ॥ ६५ ॥**

यथा कर्मनिरपेक्षेभ्यो भूतेभ्यो निर्वृत्ता मूर्त्तयः सिकताशर्करापाषाणगैरिकाञ्जनप्रभृतयः पुरुषार्थकारित्वादुपादीयन्ते, तथा कर्मनिरपेक्षेभ्यो भूतेभ्यः शरीरमुत्पन्नं पुरुषार्थकारित्वादुपादीयत इति ॥ ६५ ॥

**न साध्यसमत्वात् ॥ ६६ ॥**

यथा शरीरोत्पत्तिरकर्मनिमित्ता साध्या, तथा सिकताशर्करापाषाणगैरिकाञ्जनप्रभृतीनामप्यकर्मनिमित्तः सर्गः साध्यः, साध्यसमत्वादसाधनमिति। भूतेभ्यो मूर्त्त्युपादानवत् तदिति चानेन साध्यम् ॥ ६६ ॥

---

प्रतिपादनप्रकरणम्। तत्र शरीरं तत्तत्पुरुषसमवेतादृष्टनिमित्तकं न वा? इति विप्रतिपत्तौ निषेधकोटिस्त्वेषा,—अदृष्टाभावात्, तस्य शरीरहेतुत्वाभावात्, अदृष्टस्य आत्मसमवायाभावाद्वा। तत्राऽऽद्यं पक्षं निरस्यति।—पूर्वकृतस्य यागदानहिंसाऽऽदेः, फलस्य धर्माधर्मरूपस्य, अनुबन्धात् सहकारिभावात्, तस्य शरीरस्य, उत्पत्तिः ॥ ६४ ॥

आक्षिपति।—भूतेभ्य इति सावधारणम्; तथा चादृष्टनिरपेक्षेभ्यो भूतेभ्यः परमाणुभ्यः, मूर्त्तेर्मृदादेः, उपादानमारम्भो यथा, तथैव तस्य शरीरस्य, उपादानमारम्भः, परमाणुभ्योऽदृष्टनिरपेक्षेभ्य इत्यर्थः ॥ ६५ ॥

समाधत्ते।—नोक्तं युक्तं, दृष्टान्तस्य साध्यसमत्वात् पक्षसमत्वात्, घटादेरप्यदृष्टसापेक्षपरमाणुभ्य एवोत्पत्तेरुपगमात्तदजन्यत्वस्य तत्रासिद्धेरिति भावः ॥ ६६ ॥

## नोत्पत्तिनिमित्तत्वान्मातापित्रोः ॥ ६७ ॥

विषमश्चायमुपन्यासः। कस्मात्?—निर्बीजा इमा मूर्त्तय उत्पद्यन्ते, बीजपूर्विका तु शरीरोत्पत्तिः। मातापितृशब्देन लोहितरेतसी बीजभूते गृह्येते; तत्र सत्त्वस्य गर्भवासानुभवनीयं कर्म पित्रोश्च पुत्रफलानुभवनीये कर्मणी मातुर्गर्भाऽऽशये शरीरोत्पत्तिं भूतेभ्यः प्रयोजयन्तीत्युपपन्नं बीजानुविधानमिति ॥ ६७ ॥

## तथाऽऽहारस्य ॥ ६८ ॥

उत्पत्तिनिमित्तत्वादिति प्रकृतम्। भुक्तं पीतमाहारः, तस्य पक्तिनिर्वृत्तं रसद्रव्यं मातृशरीरे चापचीयते, बीजे गर्भाऽऽशयस्थे बीजसमानपाकं मात्रया चोपचयः, बीजे यावद्व्यूहसमर्थः सञ्चय इति। सञ्चितं चार्बुदमांसपेशीकललकण्डराशिरः-पाणिपादादिना च व्यूहेनेन्द्रियाधिष्ठानभेदेन व्यूह्यते, व्यूहे च गर्भनाड्याऽवतारितं रसद्रव्यमुपचीयते यावत्प्रसवसमर्थमिति; न चायमन्नपानस्य स्थाल्यादिगतस्य कल्पत इति; एतस्मात् कारणात् कर्मनिमित्तत्वं शरीरस्य विज्ञायत इति ॥ ६८ ॥

## प्राप्तौ चानियमात् ॥ ६९ ॥

न सर्वो दम्पत्योः संयोगो गर्भाऽऽधानहेतुर्दृश्यते, तत्रासति कर्मणि न भवति, सति च भवतीत्यनुपपन्नो नियमाभाव इति।

---

न मदादिसाम्यमित्याह सूत्राभ्याम्।—शरीरे न मदादिसाम्यं, मातापित्रोः कर्मणः शरीरोत्पत्तिनिमित्तत्वात् पुत्रदर्शनाऽऽदिजन्यसुखानुभावकादृष्टस्य देवाऽऽराधनाऽऽदिजन्यस्य पुत्राऽऽदिनिमित्तत्वात्। एवं मातापित्रोराहारस्य शरीरोत्पत्तिनिमित्तत्वाददृष्टसहकारिणाऽऽहारस्य शुक्रशोणितादिद्वारा कललादिजनकत्वात्। आहारश्च पितामहपितृभोजनादेरदृष्टद्वारा पुत्रजनकत्वादित्यर्थ इत्यन्ये ॥ ६७ ॥ ६८ ॥

आहारस्यादृष्टसहकारित्वे विपक्षे बाधकमाह।—प्राप्तौ दम्पत्योः सम्प्रयोगे

कर्मनिरपेक्षेषु भूतेषु शरीरोत्पत्तिहेतुषु अनियमः स्यात्, न ह्यत्र कारणाभाव इति ॥ ६९ ॥

अथापि,—

**शरीरोत्पत्तिनिमित्तवत् संयोगोत्पत्तिनिमित्तं कर्म ॥ ७० ॥**

यथा खल्विदं शरीरं धातुप्राणसंवाहिनीनां नाडीनां शुक्रान्तानां धातूनाञ्च स्नायुत्वगस्थिशिरापेशीकललकण्डराणाञ्च शिरोबाहूदराणां सक्थ्नाञ्च कोष्ठगानां वातपित्तकफानाञ्च मुखकण्ठहृदयाऽऽमाऽऽशयपक्वाऽऽशयाधःस्रोतसाञ्च परमदुःखसम्पादनीयेन सन्निवेशेन व्यूहनमशक्यं पृथिव्यादिभिः कर्मनिरपेक्षैरुत्पादयितुमिति कर्मनिमित्ता शरीरोत्पत्तिरिति विज्ञायते; एवञ्च प्रत्यात्मनियतस्य निमित्तस्याभावान्निरतिशयैः आत्मभिः सम्बन्धात् सर्वाऽऽत्मनाञ्च समानैः पृथिव्यादिभिरुत्पादितं शरीरं पृथिव्यादिगतस्य च नियमहेतोरभावात् सर्वाऽऽत्मनां सुखदुःखसंवित्त्यायतनं समानं प्राप्तम्; यत्तु प्रत्यात्मं व्यवतिष्ठते, तत्र शरीरोत्पत्तिनिमित्तं कर्म व्यवस्थाहेतुरिति विज्ञायते। परिपच्यमानो हि प्रत्यात्मनियतः कर्माऽऽशयो यस्मिन्नात्मनि वर्त्तते, तस्यैवोपभोगाऽऽयतनं शरीरमुत्पाद्य व्यवस्थापयति। तदेवं शरीरोत्पत्तिनिमित्तवत् संयोगनिमित्तं कर्मेति विज्ञायते।

---

तु, गर्भधारणस्य यतो न नियमः, ततोऽदृष्टस्य सहकारित्वमावश्यकमिति भावः ॥ ६९ ॥

नन्वदृष्टनिरपेक्षैरेव भूतैः कैश्चित् स्वभावविशेषाच्छरीरं जन्यतां, स्वभावानभ्युपगमे च शरीरस्य सर्वाऽऽत्मसंयुक्तत्वात् साधारण्याऽऽपत्तिः, अत आह।—अयमर्थः,— शरीरस्य सर्वाऽऽत्मसंयुक्तत्वेऽपि संयोगविशेषोऽवच्छेदकतालक्षणो येनाऽऽत्मना सह, तदीयं तच्छरीरं संयोगविशेष एव; कुतः?—इत्यत आह, संयोगेति।—संयोगविशेषोत्पत्तौ कर्म अदृष्टविशेषः, निमित्तम्; यथा शरीरोत्पत्तावदृष्टविशेषो निमित्तमिति। संयोग-

प्रत्यात्मव्यवस्थानन्तु शरीरस्याऽऽत्मना संयोगं प्रचक्ष्महे इति ॥ ७० ॥

## एतेनानियमः प्रत्युक्तः ॥ ७१ ॥

योऽयमकर्म्मनिमित्ते शरीरसर्गे सत्यनियम इत्युच्यते, अयं शरीरोत्पत्तिनिमित्तवत् संयोगोत्पत्तिनिमित्तं कर्म्मेत्यनेन प्रत्युक्तः। कस्तावदयं नियमः ?—यथैकस्याऽऽत्मनः शरीरं, तथा सर्वेषामिति नियमः, अन्यस्यान्यथेत्यनियमो भेदो व्यावृत्तिर्विशेष इति। दृष्टा च जन्मव्यावृत्तिः, उच्चाभिजनो निकृष्टाभिजनः इति, प्रशस्तं निन्दितमिति, व्याधिबहुलमरोगमिति, समग्रं विकलमिति, पीड़ाबहुलं सुखबहुलमिति, पुरुषातिशयलक्षणोपपन्नं विपरीतमिति, प्रशस्तलक्षणं निन्दितलक्षणमिति, पट्विन्द्रियं मृद्विन्द्रियमिति। सूक्ष्मश्च भेदोऽपरिमेयः। सोऽयं जन्मभेदः प्रत्यात्मनियतात् कर्म्मभेदादुपपद्यते, असति कर्म्मभेदे प्रत्यात्मनियते निरतिशयित्वादात्मनां समानत्वाच्च पृथिव्यादीनां पृथिव्यादिगतस्य नियमहेतोरभावात् सर्वं सर्वाऽऽत्मनां प्रसज्यत, न त्विदमित्थम्भूतं जन्म, तस्मात् कर्म्मनिमित्ता शरीरोत्पत्तिरिति ॥ ७१ ॥

---

विशेषस्तदात्मज्ञानजननियामको जातिविशेष एव। संयोगः शरीरावयवसंस्थानविशेष इति कश्चित् ॥ ७० ॥

अथ शरीरं नादृष्टजन्यं, प्रकृतेरारम्भस्वभावत्वादेव तदुपपत्तेः ; प्रतिबन्धकपूर्वशरीरापगमस्त्वदृष्टाधीनः ; जलस्य निम्नानुसरणस्वभावस्येव बन्धापगमाधीनत्वम् इति द्वितीयपचं साङ्ख्यसम्मतं निरस्यति।—एतेन अदृष्टहेतुकत्वव्यवस्थापनेन, अनियमस्तु आत्मनः कदाचिन्मानुषशरीरसम्बन्धः, कदाचिदन्यादृशः ; किञ्चिच्च शरीरं सकलावयवं, किञ्चिच्च विकलावयवमित्यादि। अदृष्टहेतुत्वानभ्युपगमे त्वयमनियमः, न त्वभ्यते ; किन्त्वदृष्टनिरपेक्षप्रकृतिमात्राऽऽरम्भत्वे सर्वाऽऽत्मसाधारण्यं शरीरस्य स्यात् इति भावः। अन्ये तु अदृष्टमप्यनियतं स्यादित्यत्राऽऽह, एतेनेति।—तत्राप्यदृष्टान्तरमित्यनादित्वमेवेति भाव इत्याहुः ॥ ७१ ॥

**उपपन्नश्च तद्वियोगः कर्मक्षयोपपत्तेः ॥ ७२ ॥**

कर्मनिमित्ते शरीरसर्गे तेन शरीरेणाऽऽत्मनो वियोगः उपपन्नः। कस्मात्?—कर्मक्षयोपपत्तेः; उपपद्यते खलु कर्मक्षयः, सम्यग्दर्शनात्; प्रक्षीणे मोहे वीतरागः पुनर्भवहेतुकर्म्म कायवाङ्मनोभिर्न करोति, इत्युत्तरस्यानुपचयः, पूर्वोपचितस्य विपाकप्रतिसंवेदनात् प्रक्षयः। एवं प्रसवहेतोरभावात् पतितेऽस्मिन् शरीरे पुनः शरीरान्तरानुपपत्तेरप्रतिसन्धिः। अकर्मनिमित्ते तु शरीरसर्गे भूतक्षयानुपपत्तेस्तद्वियोगानुपपत्तिरिति ॥ ७२ ॥

**तददृष्टकारितमिति चेत् पुनस्तत्प्रसङ्गोऽपवर्गे॥७३॥**

अदर्शनं खलु अदृष्टमित्युच्यते, अदृष्टकारिता भूतेभ्यः शरीरोत्पत्तिः, न जात्वनुत्पन्ने शरीरे द्रष्टा निरायतनो दृश्यं पश्यति; तच्चास्य दृश्यं द्विविधं,—विषयश्च नानात्वञ्च; अव्यक्ताऽऽत्मनोस्तदर्थः शरीरसर्गः, तस्मिन्नवसिते चरितार्थानि भूतानि न शरीरमुत्पादयन्तीत्युपपन्नः शरीरवियोग इति; एवं चेन्मन्यसे, पुनस्तत्प्रसङ्गोऽपवर्गे, पुनः शरीरोत्पत्तिः प्रसज्यत इति। या चानुत्पन्ने शरीरे दर्शनानुत्पत्तिरदर्शनाभिमता, या चापवर्गे शरीरनिवृत्तौ दर्शनानुत्पत्तिरदर्शनभूता, नैतयोरदर्शनयोः कश्चिद्विशेष इत्यदर्शनस्यानिवृत्तेरपवर्गे पुनः शरीरोत्पत्तिप्रसङ्ग इति ॥ ७३ ॥

आर्हतास्तु मनःपरमाणुगुणमदृष्टं मन्यन्ते; तथा हि, पार्थिवाः परमाणवः सहिताः स्वादृष्टवशाच्छरीरमारभन्ते, मनश्च स्वादृष्टप्रयुक्तं शरीरमाविशति, तच्चादृष्टं स्वभावादेव पुरुषस्य सुखदुःखे साधयतीति; तत्रोत्तरमाह।—तत्तदात्माऽदृष्टोपग्रहं विनैव तत्तदात्मोपभोगाय परमाणवश्चेच्छरीरमारभन्ते, मुक्तेऽपि तदात्मनि तद्भोगाय शरीरमारभेरन्। अपवर्ग इत्युपलक्षणं, संसारिणामपि नर-करि तुरगाऽऽदिशरीरोपग्रहे विनिगमकं न स्यादिति भावः॥ ७३॥

चरितार्थाविशेष इति चेत्,—

## न करणाकरणयोरारम्भदर्शनात् ॥ ७४ ॥

चरितार्थानि भूतानि दर्शनावसानान्न शरीरान्तरमारभन्ते इत्ययं विशेषः ; एवं चेदुच्यते, करणाकरणयोरारम्भदर्शनात् चरितार्थानां भूतानां विषयोपलब्धिकरणात् पुनः पुनः शरीराऽऽरम्भो दृश्यते, प्रकृतिपुरुषयोर्नानात्वदर्शनस्याकरणा-न्निरर्थकः शरीराऽऽरम्भः पुनः पुनर्दृश्यते ; तस्मादकर्मनिमित्तायां भूतसृष्टौ न दर्शनार्था शरीरोत्पत्तिर्युक्ता ; युक्ता तु कर्मनिमित्ते सर्गे दर्शनार्था शरीरोत्पत्तिः । कर्मविपाकसंवेदनं दर्शनमिति तददृष्टकारितमिति चेत्, कस्यचिद्दर्शनम्,—"अदृष्टं नाम परमाणूनां गुणविशेषः क्रियाहेतुः, तेन प्रेरिताः परमाणवः सम्मूर्च्छिताः शरीरमुत्पादयन्तीति, तन्मनः समाविशति, स्वगु-णेनादृष्टेन प्रेरिते समनस्के शरीरे द्रष्टुरुपलब्धिर्भवतीति" एतस्मिन् वै दर्शने गुणानुच्छेदात् पुनस्तत्प्रसङ्गोऽपवर्गे, अपवर्गे शरीरोत्पत्तिः परमाणुगुणस्यादृष्टस्यानुच्छेद्यत्वा-दिति ॥ ७४ ॥

## मनःकर्मनिमित्तत्वाच्च संयोगानुच्छेदः ॥ ७५ ॥

मनोगुणेनादृष्टेन समावेशिते मनसि संयोगव्युच्छेदो न स्यात्, तत्र किंकृतं शरीरादपसर्पणं मनस इति ?—कर्माऽऽशय-क्षये तु कर्माऽऽशयान्तराद्विपच्यमानादपसर्पणोपपत्तिरिति । अदृष्टादेवापसर्पणमिति चेत्,—योऽदृष्टः शरीरोपसर्पणहेतुः, स एवापसर्पणहेतुरपीति न ; एकस्य जीवनप्रायणहेतुत्वानुपपत्तेः ;

---

अदृष्टस्य मनोगुणत्वमपि दूषयति ।—संयोगस्य शरीराऽऽरम्भकस्य प्राणाऽऽदि-मत्त्वस्य च, उच्छेदो न स्यात् । कुतः ?—मनसो यत् कर्म अदृष्टं, तन्निमित्तत्वात्,

एवञ्च सति एकमदृष्टं जीवनप्रायणयोर्हेतुरिति प्राप्तम्; नैतदुपपद्यते ॥ ७५ ॥

### नित्यत्वप्रसङ्गश्च प्रायणानुपपत्तेः ॥ ७६ ॥

विपाकसंवेदनात् कर्म्माऽऽशयक्षये शरीरपातः प्रायणम्; कर्माऽऽशयान्तराच्च पुनर्जन्म। भूतमात्रात्तु कर्मनिरपेक्षात् शरीरोत्पत्तौ कस्य क्षयात् शरीरपातः प्रायणम्? इति प्रायणानुपपत्तेः खलु वै नित्यत्वप्रसङ्गं विद्मः, याटच्छिके तु प्रायणे प्रायणभेदानुपपत्तिरिति ॥ ७६ ॥

"पुनस्तत्प्रसङ्गोऽपवर्गे" इत्येतत् समाधित्सुराह,—

### अणुश्यामतानित्यत्ववदेतत् स्यात् ॥ ७७ ॥

यथाऽणोः श्यामता नित्या अग्निसंयोगेन प्रतिबद्धा न पुनरुत्पद्यते, एवमदृष्टकारितं शरीरमपवर्गे पुनर्नोत्पद्यत इति ॥ ७७ ॥

### नाकृताभ्यागमप्रसङ्गात् ॥ ७८ ॥

नायमस्ति दृष्टान्तः। कस्मात्?—अकृताभ्यागमप्रसङ्गात्। अकृतं प्रमाणतोऽनुपपन्नं, तस्याभ्यागमोऽभ्युपपत्तिर्व्यवसायः, एतच्छ्रद्दधानेन प्रमाणतोऽनुपपन्नं मन्तव्यम्; तस्मान्नायं दृष्टान्तः,

---

तस्य नित्यत्वात् तादृशसंयोगधारा नोच्छिद्येत, तस्यानित्यत्वेऽपि व्यधिकरणभोगस्य तन्नाशकत्वेऽतिप्रसङ्ग इति भावः ॥ ७५ ॥

संयोगानुच्छेदे का क्षतिः? अत आह।—तथा सति प्रायणस्य मरणस्य, अनुपपत्तेः शरीराऽऽदेर्नित्यत्वस्याविनाशित्वस्य च प्रसङ्गः ॥ ७६ ॥

आक्षिपति।—यथा परमाणोः श्यामता नित्याऽपि निवर्त्तते, तथा शरीराऽऽदिकमपि निवर्त्तते, तथैव परमाणुनिष्ठं नित्यमप्यदृष्टं निवर्त्तते, तदभावाच्च नापवर्गे शरीरमिति ॥ ७७ ॥

सिद्धान्तसूत्रम्।—अकृतस्य प्रमाणाविषयस्य, अभ्यागमः स्वीकारः, तत्प्रसङ्गात्

न प्रत्यक्षं, न चानुमानं किञ्चिदुच्यत इति। तदिदं दृष्टान्तस्य साध्यसमत्वमभिधीयत इति। अथवा नाकृताभ्यागमप्रसङ्गात् अणुश्यामतादृष्टान्तेनाकर्मनिमित्तां शरीरोत्पत्तिं समादधानस्याकृताभ्यागमप्रसङ्गः, अकृते सुखदुःखहेतौ कर्मणि पुरुषस्य सुखं दुःखमभ्यागच्छतीति प्रसज्येत; ओमिति ब्रुवतः प्रत्यक्षानुमानाऽऽगमविरोधः। प्रत्यक्षविरोधस्तावत्,—भिन्नमिदं सुखदुःखं प्रत्यात्मवेदनीयत्वात् प्रत्यक्षं सर्वशरीरिणाम्। को भेदः?—तीव्रं मन्दञ्चिरमाशु नानाप्रकारमेकप्रकारमिति एवमादिर्विशेषः; न चास्ति प्रत्यात्मनियतः सुखदुःखहेतुविशेषः, न चासति हेतुविशेषे फलविशेषो दृश्यते, कर्मनिमित्ते तु सुखदुःखयोगे कर्मणां तीव्रमन्दतोपपत्तेः कर्मसञ्चयानाञ्चोत्कर्षापकर्षभावान्नानाविधैकविधभावाच्च कर्मणां सुखदुःखभेदोपपत्तिः। सोऽयं हेतुभेदाभावात् दृष्टः सुखदुःखभेदो न स्यादिति प्रत्यक्षविरोधः। तथाऽनुमानविरोधः,—दृष्टं हि पुरुषगुणव्यवस्थानात् सुखदुःखव्यवस्थानम्; यः खलु चेतनावान् साधननिर्वर्त्तनीयं सुखं बुद्ध्वा तदीप्सन् तदाप्तिसाधनावाप्तये प्रयतते, स सुखेन युज्यते, न विपरीतः; यश्च साधननिर्वर्त्तनीयं दुःखं बुद्ध्वा तज्जिहासुः साधनपरिवर्जनाय यतते, स दुःखेन परित्यज्यते, न विपरीतः; अस्ति चेदं यत्नमन्तरेण चेतनानां सुखदुःखव्यवस्थानं, तेनापि चेतनगुणान्तरव्यवस्थानकृतेन भवितव्यमित्यनुमानम्। तदेतदकर्मनिमित्ते सुखदुःखयोगे विरुध्यत इति, तच्च गुणान्तरमसंवेद्यत्वाददृष्टं, विपाककालानियमाच्चा-

---

इत्यर्थः; न हि परमाणुनिष्ठादृष्टस्य कारणस्य सत्त्वे शरीरोच्छेदः स्यात्, एवमणुश्यामतानित्यत्वस्यापि प्रमाणागोचरस्य स्वीकारः स्यात्, तथा च दृष्टान्तासिद्धिः, न चाऽनादेर्भावस्य नाशः सम्भवति, नान्यभावत्वेन तद्वैतुल्यात्; यद्वा,—नित्यादृष्टाच्छरीरसम्बन्धी·

व्यवस्थितम् ; बुद्ध्यादयस्तु संवेद्याश्चापवर्गिणश्चेति । अथाऽऽगमविरोधः,—बहु खल्विदमार्षमृषीणामुपदेशजातमनुष्ठानपरिवर्जनाऽऽश्रयमुपदेशफलञ्च, शरीरिणां वर्णाऽऽश्रमविभागेनानुष्ठानलक्षणा प्रवृत्तिः, परिवर्जनलक्षणा निवृत्तिः, तच्चोभयमेतस्यां दृष्टौ नास्ति कर्म सुचरितं दुश्चरितं वा, कर्मनिमित्तः पुरुषाणां सुखदुःखयोग इति विरुध्यते, सेयं पापिष्ठानां मिथ्यादृष्टिरकर्मनिमित्ता शरीरसृष्टिः अकर्मनिमित्तः सुखदुःखयोग इति ॥ ७८ ॥

इति वात्स्यायनीये न्यायभाष्ये तृतीयाध्यायस्य
द्वितीयमाह्निकम् ।
समाप्तश्चायं तृतीयोऽध्यायः ॥ ३ ॥

---

पगमे अकृतात् स्वयमजनितात् कर्मणः, अभ्यागमः फलसम्बन्धः स्यात्, तथा च सर्वाकृतत्वाविशेषात् किं शरीरं कस्य भविष्यतीत्यत्र नियामकाभाव इति भावः ॥ ७८ ॥

समाप्तं शरीरस्यादृष्टनिष्पाद्यताप्रकरणम् ।

समाप्तञ्च तृतीयाध्यायस्य द्वितीयमाह्निकम् ॥ २ ॥

इति श्रीविश्वनाथभट्टाचार्य्यकृतायां न्यायसूत्रवृत्तौ तृतीयाध्यायवृत्तिः ।

# चतुर्थाध्यायस्य प्रथमाह्निकम्।

मनसोऽनन्तरं प्रवृत्तिः परीक्षितव्या ; तत्र खलु यावद्धर्माधर्माऽऽश्रयशरीराऽऽदि परीक्षितं, सर्वा सा प्रवृत्तेः परीक्षा इत्याह,—

**प्रवृत्तिर्यथोक्ता ॥ १ ॥**

तथा परीक्षितेति ॥ १ ॥

---

सूरकोटिविजयिप्रभाभरं योगिमानसचरं परं महः।
श्यामलं किमपि धाम कामदं कामकोटि-कमनीयमाश्रये ॥

तृतीये तावदात्माऽऽदिप्रमेयषट्कं कारणरूपं परीक्षितम्, अथ कार्य्यरूपं प्रवृत्त्यादिप्रमेयषट्कमवसरतो हेतुहेतुमद्भावेन च परीक्षणीयम् ; यद्यपि प्रथमाऽऽह्निके षट्कं परीक्षणीयं, द्वितीयाऽऽह्निके तु तत्त्वज्ञानं, तथाऽपि तस्यापवर्गहेतुत्वादुपोद्घातेन च परीक्षणीयत्वादपवर्गपरीक्षाऽन्तःपातितया षट्कपरीक्षैवाध्यायार्थः, तत्र चोद्दिष्टधर्मवत्तया षट्कपरीक्षा प्रथमाऽऽह्निकार्थः। तत्र प्रथमाऽऽह्निके चतुर्दश प्रकरणानि। तत्र चोक्तरूपवत्तया प्रवृत्तिदोषयोः परीक्षा प्रथमप्रकरणार्थः। न चार्थभेदात् प्रकरणभेदः। यथा-तथेति परस्परसाकाङ्क्षाभ्यामवयवाभ्यामुक्तरूपवत्त्वलक्षणैकार्थवत्त्वकथनात् प्रवृत्तिपरीक्षायामाकाङ्क्षितायां सूत्रम्।—अत्र तथैवेति शेषं पूरयन्ति, तदयुक्तम् ; तथा सत्यत्रैव यथाशब्दस्याऽऽकाङ्क्षाशान्तावग्रिमसूत्रस्य तथाशब्देऽपि यथाशब्दान्तरस्य पूरणीयतया प्रकरणभेदाऽऽपत्तेः ; तस्मादग्रिमसूत्रस्थतथाशब्देनान्वयो युक्तः ; प्रवृत्तिर्यथा उक्तलक्षणवती, तथा दोषा अप्युक्तलक्षणवन्तः, इत्यग्रिमसूत्रसंवलितोऽर्थः। "प्रवृत्तिर्वाग्बुद्धिशरीराऽऽरम्भः" इत्युक्तलक्षणसत्त्वात् सिद्धं लक्षणमिति भावः। प्रवृत्तिस्तु द्वयी,—कारणरूपा, कार्य्यरूपा च ; द्वे अप्यात्मसमवेते ; तत्राऽऽद्या,—जन्यत्वेनाविशिष्टा विशिष्टा च यत्नत्वजातिमती मानसप्रत्यक्षसिद्धा ; द्वितीया तु,—धर्माधर्मरूपा यागादेरगम्यागमनादेश्च चिरध्वस्तस्य व्यापारतया कर्मनाशाजलस्पर्शाऽऽदेः प्रायश्चित्तादेश्च नाश्यतया सिध्यतीति ॥ १ ॥

प्रवृत्त्यनन्तरास्तर्हि दोषाः परीक्ष्यन्तामित्यत आह,—

**तथा दोषाः ॥ २ ॥**

परीक्षिता इति । बुद्धिसमानाऽऽश्रयत्वादात्मगुणाः प्रवृत्तिहेतुत्वात् पुनर्भवप्रतिसन्धानसामर्थ्याच्च संसारहेतवः, संसारस्यानादित्वादनादिना प्रबन्धेन प्रवर्त्तन्ते, "मिथ्याज्ञाननिवृत्तिस्तत्त्वज्ञानात्, तन्निवृत्तौ रागद्वेषप्रबन्धोच्छेदेऽपवर्गः" इति प्रादुर्भावनिरोधधर्मका इत्येवमाद्युक्तं दोषाणामिति ॥ २ ॥

"प्रवर्त्तनालक्षणा दोषाः" इत्युक्तम् ; तथा चेमे मानेर्ष्याऽसूयाविचिकित्सामत्सरादयः, ते कस्मान्नोपसङ्ख्यायन्ते ?—इत्यत आह,—

**तत्त्रैराश्यं रागद्वेषमोहार्थान्तरभावात् ॥ ३ ॥**

तेषां दोषाणां त्रयो राशयस्त्रयः पक्षाः । रागपक्षः,—कामो मत्सरः स्पृहा तृष्णा लोभ इति । द्वेषपक्षः,—क्रोधः ईर्ष्याऽसूया

---

दोषपरीक्षायां प्रमाणमाह ।—तथा दोषा अपि प्रवर्त्तनालक्षणा इत्युक्तलक्षणवन्त एवेति नासिद्धिरिति भावः ॥ २ ॥

समाप्तं प्रवृत्तिदोषसामान्यपरीक्षाप्रकरणम् ।

अथ त्रैराश्येन विशेषेण दोषपरीक्षणाय तत् त्रैराश्यप्रकरणम् ; तत्र सिद्धान्तसूत्रम् ।—तेषां दोषाणां, त्रयी राशयः त्रयः पक्षाः, न तु रागद्वेषमोहानामेकैकत्वं, तेषामर्थान्तरभावात् अवान्तरभेदवत्त्वात् ; तथा च, भयशोकमानाऽऽदीनामेष्वेषान्तर्भावान्न विभागन्यूनत्वम्, इच्छात्वद्वेषत्वमिथ्याज्ञानत्वरूपविरुद्धधर्मवत्त्वान्न विभागाऽऽधिक्यम्, इच्छात्वाऽऽदिकन्तु रागादावनुभवसिद्धम् । तत्र रागपक्षः,—कामो मत्सरः स्पृहा तृष्णा लोभो माया दम्भ इति । कामः,—रिरंसा, रतिश्च विजातीयः संयोगः नारीगताभिलाष इति तु न युक्तं, स्त्रियाः कामेऽव्याप्तेः । मत्सरः,—स्वप्रयोजनप्रतिसन्धानं विना पराभिमतनिवारणेच्छा, यथा राजकीयादुदपानान्नीदकं पेयम् इत्यादि ; एवं परगुणनिवारणेच्छाऽपि । स्पृहा—धर्माविरोधेन प्राप्तीच्छा । तृष्णा—इदं मे न क्षीयतामितीच्छा, उचितव्ययाकरणेनापि धनरक्षणेच्छारूपं कार्पण्यमपि तृष्णाभेद एव । धर्मविरोधेन परद्रव्येच्छा लोभः । परवञ्चनेच्छा माया । कपटेन धार्मिकत्वादिना

द्रोहोऽमर्ष इति। मोहपक्षः,—मिथ्याज्ञानं विचिकित्सा मानः प्रमाद इति त्रैराश्यान्नोपसङ्ख्यायन्त इति। लक्षणस्य तर्ह्यभेदात् त्रित्वमनुपपन्नम्। नानुपपन्नं, रागद्वेषमोहार्थान्तरभावात्। आसक्तिलक्षणो रागः, अमर्षलक्षणो द्वेषः, मिथ्याप्रतिपत्तिलक्षणो मोह इति। एतत् प्रत्यात्मवेदनीयं सर्वशरीरिणाम्; विजानात्ययं शरीरी रागमुत्पन्नम्, अस्ति मेऽध्यात्मं रागधर्म इति; विरागश्च विजानाति, नास्ति मेऽध्यात्मं रागधर्म इति। एवमितरयोरपीति। मानेर्ष्याऽसूयाप्रभृतयस्तु त्रैराश्यमनुपतिता इति नोपसङ्ख्यायन्ते ॥ ३ ॥

## नैकप्रत्यनीकभावात् ॥ ४ ॥

नार्थान्तरं रागादयः। कस्मात्?—एकप्रत्यनीकभावात्। तत्त्वज्ञानं सम्यङ्मतिरार्य्यप्रज्ञा सम्बोध इत्येकमिदं प्रत्यनीकं त्रयाणामिति ॥ ४ ॥

---

स्वोत्कर्षख्यापनेच्छा दम्भः। द्वेषपक्षः,—क्रोध ईर्ष्याऽसूया द्रोहोऽमर्षोऽभिमान इति। क्रोधः,—नेत्रलौहित्याऽऽदिहेतुर्द्वेषविशेषः। ईर्ष्या—साधारणे वस्तुनि परस्वत्वात्तद्ग्रहीतरि द्वेषः, यथा दुरन्तदायादानाम्। असूया—परगुणाऽऽदौ द्वेषः। द्रोहः,—नाशाय द्वेषः। हिंसा तु द्रोहकार्या, परे तु तं द्रोहं मन्यन्ते। अमर्षः,—कृतापराधे असमर्थस्य द्वेषः। अभिमानः,—अपकारिण्यकिञ्चित्करस्याऽऽत्मनि द्वेषः। मोहपक्षः,—विपर्य्ययसंशयतर्कमानप्रमादभयशोकाः। विपर्य्ययः,—मिथ्याज्ञानापरपर्य्यायोऽयथार्थनिश्चयः। एकधर्मिकविरुद्धभावाभावज्ञानं संशयः, स एव विचिकित्सेत्युच्यते। व्याप्याऽऽरोपाद्व्यापकप्रसञ्जनं तर्कः। आत्मन्यविद्यमानगुणाऽऽरोपेणोत्कर्षधीर्मानः; गुणवति निर्गुणत्वधीरूपकयोऽपि मानेऽन्तर्भवति। प्रमादः,—पूर्वं कर्त्तव्यतया निश्चितेऽप्यकर्त्तव्यताधीः, एवं वैपरीत्येऽपि। भयम्—अनिष्टहेतूपनिपाते तत्परित्यागानर्हताज्ञानम्। शोकः,—इष्टवियोगे तल्लाभानर्हताज्ञानम् ॥ ३ ॥

प्रकृते।—रागाऽऽदीनां भेदो न, एकप्रत्यनीकभावात् एकस्मिन् प्रत्यनीकभावो विरोधित्वं यस्य तत् तथा, तेनैकनाश्यत्वादित्यर्थः; एकं हि तत्त्वज्ञानमेषां विरोधि ॥४॥

व्यभिचारादहेतुः ॥ ५ ॥

एकप्रत्यनीकाः पृथिव्यां श्यामाऽऽदयोऽग्निसंयोगेनैकेन, एकयोनयश्च पाकजा इति ॥ ५ ॥

सति चार्थान्तरभावे,—

तेषां मोहः पापीयान्नामूढस्येतरोत्पत्तेः ॥ ६ ॥

मोहः पापः पापतरो वा द्वावभिप्रेत्योक्तम् ; कस्मात् ?—नामूढस्येतरोत्पत्तेः । अमूढस्य रागद्वेषौ नोत्पद्येते, मूढस्य तु यथासङ्कल्पमुत्पत्तिः, विषयेषु रञ्जनीयाः सङ्कल्पाः रागहेतवः, कोपनीयाः सङ्कल्पा द्वेषहेतवः, उभये च सङ्कल्पा न मिथ्याप्रतिपत्तिलक्षणत्वान्मोहादन्ये ; ताविमौ मोहयोनी रागद्वेषाविति । तत्त्वज्ञानाच्च मोहनिवृत्तौ रागद्वेषानुत्पत्तिरित्येकप्रत्यनीकभावोपपत्तिः । एवञ्च कृत्वा तत्त्वज्ञानात् दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति व्याख्यातमिति ॥ ६ ॥

---

समाधत्ते ।—एकविरोधित्वं भेदनिषेधे न हेतुः, व्यभिचारात् एकाग्निसंयोगनाश्यत्वेऽपि रूपाऽऽदीनां भेदात् ॥ ५ ॥

किञ्च, नैतेषामेकनिवर्त्त्यत्वं, तत्त्वज्ञानस्य मोहनिवर्त्तकत्वात्, तन्निवृत्त्या रागाऽऽदिनिवृत्तेरित्याशयेनाऽऽह ।—यद्यपि बहूनां निर्द्धारणे इष्ठन्-तमपोर्विधानात् पापिष्ठः पापतम इति वा युक्तं, तथाऽपि द्वौ द्वावधिकृत्य निर्द्धारणं, द्वयोर्निर्द्धारणे ईयसुनो विधानात् ; तेन रागमोहयोर्द्वेषमोहयोर्वा मोहः पापीयाननर्थमूलं, बलवद्द्वेष्य इति यावत् । हेतुमाह, नामूढस्येति ।—मोहशून्यस्य रागद्वेषयोरभावादित्यर्थः । न च तत्त्वज्ञानिनोऽपि हिताहितगोचरप्रवृत्तिनिवृत्तौ रागद्वेषाधीने इति तत्र व्यभिचार इति वाच्यं, धर्माधर्मप्रयोजकरागद्वेषयोर्दोषत्वेन विवक्षितत्वात् । एतदभिप्रायकमेवासक्तोऽद्विषंश्च मुक्त इत्यादिकमपीति भावः ॥ ६ ॥

प्राप्तस्तर्हि निमित्तनैमित्तिकभावादर्थान्तरभावो दोषेभ्यः ॥ ७ ॥

अन्यद्धि निमित्तम्, अन्यच्च नैमित्तिकमिति दोषनिमित्तत्वान्न दोषो मोह इति ॥ ७ ॥

न दोषलक्षणावरोधात् (सत्त्वात्) मोहस्य ॥ ८ ॥

"प्रवर्त्तनालक्षणा दोषाः" इत्यनेन दोषलक्षणेनावरुध्यते दोषेषु मोह इति ॥ ८ ॥

निमित्तनैमित्तिकोपपत्तेश्च तुल्यजातीयानामप्रतिषेधः ॥ ९ ॥

द्रव्याणां गुणानां वाऽनेकविधविकल्पो निमित्तनैमित्तिकभावे तुल्यजातीयानां दृष्ट इति ॥ ९ ॥

---

प्रङ्कते।—दोषनिमित्तत्वान्मोहस्य दोषभिन्नत्वं स्यात्, अभेदेन कार्य्यकारणभावाभावात्। दोषेभ्य इत्यान्तर्गणिकभेदाद्बहुवचनम्। प्राप्तस्तर्हीत्यंशस्तु न सूत्रं, किन्तु भाष्यकृतः पूरणमित्यपि वदन्ति ॥ ७ ॥

निराकरोति।—मोहस्य दोषलक्षणसत्त्वाद्दोषत्वम्; व्यक्तिभेदाच्च हेतुहेतुमद्भावो न विरुध्यत इति भावः ॥ ८ ॥

अप्रयोजकत्वमुक्त्वाऽनैकान्तिकत्वमप्याह।—एकजातीययोरपि द्रव्ययोर्गुणयोश्च निमित्तनैमित्तिकोपपत्तेः हेतुहेतुमद्भावस्वीकारात्, तुल्यजातीयत्वप्रतिषेधो न युक्त इति ॥ ९ ॥

समाप्तं दोषपरीक्षाप्रकरणम्।

दोषानन्तरं प्रेत्यभावः, तस्यासिद्धिः, आत्मनो नित्यत्वात् ; न खलु नित्यं किञ्चिज्जायते, म्रियते वा, इति जन्ममरणयो-र्नित्यत्वादात्मनोऽनुपपत्तिः, उभयञ्च प्रेत्यभाव इति। तत्रायं सिद्धानुवादः,—

**आत्मनित्यत्वे प्रेत्यभावसिद्धिः ॥ १० ॥**

नित्योऽयमात्मा प्रैति, पूर्वशरीरं जहाति, म्रियते इति, प्रेत्य च पूर्वशरीरं हित्वा भवति, जायते, शरीरान्तरमुपादत्ते इति ; तच्चैतदुभयं "पुनरुत्पत्तिः प्रेत्यभावः" इत्यत्रोक्तम् ; पूर्वशरीरं हित्वा शरीरान्तरोपादानं प्रेत्यभाव इति, तच्चैतन्नित्यत्वे सम्भवतीति। यस्य तु सत्त्वोत्पादः सत्त्वनिरोधः प्रेत्यभावः, तस्य कृतहानमकृताभ्यागमश्च दोषः, उच्छेदहेतुवादे ऋष्युपदेशा-श्चानर्थका इति ॥ १० ॥

कथमुत्पत्तिरिति चेत्,—

**व्यक्ताद्व्यक्तानां प्रत्यक्षप्रामाण्यात् ॥ ११ ॥**

केन प्रकारेण किंधर्मकात् कारणाद्व्यक्तं शरीराद्युत्पद्यते ? इति। व्यक्तात् भूतसमाख्यातात् पृथिव्यादितः परमसूक्ष्मान्नि-

---

क्रमप्राप्ततया प्रेत्यभावे परीक्षणीये प्रेत्यभावः शरीरस्य बुद्धेरात्मनो वा ? इति संशये "पुनरुत्पत्तिः प्रेत्यभावः" इति लक्षणसूत्राद्विनष्टस्योत्पादः प्रतीयते, न चासौ नित्यस्या-ऽऽत्मनः सम्भवतीति शरीरादेः स्यात्। न च मृतस्य शरीरादेरुत्पत्तिविरोधान्नेदं युक्तमिति वाच्यम् ; प्रेत्यभाव इत्यस्य "मुखं व्यादाय स्वपिति" इतिवत् व्यत्ययेन भूत्वा प्रायण-मित्यर्थादेव सिद्धान्तसूत्रम्।—आत्मनः पूर्वोक्तयुक्त्या नित्यत्वे प्रेत्यभावस्तस्य सिध्यति, एकजातीयशरीराऽऽद्यसम्बन्ध-चरमसम्बन्धनाशयोरुत्पादप्रायणयोरात्मनः सम्भवात्। सम्बन्धस्त्ववच्छेद्यावच्छेदकभावलक्षणः, स च स्वरूपसम्बन्धविशेषोऽतिरिक्तो वेत्यन्यदेतत्। लक्षणसूत्रे "पुनरुत्पत्तिः" इत्यत्र पुनःपदञ्च प्रेत्यभावप्रवाहस्यानादित्वज्ञापनाय, तज्ज्ञानञ्च वैराग्य उपयुज्यत इति ॥ १० ॥

ननु प्रेत्यभाव उत्पत्तिनिरूप्यः, सा च न सजातीयाद्विजातीयाद्वा सम्भवति,

व्यादव्यक्तं शरीरेन्द्रियविषयोपकरणाऽऽधारं प्रज्ञातं द्रव्यमुत्पद्यते। व्यक्तञ्च खल्विन्द्रियग्राह्यं, तत्सामान्यात् कारणमपि व्यक्तम्। किं सामान्यम्?—रूपाऽऽदिगुणयोगः। रूपाऽऽदिगुणयुक्तेभ्यः पृथिव्यादिभ्यो नित्येभ्यो रूपाऽऽदिगुणयुक्तं शरीराद्युत्पद्यते, प्रत्यक्षप्रामाण्यात्; दृष्टो हि रूपाऽऽदिगुणयुक्तेभ्यो मृत्प्रभृतिभ्यस्तथाभूतस्य द्रव्यस्योत्पादः, तेन चादृष्टस्यानुमानमिति, रूपाऽऽदीनामन्वयदर्शनात् प्रकृतिविकारयोः पृथिव्यादीनामतीन्द्रियाणां कारणभावोऽनुमीयते इति ॥ ११ ॥

न घटाद्घटानिष्पत्तेः ॥ १२ ॥

इदमपि प्रत्यक्षम्;—न खलु व्यक्ताद्घटाद्व्यक्तो घट उत्पद्यमानो दृश्यत इति व्यक्ताद्व्यक्तस्यानुत्पत्तिदर्शनान्न व्यक्तं कारणमिति ॥ १२ ॥

व्यक्ताद्घटनिष्पत्तेरप्रतिषेधः ॥ १३ ॥

न ब्रूमः सर्वं सर्वस्य कारणमिति, किन्तु यदुत्पद्यते व्यक्तं द्रव्यं, तत् तथाभूतादेवोत्पद्यत इति। व्यक्तञ्च तन्मृद्द्रव्यं

---

व्याद्यपृथिव्यादौ व्यभिचारात्, तन्नित्यत्वे मानाभावात्, अतः प्रत्यक्षावोऽसिद्धः, इत्युपीद्घातात् प्रसक्तादोत्पत्तिप्रकारं दर्शयति।—व्यक्तानाम्,उत्पत्तिरिति शेषः। व्यक्ताद्व्यक्तजातीयात् पृथिव्यादितः, व्यक्तानां व्यक्तजातीयानां जन्यपृथिव्यादीनाम्, उत्पत्तिः। इत्थञ्च पृथिव्यादेः पृथिव्यादितो रूपवदादितश्च रूपवदादीनामुत्पत्तेः प्रत्यक्षसिद्धत्वात्परमाणुरपि कल्प्यते, त्रसरेणोरपकृष्टमहत्त्वेन सावयवावयवत्वसिद्धेः (क) तदवयवावयवस्याघवान्नित्यत्वमिति भावः ॥ ११ ॥

अवुद्धा शङ्कते।—विशेषकार्य्यकारणभावाभावे सामान्यतोऽपि न तथेति भावः ॥ १२ ॥

विशेषतो व्यभिचारो न विरोधी, सामान्यतस्तु नास्त्येवेत्याशयवान् समाधत्ते।—

---

(क) अत्र बहुव्रीहिः।

कपालसंज्ञकं, यतो घट उत्पद्यते ; न चैतन्निह्नुवानः क्वचि-द्व्यनुज्ञां लब्धुमर्हतीति, तदेतत् तत्त्वम् ॥ १३ ॥

अतःपरं प्रावादुकानां दृष्टयः प्रदर्श्यन्ते,—

**अभावाद्भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात् ॥ १४ ॥**

असतः सदुत्पद्यत इत्ययं पक्षः । कस्मात् ?—उपमृद्य बीजमङ्कुर उत्पद्यते, नानुपमृद्य, न चेद्बीजोपमर्दः, अङ्कुरोत्पत्तिर्न स्यादिति ॥ १४ ॥

अत्राभिधीयते,—

**व्याघातादप्रयोगः ॥ १५ ॥**

उपमृद्य प्रादुर्भावादित्ययुक्तः प्रयोगः, व्याघातात् ; यदुप-मृद्नाति, न तदुपमृद्य प्रादुर्भवितुमर्हति, विद्यमानत्वात् ; यच्च प्रादुर्भवति, न तेनाप्रादुर्भूतेनाविद्यमानेनोपमर्द इति ॥ १५ ॥

**नातीतानागतयोः कारकशब्दप्रयोगात् ॥ १६ ॥**

अतीते चानागते चाविद्यमाने कारकशब्दाः प्रयुज्यन्ते ; पुत्रो जनिष्यते, जनिष्यमाणं पुत्रमभिनन्दति, पुत्रस्य जनिष्य-माणस्य नाम करोति, अभूत् कुम्भः, भिन्नं कुम्भमनुशोचति,

---

सजातीयात् सजातीयोत्पत्तेर्न प्रतिषेधः, पृथिवीजातीयात् कपालादितो घटाऽऽदि-निष्पत्तेः, उक्ताऽऽपादनं चाप्रयोजकमिति भावः ॥ १३ ॥

समाप्तं प्रेत्यभावपरीक्षाप्रकरणम् ।

अथावाष्टौ प्रकरणानि प्रसङ्गादन्यथानामित्येतान्यस्यार्थमुपोद्घाततया ; तत्राऽऽदौ शून्यतोपादानप्रकरणम् ; तत्र पूर्वपक्षसूत्रम् ।—अभावादुपादानात्, कार्य्याणां भावाना-मुत्पत्तिः, यतोऽङ्कुरादेर्बीजाऽऽदिकमनुपमृद्य न प्रादुर्भावाभावः, यथा च बीजाऽऽदि-विनाशोऽङ्कुराद्युपादानमिति ॥ १४ ॥

अत्रोत्तरम् ।—उपमृद्य प्रादुर्भवतीति न युक्तः प्रयोगः, व्याघातात्, उपमर्दकस्य पूर्वमसत्त्वे उपमर्दकत्वायोगात्, पूर्वं सत्त्वे च परतः प्रादुर्भावायोगात् ॥ १५ ॥

पूर्वपक्षी दूषयति ।—नायुक्तः प्रयोगः, अतीतेऽनागते च कारकशब्दप्रयोगात्

भिन्नस्य कुम्भस्य कपालानि, अजाताः पुत्राः पितरं तापयन्तीति बहुलं भाक्ताः प्रयोगाः दृश्यन्ते। का पुनरियं भक्तिः ?—आनन्तर्य्यं भक्तिः। आनन्तर्य्यसामर्थ्यादुपमृद्य प्रादुर्भावार्थः, प्रादुर्भविष्यन्नङ्कुर उपमृद्नातीति भाक्तं कर्त्तृत्वमिति ॥ १६ ॥

न विनष्टेभ्योऽनिष्पत्तेः ॥ १७ ॥

न विनष्टाद्बीजादङ्कुर उत्पद्यत इति, तस्मान्नाभावात् भावोत्पत्तिरिति ॥ १७ ॥

क्रमनिर्देशादप्रतिषेधः ॥ १८ ॥

उपमर्दप्रादुर्भावयोः पौर्वापर्य्यनियमः क्रमः, स खल्वभावाद्भावोत्पत्तेर्हेतुर्निर्दिश्यते, स च न प्रतिषिध्यत इति। व्याहतव्यूहानामवयवानां पूर्वव्यूहनिवृत्तौ व्यूहान्तराद्द्रव्यनिष्पत्तिः, नाभावात्। बीजावयवाः कुतश्चिन्निमित्तात् प्रादुर्भूतक्रियाः पूर्वव्यूहं जहति, व्यूहान्तरञ्चाऽऽपद्यन्ते, व्यूहान्तरादङ्कुर उत्पद्यते। दृश्यन्ते खल्ववयवास्तत्संयोगाश्चाङ्कुरोत्पत्तिहेतवः। न चानिवृत्ते पूर्वव्यूहे बीजावयवानां शक्यं व्यूहान्तरेण भवितुम्, इत्युपमर्द-

---

कर्त्तृ-कर्माऽऽदिबोधकशब्दप्रयोगात्; यथा जनिष्यते पुत्रः, जनिष्यमाणं पुत्रमभिनन्दति, अभूत् कुम्भः, भिन्नं कुम्भमनुशोचति ॥ १६ ॥

नन्वास्तामौपचारिकः प्रयोगः, तथाऽपि किं बीजाऽऽदेर्विनष्टस्योपादानत्वं मन्यसे, बीजाऽऽदिविनाशस्य वा? अन्त्येऽपि तस्योपादानत्वं, निमित्तत्वं वा? तत्राऽऽदौ उत्तरम्।—विनष्टानां बीजाऽऽदीनामुपादानत्वायोगात्, अत एव न द्वितीयः, तत्र विनष्टं विनाशः, ततो नोत्पत्तिः, द्रव्यत्वस्य भावकार्य्यसमवायिकारणताऽवच्छेदकत्वात् ॥ १७ ॥

तृतीये त्वाह।—अभावस्य कारणत्वं प्रतिषिध्यते, प्रतिबन्धकाभावस्य हेतुत्वोपगमात्, इत्याह, क्रमेति।—बीजे विनष्टेऽङ्कुरो जायत इति प्रत्ययात् बीजस्य प्रतिबन्धकस्याभावः कारणम्; बीजे विनष्टे हि तदवयवैर्जलाभिषिक्तभूम्यवयवसहितैरङ्कुर

प्रादुर्भावयोः पौर्वापर्य्यनियमः क्रमः ; तस्मान्नाभावाद्भावोत्पत्तिरिति । न चान्यद्बीजावयवेभ्योऽङ्कुरोत्पत्तिकारणम्, इत्युपपद्यते बीजोपादाननियम इति ॥ १८ ॥

अथापर आह,—

**ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात् ॥ १९ ॥**

पुरुषोऽयं समीहमानो नावश्यं समीहाफलमाप्नोति, तेनानुमीयते, पराधीनं पुरुषकर्मफलाऽऽराधनमिति । यदधीनं, स ईश्वरः, तस्मादीश्वरः कारणमिति ॥ १९ ॥

**न पुरुषकर्माभावे फलानिष्पत्तेः ॥ २० ॥**

ईश्वराधीना चेत् फलनिष्पत्तिः स्यात्, अपि तर्हि पुरुषस्य समीहामन्तरेण फलं निष्पद्येतेति ॥ २० ॥

---

आरभ्यते, अभावमात्रस्य कारणत्वे चूर्णीकृतादपि बीजादङ्कुरोत्पत्तिः स्यात्, अभावस्य निर्विशेषत्वादिति भावः ॥ १८ ॥

समाप्तं शून्यतोपादाननिराकरणप्रकरणम् ।

मतान्तरमाह ।—अनेन ब्रह्मपरिणामवादी ब्रह्मविवर्त्तवादी वा दर्शित इति वदन्ति ; तथा हि, ब्रह्मैव नामरूपप्रपञ्चभेदेन विपरिणमते मृत्तिकेवोदञ्चनाऽऽदिभावेन ; अत एव प्राकृतरूपस्य सत्त्वस्यापरित्यागः प्रपञ्चेषु उदञ्चनादाविव मृत्तिकात्वस्येति परिणामवादः । ब्रह्मैव चानाद्यनिर्वचनीयाविद्यावशान्नानारूपेण विवर्त्तते मुखमिव तत्तत्खड्गाद्यालम्बनभेदादिति विवर्त्तवादः । ननु पुरुषकर्मैव कारणमस्तु, किमीश्वरस्य कारणत्वेन ? इत्यत आह, पुरुषेति ।—पुरुषकर्मणो हि वैफल्यमपि दृश्यते, सहकार्य्यन्तरमवश्यं वाच्यम् ; तथा च, ईश्वर एव यथा यथेच्छति, तथा जगद्विपरिवर्त्तत इत्येवास्तु, किं पुरुषकर्मणा ? इति भावः । वस्तुतस्तु केवलेश्वरकारणतापरं प्रकरणं, तदुपादानतापरत्वे तु नं किमपि मानमाकलयाम इति ॥ १९ ॥

समाधत्ते ।—केवलं न ब्रह्मणः, परन्तु ईश्वरस्यैव हेतुत्वे तदिच्छाया अव्यतिरिक्तायाः तद्विषयतायाश्चानभ्युपगमात्, अभ्युपगमे द्वैताऽऽपत्तिः ; अतः सर्वं सर्वदा स्यात, न स्याद्वा कार्य्यवैचित्र्यमिति पुरुषकर्मणोऽपि सहकारिताऽऽवश्यकी, ब्रह्मण उपादानत्वन्तु न सम्भवति, असमवायिकारणासम्भवात्, तस्य कारणतामात्रं लिप्यत एवेति भावः ॥२०॥

## तत्कारितत्वादहेतुः ॥ २१ ॥

पुरुषकारमीश्वरोऽनुगृह्णाति फलाय, पुरुषस्य यतमानस्येश्वरः फलं सम्पादयतीति। यदा न सम्पादयति, तदा पुरुषकर्माफलं भवतीति, तस्मादीश्वरकारितत्वादहेतुः पुरुषकर्माभावे फलानिष्पत्तेरिति। * गुणविशिष्टमात्मान्तरमीश्वरः, तस्याऽऽत्मकल्पात् कल्पान्तरानुपपत्तिः *। अधर्ममिथ्याज्ञानप्रमादहान्या धर्मज्ञानसमाधिसम्पदा च विशिष्टमात्मान्तरमीश्वरः, तस्य च धर्मसमाधिफलमणिमाद्यष्टविधमैश्वर्य्यम्; सङ्कल्पानुविधायी चास्य धर्मः प्रत्यात्मवृत्तीन् धर्माधर्मसञ्चयान् पृथिव्यादीनि च भूतानि प्रवर्त्तयति, एवञ्च स्वकृताभ्यागमस्यालोपेन निर्माणप्राकाम्यमीश्वरस्य स्वकृतकर्मफलं वेदितव्यम्; आत्मकल्पश्चायं, यथा पिताऽपत्यानां, तथा पितृभूत ईश्वरो भूतानाम्; न चाऽऽत्मकल्पादन्यः कल्पः सम्भवति, न तावदस्य बुद्धिं विना कश्चिद्धर्मो लिङ्गभूतः शक्यः उपपादयितुम्; आगमाच्च, द्रष्टा बोद्धा सर्वज्ञातेश्वर इति बुद्ध्यादिभिश्चाऽऽत्मलिङ्गैः (त)

नन्वेवं पुरुषव्यापारस्य फले व्यभिचारी न स्यादिति चेदत्राऽऽह।—फलाभावस्य पुरुषकर्माभावकारितत्वात् पुरुषस्य कर्म अहेतुं, तदभावाधीनत्वात्, पुरुषकारः अहेतुः फलानुपधायकः। नन्वीश्वर एव कः? इत्यत्र भाष्य,—गुणविशिष्टमात्मान्तरमीश्वरः गुणैर्नित्यज्ञानेच्छाप्रयत्नैः सामान्यगुणैश्च संयोगाऽऽदिभिर्विशिष्टमात्मान्तरं जीवेभ्यो भिन्न आत्मा जगदाराध्यः सृष्ट्यादिकर्त्ता वेदद्वारा हिताहितोपदेशको जगतः पितेति। परे तु,—प्रसङ्गादीश्वरप्रतिपादनायैषा विसूत्री; तथा हि, ईश्वरः कारणम् अर्वाग्दृग्जनस्य, अनुमानन्तु क्षित्यादिकं सकर्तृकं कार्य्यत्वाद्घटवदित्यूह्यम्। ननु जीवानामेव कर्तृत्वं स्यादत्राऽऽह, पुरुषेति।—पुरुषकर्मणां वैफल्यं दृश्यते, तथा च, विफले कर्मणि प्रवर्त्तमानत्वादज्ञत्वं जीवानां, यतः उपादानगोचरापरोक्षज्ञानादिमतो हि कर्तृत्वं, न च क्षित्याद्युपादानगोचरज्ञानं जीवानामिति

(त) विनेति योज्यम्; तृतीया विनायोगे।

निःस्वरूपाऽऽख्यमीश्वरं प्रत्यक्षानुमानाऽऽगमविषयातीतं कः शक्त उपपादयितुम्? स्वकृताभ्यागमलोपेन च प्रवर्त्तमानस्यास्य यदुक्तं प्रतिषेधजातम्, अकर्मनिमित्ते शरीरसर्गे तत् सर्वं प्रसज्यत इति ॥ २१ ॥

अपरमिदानीमाह,—

अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्या-ऽऽदिदर्शनात् ॥ २२ ॥

अनिमित्ता शरीराद्युत्पत्तिः; कस्मात्?—कण्टकतैक्ष्ण्याऽऽदिदर्शनात्; कण्टकस्य तैक्ष्ण्यं, पर्वतधातूनां चित्रता, ग्राव्णः श्लक्ष्णता, निर्निमित्तस्योपादानं दृष्टं, तथा शरीरसर्गोऽपीति ॥२२॥

अनिमित्तनिमित्तत्वान्नानिमित्ततः ॥ २३ ॥

अनिमित्ततो भावोत्पत्तिरित्युच्यते, यतश्चोत्पद्यते, तन्निमित्तम्, अनिमित्तस्य निमित्तत्वान्नानिमित्ता भावोत्पत्तिरिति ॥२३ ॥

---

भावः। नन्वदृष्टद्वारा जीवानां कर्त्तृत्वमस्त्वित्याशङ्कते, न पुरुषेति।—फलस्य कार्य्यस्य, कर्माभावेऽनिष्पत्तेः; तत्तत्पुरुषोपभोगसाधनत्वात् तत्कर्मजन्यत्वमिति स्फोरणाय पुरुषेति। समाधत्ते, तदिति।—कर्म्मणोऽपि तत्कारितत्वादीश्वरकारित्वात्, अचेतनस्य चेतनाऽधिष्ठितस्यैव जनकत्वादिति भावः ॥ २१ ॥

समाप्तमीश्वरोपादानताप्रकरणम् ।

यदि च कार्य्याणामाकस्मिकत्वं, तदा न परमाण्वादीनामुपादानत्वं, न वेश्वरस्य निमित्तत्वम्, अत आकस्मिकत्वनिराकरणप्रकरणमारभते; तत्र पूर्वपक्षसूत्रम्।—अनिमित्तत इति प्रथमाऽन्तात् तसिल्, अनिमित्ता भावोत्पत्तिरित्यर्थः, भावेति स्पष्टार्थम्; घटाद्युत्पत्तिर्न कारणनियम्या, उत्पत्तिमत्त्वात्, कण्टकतैक्ष्ण्याद्युत्पत्तिवत्; यद्वा,—घटाऽऽदिकं न सकारणकं, भावत्वात्, कण्टकतैक्ष्ण्यादिवत्। तैक्ष्ण्यं संस्थानविशेषः। आदिपदान्मयूरचित्राऽऽदिपरिग्रहः, तदकारणकमेवेत्याशयः ॥ २२ ॥

एकदेशी भ्रान्तो दूषयति।—अनिमित्तत इति हेतुपञ्चमीनिर्देशादनिमित्तस्यैव निमित्तत्वात् कथमनिमित्तत इति ॥ २३ ॥

## निमित्तानिमित्तयोरर्थान्तरभावादप्रतिषेधः ॥२४॥

अन्यद्धि निमित्तम्, अन्यच्च निमित्तप्रत्याख्यानम्; न च प्रत्याख्यानमेव प्रत्याख्येयम्; यथाऽनुदकः कमण्डलुरिति नोदकप्रतिषेध उदकं भवतीति; स खल्वयं वादोऽकर्मनिमित्तः शरीरादिसर्ग इत्येतस्मान्न भिद्यते, अभेदात् तत्प्रतिषेधेनैव प्रतिषिद्धो वेदितव्य इति ॥ २४ ॥

अन्येऽनुमन्यन्ते,—

## सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात् ॥ २५ ॥

किमनित्यं नाम?—यस्य कदाचिद्भावस्तदनित्यम्, उत्पत्तिधर्मकमनुत्पन्नं नास्ति, विनाशधर्मकमविनष्टं नास्ति। किं पुनः सर्वम्?—भौतिकञ्च शरीरादि, अभौतिकञ्च बुद्ध्यादि, तदुभय-

---

दूषयति।—अनिमित्तस्य निमित्तस्य च अर्थान्तरभावात् भेदात्, उक्तः प्रतिषेधो न युक्तः, अनिमित्तस्य निमित्तासम्भवात्, शरीरस्याकर्मनिमित्तत्वदूषणेनैव च तद्दूषितप्रायमित्याशयेन नात्र दूषितमिति। नव्यास्तु सूत्रद्वयीमेवं व्याचक्षते,—समाधत्ते, अनिमित्तेति।—अनिमित्तस्य अनिमित्तत्वसाधकस्य, निमित्तत्वादनिमित्तत्वानुमिति-जनकत्वात्, अनिमित्तत इति व्याहतम्, अनिमित्तत्वानुमिति-जनकानभ्युपगमेऽनिमित्तत्वं न सिध्येदिति, कण्टकतैक्ष्ण्यादिकमपि नानिमित्तकम्, अदृष्टविशेषसहकृतैरवयवैस्तदुत्पादनादिति हृदयम्। दोषान्तरमाह, निमित्तेति।—इदमत्र निमित्तमिदमनिमित्तमिति प्रतीत्या तयोर्भेदसिद्धेर्निमित्तप्रतिषेधो न युक्तः, इतरथा च सार्वलौकिकी प्रतीतिर्नोपपद्येतेति भावः ॥ २४ ॥

समाप्तमाकस्मिकत्वप्रकरणम्।

सर्वस्यैवानित्यत्वे नाऽऽत्मादेरपि नित्यत्वं स्यात्, अतः सर्वानित्यत्वनिराकरणप्रकरणम्; तत्र सर्वेषामनित्यत्वम् अनित्यत्वव्याप्यं न वा? इति संशये पूर्वपक्षसूत्रम्।—अनित्यं विनाशि, उत्पत्तिमतो विनाशधर्मकत्वात्, उत्पत्तिमत्त्वञ्चाऽऽकाशादेरपि नैयत्वात् सिद्धमिति भावः, तेन परमते तत्र नासिद्धिः; यद्वा,—उत्पत्तिविनाशधर्मकत्वात्

मुत्पत्तिविनाशधर्मकं विज्ञायते, तस्मात् तत्सर्वम् अनित्यमिति ॥ २५ ॥

**नानित्यतानित्यत्वात् ॥ २६ ॥**

यदि तावत् सर्वस्यानित्यता नित्या, तन्नित्यत्वान्न सर्वमनित्यम्; अथानित्या, तस्यामविद्यमानायां सर्वं नित्यमिति ॥ २६ ॥

**तदनित्यत्वमग्नेर्दाह्यं विनाश्यानुविनाशवत्॥२७॥**

तस्या अनित्यताया अप्यनित्यत्वम्; कथम्?—यथाऽग्निर्दाह्यं विनाश्यानुविनश्यति, एवं सर्वस्यानित्यता सर्वं विनाश्यानुविनश्यतीति ॥ २७ ॥

**नित्यस्याप्रत्याख्यानं यथोपलब्धिव्यवस्थानात् ॥२८॥**

अयं खलु वादो नित्यं प्रत्याचष्टे, नित्यस्य च प्रत्याख्यानमनुपपन्नम्; कस्मात्?—यथोपलब्धिव्यवस्थानात्। यस्योत्पत्तिविनाशधर्मकत्वमुपलभ्यते प्रमाणतः, तदनित्यम्; यस्य नोपलभ्यते, तद्विपरीतम्। न च परमसूक्ष्माणां भूतानामाकाशकालदिगात्ममनसां तद्गुणानाञ्च केषाञ्चित् सामान्यविशेषसम-

उत्पत्तिविनाशधर्मकाणां मानसिद्धत्वात् तद्भिन्नमप्रमाणकमिति हृदयम्; परे तु,—अनित्यत्वं कादाचित्कत्वम्, उत्पत्तिधर्मकत्वाद्विनाशधर्मकत्वादिति हेतुद्वये तात्पर्य्यमित्याहुः ॥ २५ ॥

दूषयति।—उत्पत्तिमत्त्वं न विनाशित्वसाधकम्, अनित्यताया ध्वंसस्य, नित्यत्वादविनाशित्वात् तत्र व्यभिचारात् ॥ २६ ॥

आक्षिपति।—तस्या अनित्यतायाः, अप्यनित्यत्वम्; यथाऽग्निर्दाह्यस्येन्धनादेः विनाशानन्तरं स्वयमपि नश्यति, न तु दाह्योन्मज्जनं, तथा घटादेरपि नाशो नश्यति, न घटाद्युन्मज्जनं, ध्वंसध्वंसस्यापि प्रतियोगिध्वंसत्वात्; ध्वंसप्रागभावानाधारकालस्य प्रतियोग्यधिकरणत्वमिति व्याप्तेरप्रयोजकत्वान्नोन्मज्जनमित्यन्ये ॥ २७ ॥

समाधत्ते।—नित्यस्य नित्यत्वविशिष्टस्य, नित्यत्वस्य, न प्रत्याख्यानमिति फलितम्;

चायानाञ्चोत्पत्तिविनाशधर्म्मकत्वं प्रमाणत उपलभ्यते ; तस्मान्नित्यान्येतानीति ॥ २८ ॥

अयमन्य एकान्तः,—

**सर्वं नित्यं पञ्चभूतनित्यत्वात् ॥ २९ ॥**

भूतमात्रमिदं सर्वं, तानि च नित्यानि, भूतोच्छेदानुपपत्तेरिति ॥ २९ ॥

**नोत्पत्तिविनाशकारणोपलब्धेः ॥ ३० ॥**

उत्पत्तिकारणञ्चोपलभ्यते, विनाशकारणञ्च, तत् सर्वनित्यत्वे व्याहन्यत इति ॥ ३० ॥

**तल्लक्षणावरोधादप्रतिषेधः ॥ ३१ ॥**

यस्योत्पत्तिविनाशकारणमुपलभ्यत इति मन्यसे, न तद्भूतलक्षणहीनमर्थान्तरं गृह्यते ; भूतलक्षणावरोधाद्भूतमात्रमिदमित्ययुक्तोऽयं प्रतिषेधः इति ॥ ३१ ॥

**नोत्पत्तितत्कारणोपलब्धेः ॥ ३२ ॥**

कारणसमानगुणस्योत्पत्तिः कारणञ्चोपलभ्यते, न चैतदुभयं

---

नयोपलब्धिः उपलब्ध्यनतिक्रमेण ; तथा च, धर्म्मिग्राहकमानेन लाघवसहकृतेनाऽऽकाशादेर्नित्यत्वव्यवस्थापनादिति ॥ २८ ॥

समाप्तं सर्वानित्यत्वनिराकरणप्रकरणम्।

सर्वनित्यत्वे न प्रेत्यभावाऽऽदिसिद्धिः, अतस्तन्निराकरणप्रकरणम् ; तत्राऽऽक्षेपसूत्रम्।—सर्वं नित्यं भूतत्वान्मेयत्वाद्वा ; तत्र दृष्टान्तप्रदर्शनाय पञ्चभूतनित्यत्वादित्युक्तम् ; तेन परमाण्वाकाशदृष्टान्तता लभ्यते ॥ २९ ॥

समाधत्ते।—सर्वनित्यत्वं न युक्तं, घटाऽऽदीनाम् उत्पत्तिविनाशकारणानां कपालसंयोगमुद्गरपाताऽऽदीनाम् उपलब्धेः, तथा चोत्पादविनाशावावश्यकाविति ॥ ३० ॥

पुनः शङ्कते आह।—उक्तप्रतिषेधो न, नित्यस्य परमाण्वादेर्यल्लक्षणं भूतत्वाऽऽदि, घटाऽऽदौ तदवरोधात् तत्सत्त्वात् ; तथा चोत्पादादिप्रत्ययो भ्रान्त इति भावः ॥ ३१ ॥

दूषयति।—अनित्यत्वनिषेधो न युक्तः, उत्पत्तेस्तत्कारणात् तत्समापकात्, उपलब्धेः,

मित्यविषयं, न चोत्पत्तितत्कारणोपलब्धिः शक्या प्रत्याख्यातुं, न चाविषया काचिदुपलब्धिरिति उपलब्धिसामर्थ्यात् कारणेन समानगुणं कार्य्यमुत्पद्यत इत्यनुमीयते, सा खलूपलब्धेर्विषय इति । एवञ्च तल्लक्षणावरोधोपपत्तिरिति उत्पत्तिविनाशकारणप्रयुक्तस्य ज्ञातुः प्रयत्नो दृष्ट इति । प्रसिद्धश्चावयवी तद्धर्मा, उत्पत्तिविनाशधर्मा चावयवी सिद्ध इति । * शब्दकर्मबुद्ध्यादीनां चाव्याप्तिः, * "पञ्चभूतनित्यत्वात्" "तल्लक्षणावरोधात्" चेत्यनेन शब्दकर्मबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाश्च न व्याप्ताः, तस्मादनेकान्तः, * स्वप्नविषयाभिमानवन्मिथ्योपलब्धिरिति चेत्, भूतोपलब्धौ तुल्यम् । * यथा स्वप्ने विषयाभिमानः, एवमुत्पत्तिविनाशकारणाभिमान इति, एवञ्चैतद्भूतोपलब्धौ तुल्यम् ; द्युपृथिव्याद्युपलब्धिरपि स्वप्नविषयाभिमानवत् प्रसज्यते * पृथिव्याद्यभावे सर्व्वव्यवहारविलोप इति चेत्, तदितरत्र समानम्, * उत्पत्तिविनाशकारणोपलब्धिविषयस्याप्यभावे सर्व्वव्यवहारविलोप इति ; सोऽयं नित्यानामतीन्द्रियत्वादविषयत्वाच्चोत्पत्तिविनाशयोः स्वप्नविषयाभिमानवदनित्यहेतुरिति ॥३२॥

अवस्थितस्योपादानस्य धर्म्ममात्रं निवर्त्तते, धर्म्ममात्रमुपजायते ; स खलूत्पत्तिविनाशयोर्विषयः ; यच्चोपजायते, तत् प्रागप्युपजननादस्ति ; यच्च निवर्त्तते, तन्निवृत्तमप्यस्तीति ; एवञ्च सर्व्वस्य नित्यत्वमिति,—

## न व्यवस्थाऽनुपपत्तेः ॥ ३३ ॥

अयमुपजनः इयं निवृत्तिरिति व्यवस्था नोपपद्यते, उप-

---

तथा चोत्पादविनाशप्रतीतेः प्रामाणिकत्वात् न तन्निषेधः, इतरथा कादाचित्कत्वप्रतीत्यनुपपत्तेः, न चाऽऽविर्भावात् तदुपपत्तिः, तस्यैवानित्यत्वे सर्व्वनित्यत्वव्याघातात् । विवेचयिष्यते चेदं स्पष्टतरमुपरिष्टात् ॥ ३२ ॥

उत्पादविनाशप्रत्ययस्य भ्रान्तत्वं स्यादित्याशङ्क्याऽऽह ।—सार्व्वलौकिक-

जातनिवृत्तयोर्विद्यमानत्वात् । अयं धर्म उपजातः, अयं निवृत्त इति सद्भावाविशेषादव्यवस्था ; इदानीमुपजननिवृत्ती, नेदानीमिति कालव्यवस्था नोपपद्यते, सर्वदा विद्यमानत्वात् ; अस्य धर्मस्योपजननिवृत्ती, नास्येति व्यवस्थाऽनुपपत्तिः, उभयोरविशेषात् । अनागतोऽतीत इति कालव्यवस्थाऽनुपपत्तिः, वर्त्तमानस्य सद्भावलक्षणत्वात् ; अविद्यमानस्याऽऽत्मलाभ उपजनः, विद्यमानस्याऽऽत्महानं निवृत्तिः इत्येतस्मिन् सति नैते दोषाः ; तस्मात् यदुक्तं,—प्रागप्युपजननादस्ति, निवृत्तश्चास्ति, तदयुक्तमिति ॥ ३३ ॥

अयमन्य एकान्तः,—

## सर्वं पृथक् भावलक्षणपृथक्त्वात् ॥ ३४ ॥

सर्वं नाना, न कश्चिदेको भावो विद्यते ; कस्मात् ?—भावलक्षणपृथक्त्वात् भावस्य लक्षणमभिधानं, येन लक्ष्यते भावः, स समाख्याशब्दः, तस्य पृथग्विषयकत्वात् ; सर्वो भावः समाख्याशब्दः समूहवाची ; कुम्भ इति संज्ञाशब्दो गन्धरसरूपस्पर्शसमूहे बुध्नपार्श्वग्रीवाऽऽदिसमूहे च वर्त्तते । निदर्शनमात्रञ्चेदमिति ॥ ३४ ॥

---

प्रमात्वेन सिद्धस्यापि भ्रमत्वशङ्कायां प्रमाभ्रमव्यवहारविलोपः स्यादित्यर्थः ॥ ३३ ॥

समाप्तं सर्वनित्यत्वनिराकरणप्रकरणम् ।

अथ प्रसङ्गात् सर्वपृथक्त्वप्रकरणम् ; तत्र पूर्वपक्षसूत्रम् ।—सर्वं वस्तु पृथक् नाना, लक्ष्यतेऽनेनेति लक्षणं समाख्या, तस्याः पृथक्त्वं पृथगर्थकत्वम् ; तथा च प्रयोगः, घटाऽऽदिः समूहरूपः वाच्यत्वात् सेनावनाऽऽदिवत् ; अतीन्द्रिये गगनाऽऽदौ मानाभावात्, आत्मनः शरीरानतिरिक्तात्, गुणकर्मणोराश्रयाभेदात्, विशेषसमवाययोर्मानाभावात्, अभावस्य तुच्छत्वान्न व्यभिचारः ; यद्वा,—घटाऽऽदिकं स्वस्मादपि पृथक्, भावलक्षणानां गन्धरसाऽऽदीनां तत्तदवयवादीनाञ्च, पृथक्त्वात्, घटाऽऽदेश्च तदभेदादिति भावः ॥ ३४ ॥

नानेकलक्षणैरेकभावनिष्पत्तेः ॥ ३५ ॥

अनेकविधलक्षणैरिति मध्यमपदलोपी समासः। गन्धाऽऽदिभिश्च गुणैर्बुध्नाऽऽदिभिश्चावयवैः सम्बद्ध एको भावो निष्पद्यते, गुणव्यतिरिक्तञ्च द्रव्यम्, अवयवातिरिक्तश्चावयवीति विभक्तन्यायञ्चैतदुभयमिति ॥ ३५ ॥

अथापि,—

लक्षणव्यवस्थानादेवाप्रतिषेधः ॥ ३६ ॥

न कश्चिदेको भाव इत्ययुक्तः प्रतिषेधः। कस्मात्?—लक्षणव्यवस्थानादेव; यदिदं लक्षणं भावस्य संज्ञाशब्दभूतं, तदेकस्मिन् व्यवस्थितम्; यं कुम्भमद्राक्षं तं स्पृशामि; यमेवास्प्राक्षं, तं पश्यामीति, नाणुसमूहो गृह्यते इति। * अणुसमूहे चागृह्यमाणे यद्गृह्यते, तदेकमेवेति। अथाप्येतदनूक्तं नास्त्येको भावः, यस्मात् समुदायः, एकानुपपत्तेर्नास्त्येव समूहः * नास्त्येको भावः, यस्मात् समूहे भावशब्दप्रयोगः, एकस्य चानुपपत्तेः समूहो नोपपद्यते, एकसमुच्चयो हि समूह इति व्याहतत्वादनुपपन्नम्; नास्त्येको भाव इति यस्य प्रतिषेधः प्रतिज्ञायते, समूहे भावशब्दप्रयोगादिति हेतुं ब्रुवता स एवाभ्यनुज्ञायते,

---

समाधत्ते।—अनेकलक्षणैरनेकस्वरूपैः रूपरसाऽऽदिभिरवयवैश्च विशिष्टस्यैकस्यैव भावस्य निष्पत्तेरुत्पत्तेरित्यर्थः, तथा चैकस्य धर्मिणः प्रत्यक्षाऽऽदिप्रमाणसिद्धत्वात् तस्य च चाक्षुषत्वरासनत्वादिविरुद्धधर्माध्यासरूपरसाद्यात्मकत्वाभावादवयवानाञ्च कारणत्वात् कार्यकारणयोरभेदासम्भवाच्च न तत्तदात्मकत्वं घटाऽऽदेः सम्भवतीति भावः ॥ ३५ ॥

हेतुमाह।—लक्षणस्य अर्थाद्भावानां घटपटाऽऽदीनां, व्यवस्थानादव्यवस्थितत्वादेव, अप्रतिषेधः पृथक्त्वव्यवस्थापनं नेत्यर्थः; कपालसमवेतद्रव्यत्वाऽऽदिकं हि घटाऽऽदेर्लक्षणं, कपाले घट इत्यादिप्रतीतिसिद्धम्; न चेदं समूहाऽऽत्मकत्वे सम्भवति। एवं

एकसमुच्चयो हि समूह इति। समूहे भावशब्दप्रयोगादिति चेत्, समूहमाश्रित्य प्रत्येकं समूहिप्रतिषेधो नास्त्येको भाव इति ; सोऽयमुभयतो व्याघातात् यत्किञ्चनवाद इति ॥ ३६ ॥

अयमपर एकान्तः,—

## सर्वमभावो भावेष्वितरेतराभावसिद्धेः ॥ ३७ ॥

यावद्भावजातं, तत्सर्वमभावः ; कस्मात् ?—भावेष्वितरेतराभावसिद्धेः। असन् गौरश्वात्मनाऽनश्वो गौः, असन्नश्वो गवात्मनाऽगौरश्व इति। * असत्प्रत्ययस्य प्रतिषेधस्य च भावशब्देन सामानाधिकरण्यात् सर्वमभाव इति प्रतिज्ञावाक्ये पदयोः प्रतिज्ञाहेत्वोश्च व्याघातादयुक्तम्, * अनेकस्याशेषता सर्वशब्दस्यार्थः, भावप्रतिषेधश्चाभावशब्दस्यार्थः, पूर्वं सोपाख्यमुत्तरं निरुपाख्यम् ; तत्र समुपाख्यायमानं कथं निरुपाख्यमभावः स्यादिति ? न जात्वभावो निरुपाख्योऽनेकतयाऽशेषतया शक्यः प्रतिज्ञातुमिति। सर्वमेतदभाव इति चेत् यदिदं सर्वमिति मन्यसे, तदभाव इति एवं चेत्, अनिवृत्तो व्याघातः ; अनेकमशेषञ्चेति नाभावप्रत्ययेन शक्यं भवितुम् ; अस्ति चायं प्रत्ययः सर्वमिति, तस्मान्नाभाव इति। प्रतिज्ञाहेत्वोश्च व्याघातः सर्वमभाव इति ; भावप्रतिषेधः प्रतिज्ञा, भावेष्वितरेतराभावसिद्धेरिति हेतुः, भावेष्वितरेतराभावमनुज्ञायाऽऽश्रित्य चेतरेतराभावसिद्ध्या सर्वमभाव इत्युच्यते, यदि सर्वमभावो भावेष्वित-

---

लक्षणस्य घटाऽऽदिस्वरूपस्य, यमहमद्राक्षं, तं स्पृशामीति प्रत्यक्षेण व्यवस्थितत्वात्। परमाणोश्चाप्रत्यक्षत्वान्न तत्सम्भवः, किञ्च, समूहलक्षणाव्यवस्थितेरेव नोक्तं युक्तम् ; समूहो हि नानाव्यक्तिसमुदायः, स च नैकव्यक्तेरनभ्युपगमे सिध्यतीति भावः ॥ ३६ ॥

समाप्तं सर्वपृथक्त्वनिराकरणप्रकरणम्।

सर्वशून्यत्वेन कार्य्यकारणभावासम्भवः, इति तन्निराकरणप्रकरणमारभते ; तत्र ज्ञानविषयत्वमभावत्वव्याप्यं न वा ? इति संशये पूर्वपक्षसूत्रम्।—सर्वं विवादपदम्,

रेतराभावसिद्धेरिति नोपपद्यते, अथ भावेष्वितरेतराभावसिद्धिः, सर्वमभाव इति नोपपद्यते, सूत्रेण चाभिसम्बन्धः ॥ ३७ ॥

न स्वभावसिद्धेर्भावानाम् ॥ ३८ ॥

न सर्वमभावः ; कस्मात् ?—स्वेन भावेन सद्भावात् भावानाम् ; स्वेन धर्मेण भावा भवन्तीति प्रतिज्ञायते ; कश्च स्वो धर्मो भावानाम् ?—द्रव्यगुणकर्मणां सदादिसामान्यं, द्रव्याणां क्रियावदित्येवमादिर्विशेषः, स्पर्शपर्यन्ताः पृथिव्या इति च प्रत्येकञ्चानन्तो भेदः, सामान्यविशेषसमवायानाञ्च विशिष्टा धर्मा गृह्यन्ते ; सोऽयमभावस्य निरुपाख्यत्वात् सम्प्रत्यायकोऽर्थभेदो न स्यात्, अस्ति त्वयं, तस्मान्न सर्वमभाव इति । अथवा न स्वभावसिद्धेर्भावानामिति स्वरूपसिद्धेरिति ; गौरिति प्रयुज्यमाने शब्दे जातिविशिष्टं द्रव्यं गृह्यते, नाभावमात्रम् ; यदि च सर्वमभावः, गौरित्यभावः प्रतीयेत, गोशब्देन चाभाव उच्येत, यस्मात्तु गोशब्दप्रयोगे द्रव्यविशेषः प्रतीयते, नाभावः, तस्मादयुक्तमिति । अथवा न स्वभावसिद्धेरिति—असन् गौरश्वाऽऽत्मनेति गवात्मना कस्मान्नोच्यते ?—अवचनात् गवात्मना गौरस्तीति स्वभावसिद्धिः ; अनश्वोऽश्व इति वा अगौर्गौरिति वा कस्मान्नोच्यते ?—अवचनात् स्वेन रूपेण विद्यमानता द्रव्यस्येति विज्ञायते, अव्यतिरेकप्रतिषेधे च भावानामसंयोगाऽऽदिसम्बन्धो व्यतिरेकः, अत्राव्यतिरेकोऽभेदाऽऽख्यसम्बन्धः, तत्प्रतिषेधे सदा असत्प्रत्ययसामानाधिकरण्यम् ; यथा न सन्ति कुण्डे बदराणीति, असन् गौरश्वाऽऽत्मना अनश्वे गौरिति च गवाश्वयोरव्यतिरेकः प्रतिषिध्यते, गवाश्वयोरेकत्वं नास्तीति,

स्वभावस्तुच्छम् ; तत्र प्रत्यक्षं मानमाह, भावेष्विति ।—भावत्वाभिमतेषु घटाऽऽदिषु अभावत्वसिद्धेः, घटः पटो नेत्यादिप्रतीत्या सर्वेषामभावत्वसिद्धेः ॥ ३७ ॥

सिद्धान्तसूत्रम् ।—भावानां पृथिव्यादीनां, स्वभावस्य सत्त्वादेः सत्त्वा।

र्गस्मिन् प्रतिषिध्यमाने भावेन गवा सामानाधिकरण्यमसत्प्रत्ययस्यासन् गौरश्वाऽऽत्मनेति, यथा न सन्ति कुण्डे बदराणीति कुण्डे बदरसंयोगे प्रतिषिध्यमाने सद्भिरसत्प्रत्ययस्य सामानाधिकरण्यमिति ॥ ३८ ॥

## न स्वभावसिद्धिरापेक्षिकत्वात् ॥ ३९ ॥

अपेक्षाकृतमापेक्षिकम् ; ह्रस्वापेक्षाकृतं दीर्घं, दीर्घापेक्षाकृतं ह्रस्वम् ; न स्वेनाऽऽत्मनावस्थितं किञ्चित् ; कस्मात् ?—अपेक्षासामर्थ्यात् ; तस्मान्न स्वभावसिद्धिर्भावानामिति ॥ ३९ ॥

## व्याहतत्वादयुक्तम् ॥ ४० ॥

यदि ह्रस्वापेक्षाकृतं दीर्घं, किमिदानीमपेक्ष्य ह्रस्वमिति गृह्यते ?—अथ दीर्घापेक्षाकृतं ह्रस्वं, दीर्घमनापेक्षिकम् ; एवमितरेतराऽऽश्रययोरेकस्याभावेऽन्यतराभावादुभयाभाव इति अपेक्षाव्यवस्थाऽनुपपन्ना । स्वभावसिद्धावसत्यां समयोः परिमण्डलयोर्वा द्रव्ययोरापेक्षिके दीर्घत्वह्रस्वत्वे कस्मान्न भवतः ?—अपेक्षायामनपेक्षायाञ्च द्रव्ययोरभेदः । यावती द्रव्ये अपेक्ष्यमाणे, तावती एवानपेक्ष्यमाणे, नान्यतरत्र भेदः ; आपेक्षिकत्वे तु सत्यन्यतरत्र विशेषोपजननः स्यादिति । किमपेक्षासामर्थ्यमिति चेत् ?—द्वयोर्ग्रहणेऽतिशयग्रहणोपपत्तिः ; द्वे द्रव्ये पश्यन्नेकत्र

---

ऽद्वैत, सिद्धेः ; न हि वृक्षस्य वल्कपाऽऽदिकं सत्त्वेन प्रतीतिर्वा सम्भवति ॥ ३८ ॥

पुनः प्रकृते ।—न हि सर्वेषां भावानामैकः स्वभावः सम्भवति, आपेक्षिकत्वात् भिन्नत्वात्, भिन्नस्य एकस्वभावत्वे स्वस्मादपि भेदाऽऽपत्तेः ; यथा,—इतरस्यापेक्षत्वात्, एतदपेक्षयाऽयं नीलबदः, एतदपेक्षया ह्रस्व इति प्रतीतेः ; यच्च सापेक्षं, तदवस्तु ; यथा कदाचापेक्षं स्फटिकाऽऽरक्तत्वम् ॥ ३९ ॥

समाधत्ते ।—आपेक्षिकस्य वृक्षत्वाऽऽदिवर्णावत्वादसिद्धत्वात् न वा घटाऽऽदेः;

विद्यमानमनित्यं गृह्णाति, तद्दीर्घमिति व्यवस्यति ; यच्च हीनं गृह्णाति, तद्ध्रस्वमिति व्यवस्यतीति, एतच्चापेक्षासामर्थ्यमिति ॥ ४० ॥

अथेमे सङ्ख्यैकान्तवादाः। सर्वमेकं,—सदविशेषात् ; सर्वं द्वेधा,—नित्यानित्यभेदात् ; सर्वं त्रेधा,—ज्ञाता ज्ञानं ज्ञेयमिति ; सर्वं चतुर्द्धा,—प्रमाता प्रमाणं प्रमेयं प्रमितिरिति ; एवं यथासम्भवमन्येऽपीति। तत्र परीक्षा,—

**सङ्ख्यैकान्तासिद्धिः कारणानुपपत्त्युपपत्तिभ्याम्॥४१॥**

यदि साध्यसाधनयोर्नानात्वम्, एकान्तो न सिध्यति, व्यतिरेकात् ; अथ साध्यसाधनयोरभेदः, एवमप्येकान्तो न सिध्यति, साधनाभावात् ; न हि तमन्तरेण कस्यचित् सिद्धिरिति ॥ ४१ ॥

---

सापेक्षत्वं सम्भवति, किञ्च सापेक्षत्वं सापेक्षं न वा, आद्ये तस्य तुच्छत्वान्न साधकत्वम्, अन्त्ये तस्यैव सत्यत्वात् कुतः सर्वशून्यत्वमिति भावः ॥ ४० ॥

समाप्तं सर्वशून्यतानिराकरणप्रकरणम्।

अथ सङ्ख्यैकान्तवादनिराकरणप्रकरणम्। तत्र भाष्यम्,—अथेमे सङ्ख्यैकान्तवादाः, सर्वमेकं,—सदविशेषात् ; सर्वं द्वेधा,—नित्यानित्यभेदात् ; सर्वं त्रेधा,—ज्ञाता ज्ञेयं ज्ञानमिति ; सर्वं चतुर्द्धा,—प्रमाता प्रमाणं प्रमेयं प्रमितिरिति ; एवं यथासम्भवमन्येऽपि। तत्र यथा नित्यत्वानित्यत्वलक्षणधर्माभ्यां द्वैधं, तथा सत्त्वेनैकमिति स्पष्टोऽर्थः। परे त्वेवं व्याचक्षते,—एकमित्यद्वैतवादः, तथा च ब्रह्मैवैकं निर्विशेषं सत्यं, सर्वमन्यन्मिथ्या ; यद्वा,—सर्वं प्रपञ्चजातम् एकं द्वैतशून्यं, सदविशेषात ; घटः सन् पटः सन्निति प्रतीतेः, घटाभिन्नसदभिन्नपटस्य घटाभेदसिद्धेः। श्रुतिरपि,—"एकमेवाद्वयं ब्रह्म"। "नेह नानाऽस्ति किञ्चन" ( बृह० उप० ४ अध्या० ४ ब्राह्म० १९ मन्त्रः ) इत्यादि। अन्येऽपीत्यनेन रूपसंज्ञासंस्कारवेदनाऽनुभवाः पञ्च स्कन्धा इति सौत्रान्तिका इत्यादिसमुच्चयः, एतेष्वाक्षेपेषु सिद्धान्तसूत्रम्।—सङ्ख्यैकान्ता न सिध्यन्ति कारणस्य प्रमाणस्य, अनुपपत्तेः, उपपत्तौ वा न सङ्ख्यैकान्तः, साधनस्य साध्यातिरिक्तस्यापेक्षितत्वात् ॥४१॥

## न कारणावयवभावात् ॥ ४२ ॥

न सर्वैकान्तानामसिद्धिः; कस्मात्?—कारणस्यावयवभावात्। अवयवः कश्चित् साधनभूत इत्यव्यतिरेकः; एवं द्वैताऽऽदीनामपीति ॥ ४२ ॥

## निरवयवत्वादहेतुः ॥ ४३ ॥

कारणस्यावयवभावादित्यहेतुः; कस्मात्?—सर्वमेकमित्यनपवर्गेण प्रतिज्ञाय कस्यचिदेकत्वमुच्यते, तत्र व्यपावृत्तोऽवयवः साधनभूतो नोपपद्यते, एवं द्वैताऽऽदिष्वपीति। ते खल्विमे सर्वैकान्ताः विशेषकारितस्यार्थविस्तारस्य प्रत्याख्याने न वर्त्तन्ते, प्रत्यक्षानुमानाऽऽगमविरोधान्मिथ्यावादा भवन्ति। अथाभ्यनुज्ञानेन वर्त्तन्ते, समानधर्मकारितोऽर्थसङ्ग्रहो विशेषकारितश्चार्थभेद इति एवमेकान्तत्वं जहतीति। ते खल्वेते तत्त्वज्ञानप्रविवेकार्थमेकान्ताः परीक्षिता इति ॥ ४३ ॥

प्रेत्यभावानन्तरं फलम्; तस्मिन्,—

## सद्यः कालान्तरे च फलनिष्पत्तेः संशयः ॥ ४४ ॥

पचति दोग्धीति सद्यः फलमोदनपयसी, कर्षति वपतीति कालान्तरे फलं शस्याधिगम इति। अस्ति चेयं क्रिया

आक्षिपति।—न सर्वैकान्तस्यासिद्धिः, कारणस्य प्रमाणस्य, अवयवभावात्, उक्तस्यैकदेशत्वादवयवावयविनोश्च भेदाभावः ॥ ४२ ॥

दूषयति।—उक्तो हेतुर्न युक्तः, सर्वस्यैव पक्षत्वेनावशिष्टस्याभावात्, पक्षैकदेशस्य हेतुत्वासम्भवादिति भावः; श्रुतिस्तु ब्रह्मैक्यपरेति। एतच्च नास्मभ्यं रोचते, सत्त्वेनैक्यस्य नित्यानित्यभेदात् द्वैविध्यादेश्चाभ्युपगतत्वात्, अनित्यस्याप्यनुमानस्य नित्यानित्यसाधकत्वे विरोधाभावात्; कथमितरथा षट्पदार्थी सप्तपदार्थी च सिध्येदिति? तस्मादद्वैतवादनिराकरणपरत्व एव प्रकरणं सङ्गच्छत इति सङ्क्षेपः ॥ ४३ ॥

समाप्तं सर्वैकान्तवादनिराकरणप्रकरणम्।

अथावसरतः फले परीक्षणीये संशयमाह।—पाकाऽऽदिक्रियायाः सद्यः फलक-

"अग्निहोत्रं जुहुयात् स्वर्गकामः" (मैत्री० उप० ६।३६) इति । एतस्याः फले संशयः ॥ ४४ ॥

**न सद्यः, फलं कालान्तरोपभोग्यत्वात् ॥ ४५ ॥**

स्वर्गः फलं श्रूयते; तच्च भिन्नेऽस्मिन् देहभेदादुत्पद्यत इति, न सद्यो ग्रामाऽऽदिकामानामारम्भफलमिति ॥ ४५ ॥

**कालान्तरेणानिष्पत्तिर्हेतुविनाशात् ॥ ४६ ॥**

ध्वस्तायां प्रवृत्तौ प्रवृत्तेः फलं न कारणमन्तरेणोत्पत्तुमर्हति, न खलु वै विनष्टात् कारणात् किञ्चिदुत्पद्यत इति ॥ ४६ ॥

**प्राङ्निष्पत्तेर्वृक्षफलवत् तत्स्यात् ॥ ४७ ॥**

यथा फलार्थिना वृक्षमूले सेकाऽऽदिपरिकर्म क्रियते, तस्मिंश्च प्रध्वस्ते पृथिवीधातुरब्धातुना सङ्गृहीतः आन्तरेण तेजसा पच्यमानो रसद्रव्यं निर्वर्त्तयति, स द्रव्यभूतो रसो वृक्षानुगतः पाकविशिष्टो व्यूहविशेषेण सन्निविशमानः पर्णाऽऽदि-फलं निर्वर्त्तयति; एवं परिषेकाऽऽदिकर्म चार्थवत्; न च विनष्टात् फलनिष्पत्तिः, तथा प्रवृत्त्या संस्कारो धर्माधर्मलक्षणो जन्यते, स जातो निमित्तान्तरानुगृहीतः कालान्तरे फलं

---

त्वस्य कृष्यादेः कालान्तरफलकत्वस्य दर्शनादग्निहोत्रहवनाऽऽदेर्हिंसाऽऽदेर्वा फलं सावस्कं कालान्तरीणं वेति संशयः ॥ ४४ ॥

तत्रैहिककीर्त्यकीर्त्यादीनामेव फलत्वसम्भवे नादृष्टादिकल्पनमिति पूर्वपक्षे सिद्धान्तसूत्रम् ।—कालान्तरोपभोग्यत्वेन प्रतिपादनादित्यर्थः, स्वर्गो हि फलं श्रूयते, स च दुःखासम्भिन्नसुखं, न चैहिकं सुखं तथा ; एवं हिंसाऽऽदेस्तत्तन्नरकोपभोगः फलं श्रूयते, न चेह तत्सम्भव इति भावः ॥ ४५ ॥

प्रकृते ।—कालान्तरेण तत्तत्कर्मणः फलं न सम्भवति, हेतोस्तत्कर्मणः, विनाशात् ॥ ४६ ॥

समाधत्ते ।—स्वर्गाऽऽदिनिष्पत्तेः प्राक् तद्द्वारं स्यात् । दृष्टान्तमाह,—वृक्षफलवत्,

निष्पादयतीति। उक्तञ्चैतत्,—"पूर्वकृतफलानुबन्धात् तदुत्पत्तिः" इति ॥ ४७ ॥

तदिदं प्राङ्निष्पत्तेर्निष्पद्यमानम्,—

**नासन्न सन्न सदसत्सदसतोर्वैधर्म्यात् ॥ ४८ ॥**

प्राङ्निष्पत्तेर्निष्पत्तिधर्मकं नासत्, उपादाननियमात्; कस्यचिदुत्पत्तये किञ्चिदुपादेयं, न सर्वं सर्वस्येत्यसद्भावे नियमो नोपपद्यत इति। न सत्, प्रागुत्पत्तेर्विद्यमानस्योत्पत्तिरनुपपन्नेति; न सदसत्, सदसतोर्वैधर्म्यात्; सदित्यर्थाभ्यनुज्ञा, असदित्यर्थप्रतिषेधः, एतयोर्व्याघातो वैधर्म्यम्; व्याघाताद्व्यतिरेकानुपपत्तिरिति ॥ ४८ ॥

कस्मात्?—

**प्रागुत्पत्तेरुत्पत्तिधर्मकमसदित्यद्धा उत्पादव्ययदर्शनात् ॥ ४९ ॥**

---

यथा मूलसेकाऽऽदिनाशेऽपि तदधीनावयवोपचयाऽऽदिद्वारबलेन फलोत्पत्तिः, तथा प्रकृतेऽपि यागाऽऽदिनाशेऽपि तज्जन्यादृष्टरूपद्वारसत्त्वान्न स्वर्गाद्युत्पत्तिविरोधः ॥ ४७ ॥

ननु कार्य्यकारणभाव एव न विचारसह इत्याशङ्कते।—प्राङ्निष्पत्तेरित्यनुवर्त्तते, फलमित्यध्याहर्त्तव्यम्; तथा चोत्पत्तेः प्राक् फलं नासत्, असत उत्पत्तौ शशशृङ्गादेरप्युत्पत्तिः स्यात्, स्याच्च सिकतादावपि तैलम्; न वा सत्, सत उत्पत्तिविरोधात्, अत एव न सदसत्, सदसतोः सत्त्वासत्त्वलक्षणवैधर्म्यात् ॥ ४८ ॥

समाधत्ते।—उत्पत्तिधर्मकम् उत्पत्तिधर्मकत्वेनोपलभ्यमानं पटाऽऽदिकम्, उत्पत्तेः प्रागसदिति अद्धा तत्त्वम्, उत्पादनाशयोः प्रमितत्वात्, इदानीं घट उत्पन्न इदानीं घटो विनष्ट इति प्रत्ययात्, सतस्तु नोत्पत्तिसम्भव उत्पन्नपुनरुत्पादप्रसङ्गात्; यद्यपि नाशस्य न तत्र हेतुत्वं, तथाऽप्यनुत्पन्नभावस्य नाशायोगादुत्पादसाधकत्वेन नाशग्रहः ॥ ४९ ॥

यत्पुनरुक्तं—प्रागुत्पत्तेः कार्य्यं नासदुपादाननियमादिति,—

**बुद्धिसिद्धन्तु तदसत् ॥ ५० ॥**

इदमस्योत्पत्तये समर्थं, न सर्वमिति प्रागुत्पत्तेर्नियतकारणं कार्य्यं बुद्ध्या सिद्धमुत्पत्तिनियमदर्शनात्, तस्मादुपादाननियमस्योपपत्तिः, सति तु कार्य्ये प्रागुत्पत्तेरुत्पत्तिरेव नास्तीति ॥ ५० ॥

**आश्रयव्यतिरेकाद्वृक्षफलोत्पत्तिवदित्यहेतुः ॥ ५१ ॥**

मूलसेकाऽऽदिपरिकर्म फलञ्चोभयं वृक्षाऽऽश्रयं, कर्म चेह शरीरे, फलञ्चामुत्रेत्याश्रयव्यतिरेकादहेतुरिति ॥ ५१ ॥

**प्रीतेरात्माऽऽश्रयत्वादप्रतिषेधः ॥ ५२ ॥**

प्रीतिरात्मप्रत्यक्षत्वादात्माऽऽश्रया, तदाश्रयमेव कर्म धर्मसंज्ञितं, धर्मस्याऽऽत्मगुणत्वात् । तस्मादाश्रयव्यतिरेकानुपपत्तिरिति ॥ ५२ ॥

---

असदुत्पत्तौ नियमो न स्यादित्यत्राऽऽह ।—तत्कार्य्यम्, असत्, प्रागभावप्रतियोगि-बुद्धिसिद्धं बुद्ध्या विषयीकृतम्; तथा हि, इह तन्तुषु पटो भविष्यतीति ज्ञात्वा कुविन्दः प्रवर्त्तते, न तु पटोऽस्तीति ज्ञात्वा, तथा सति सिद्धत्वेन ज्ञाते इच्छाऽभावात् प्रवृत्त्यनुपपत्तेः; सिकताऽऽदौ पटो भविष्यतीति न ज्ञायते, किन्तु न भविष्यतीति ज्ञायत एव; कुत इति चेत्?—अनुभवं पृच्छ । किञ्च त्वन्मतेऽपि कुतो न ज्ञायते, तत्र पटाभावादिति चेत्, कथमिदं निरणायि पटात् पूर्वं तन्तुसिकतयोस्तुल्यत्वात्, तन्तुत्वेनाऽऽश्रयतेति चेत्, तन्तुत्वेन कारणतेत्येव स्यात्, प्रवृत्त्यनुरोधात् ॥ ५० ॥

नन्वस्तु हेतुफलभावः, तथाऽपि वृक्षफलवदिति दृष्टान्तवैषम्यान्नादृष्टसिद्धिरित्याशयेन शङ्कते ।—प्राङ्निष्पत्तेर्वृक्षफलवदित्यहेतुः; कुतः?—आश्रयव्यतिरेकात् येन कायेन कर्म कृतं, तस्य नाशात्; वृक्षस्थले तु तस्य वृक्षस्य सत्त्वात् सलिलसेकाऽऽदिकं परिकर्मोपयुज्यत इत्यभिमानः ॥ ५१ ॥

समाधत्ते ।—आश्रयव्यतिरेकादिति हेतुर्न युक्तः; प्रीतेः सुखस्य, स्वर्गिशरीरावच्छेदेन जायमानस्य, आत्मवृत्तित्वात्, यागाऽऽदिसामानाधिकरण्यादित्यर्थः ॥ ५२ ॥

न पुत्त्रपशुस्त्रीपरिच्छदहिरण्यान्नाऽऽदिफल-निर्देशात्॥ ५३॥

पुत्त्राऽऽदि फलं निर्दिश्यते, न प्रीतिः ; ग्रामकामो यजेत, पुत्त्रकामो यजेतेति ; तत्र यदुक्तं,—प्रीतिः फलमित्येतदयुक्तमिति॥५३॥

तत्सम्बन्धात् फलनिष्पत्तेस्तेषु फलवदुपचारः ॥५४॥

पुत्त्राऽऽदिसम्बन्धात् फलं प्रीतिलक्षणमुत्पद्यत इति पुत्त्राऽऽदिषु फलवदुपचारः, यथाऽन्ने प्राणशब्दः, "अन्नं वै प्राणाः" इति ॥५४॥

फलानन्तरं दुःखमुद्दिष्टम्, उक्तञ्च,—"बाधनालक्षणं दुःखम्" इति ; तत् किमिदं प्रत्यात्मवेदनीयस्य सर्वजन्तुप्रत्यक्षस्य सुखस्य प्रत्याख्यानम् ?—आहोस्विदन्यः कल्प इति ? अन्य इत्याह ; कथम् ?—न वै सर्वलोकसाक्षिकं सुखं शक्यं प्रत्याख्यातुम्, अयन्तु जन्ममरणप्रबन्धानुभवनिमित्ताद्दुःखान्निर्विण्णस्य दुःखञ्जिहासतो दुःखसंज्ञाभावनोपदेशो दुःखहानार्थ इति। कया युक्त्या ?—सर्वे खलु सत्त्वनिकायाः सर्वाण्युत्पत्तिस्थानानि सर्वः पुनर्भवो बाधनाऽनुषक्तः, दुःखसाहचर्य्यात् ; "बाधनालक्षणं दुःखम्" इत्युक्तम्, ऋषिभिर्दुःखसंज्ञाभावनमुपदिश्यते, अत्र च हेतुरुपादीयते,—

विविधबाधनायोगाद्दुःखमेव जन्मोत्पत्तिः ॥५५॥

जन्म जायत इति शरीरेन्द्रियबुद्धयः, शरीराऽऽदीनाञ्च

---

क्वचित्सामानाधिकरण्यसम्भवेऽपि सर्वत्र न तथेति शङ्कते।—पुत्त्राऽऽदीनां फलनिर्देशात् सामानाधिकरण्यं न सम्भवतीति भावः॥ ५३॥

यद्यपि पुत्त्राऽऽदीनामैहिकफलत्वात् तत्राऽऽश्रयव्यतिरेकाभावात् शङ्कैव न, तथाऽपि यत्र जन्मान्तरीयधनाऽऽदिकमपि फलं स्यात्, तत्रापि नानुपपत्तिरित्याशयेनाऽऽह।—तत्सम्बन्धात पुत्त्राऽऽदिसम्बन्धात्, फलनिष्पत्तेः प्रीत्युत्पत्तेः, तेषु पुत्त्राऽऽदिषु, फलवदुपचारः फलत्वेन व्यपदेशः ; यथा,—"अन्नं वै प्राणिनां प्राणाः" इति॥ ५४॥

समाप्तं फलपरीक्षाप्रकरणम्।

अथ क्रमप्राप्तं दुःखं परीक्षणीयम् ; तत्र च "बाधनालक्षणं दुःखम्" इत्युक्तं,

संस्थानविशिष्टानां प्रादुर्भाव उत्पत्तिः, विविधा च बाधना,—हीना मध्यमोत्कृष्टा चेति। उत्कृष्टा नारकिणां, तिरश्चान्तु मध्यमा, मनुष्याणान्तु हीना, देवानां हीनतरा वीतरागाणाञ्च ; एवं सर्वमुत्पत्तिस्थानं विविधबाधनाऽनुषक्तं पश्यतः सुखे तत्साधनेषु च शरीरेन्द्रियबुद्धिषु दुःखसंज्ञा व्यवतिष्ठते, दुःखसंज्ञाव्यवस्थानात् सर्वलोकेष्वनभिरतिसंज्ञा भवति, अनभिरतिसंज्ञामुपासीनस्य सर्वलोकविषया तृष्णा विच्छिद्यते, तृष्णाप्रहाणात् सर्वदुःखाद्विमुच्यत इति। यथा विषयोगात् पयो विषमिति बुध्यमानो नोपादत्ते, अनुपाददानो मरणदुःखं नाप्नोति ॥ ५५ ॥

दुःखोद्देशस्तु न सुखस्य प्रत्याख्यानम् ; कस्मात् ?—

न सुखस्यान्तरालनिष्पत्तेः ॥ ५६ ॥

न खल्वयं दुःखोद्देशः सुखस्य प्रत्याख्यानम् ; कस्मात् ?—सुखस्यान्तरालनिष्पत्तेः, निष्पद्यते खलु बाधनाऽन्तरालेषु सुखं प्रत्यात्मवेदनीयं शरीरिणां, तदशक्यं प्रत्याख्यातुमिति ॥ ५६ ॥

अथापि,—

बाधनाऽनिवृत्तेर्वेदयतः पर्य्येषणदोषादप्रतिषेधः॥५७॥

सुखस्य दुःखोद्देशेनेति प्रकरणात् ; पर्य्येषणं प्रार्थना, विषयार्जनतृष्णा ; पर्य्येषणस्य दोषः,—यदयं वेदयमानः

तदर्थस्तु "दुःखत्वजातिमत्त्वम्" इत्युक्त, तच्च शरीराऽऽदौ दुःखेऽव्याप्तमित्याशङ्क्याऽऽह ।—जननयोगाज्जन्म शरीराऽऽद्रिकं, तदुत्पत्तिस्तत्सम्बन्धः, विविधबाधनायोगात् दुःखमिति व्यपदिश्यते, न तु वास्तवमेव तत् दुःखम् ; तथा च, विविधदुःखानुषक्ततया हेयत्वार्थं दुःखमिति भावनीयमुपदिश्यते ॥ ५५ ॥

ननु दुःखभावनेन किं सुखं प्रत्याख्यायते ? न चैतच्छक्यम्, अत आह ।—दुःखानां मध्ये सुखस्याप्युत्पत्तेस्तत्प्रत्याख्यानस्याशक्यत्वात् ॥ ५६ ॥

ननु सुखदुःखसम्बन्धाविशेषात् सुखभावनमेव किं नेष्यते ? इत्यत आह ।—दुःख

प्रार्थयते, तस्य प्रार्थितं न सम्पद्यते, सम्पद्य वा विपद्यते, न्यूनं वा सम्पद्यते, बहु प्रत्यनीकं वा सम्पद्यत इत्येतस्मात् पर्य्येषणदोषान्नानाविधो मानसः सन्तापो भवति ; एवं वेदयतः पर्य्येषणदोषाद्बाधनाया अनिवृत्तिः, बाधनाऽनिवृत्तेर्दुःखसंज्ञाभावनमुद्दिश्यते, अनेन कारणेन दुःखजन्म, न तु सुखस्याभावादिति। अथाप्येतदनूक्तम् ;—* "कामं कामयमानस्य यदा कामः समृध्यति। अथैनमपरः कामः क्षिप्रमेव प्रबाधते॥" * अपि चेदुदनेमिं समन्ताद्भूमिमिमां लभते सगवाश्वां, न स तेन धनेन धनैषी तृप्यति, किन्तु सुखं धनकाम इति॥ ५७॥

## दुःखविकल्पे सुखाभिमानाच्च॥ ५८॥

दुःखसंज्ञाभावनोपदेशः क्रियते। अयं खलु सुखसंवेदने व्यवस्थितः सुखं परमपुरुषार्थं मन्यते, न सुखादन्यन्निःश्रेयसमस्ति, सुखे प्राप्ते चरितार्थः कृतकरणीयो भवति, मिथ्यासङ्कल्पात् सुखे तत्साधनेषु च विषयेषु संरज्यते, संरक्तः सुखाय घटते, घटमानस्यास्य जन्मजराव्याधिप्रायणानिष्टसंयोगेष्टवियोगप्रार्थितानुपपत्तिनिमित्तमनेकविधं यावद्दुःखमुत्पद्यते, तं दुःखविकल्पं सुखमित्यभिमन्यते। सुखाङ्गभूतं दुःखं, न दुःखमनापाद्य शक्यं सुखमवाप्तुम् ; तादर्थ्यात् सुखमेवेदमिति सुखसंज्ञोपहतप्रज्ञो जायस्व म्रियस्व चेति सन्धावतीति संसारं नातिवर्त्तते ; तदस्याः सुखसंज्ञायाः प्रतिपक्षो दुःखसंज्ञाभावनमुपदिश्यते। दुःखानुषङ्गात् दुःखं जन्मेति, न सुखस्याभावात् ;

---

भावनस्य न प्रतिषेधः, वेदयतः सुखसाधनत्वं जानतः, पर्य्येषणदोषात् पर्य्येषणे सुखार्थप्रवर्त्तने, दोषात् ; सुखार्थं प्रवर्त्तमानो हि अर्जनपालनाऽऽदौ विविधाभिर्बाधनाभिरुपतप्यते, अतो दुःखभावनं वैराग्यहेतुतयोपदिश्यते॥ ५७॥

ननु दुःखमनुभवतः स्वत एव निवृत्तिसम्भवात् दुःखभावनोपदेशो व्यर्थः, इत्यत

यद्येवं, कस्मात् दुःखं जन्मेति नोच्यते ? सोऽयमेवं वाच्ये यदेवमाह,— दुःखमेव जन्मेति, तेन सुखाभावं ज्ञापयतीति। जन्मनिग्रहार्थीयो (थ) वै खल्वयमेवशब्दः ; कथम् ?—न दुःखं जन्म स्वरूपतः, किन्तु दुःखोपचारात् ; एवं सुखमपीति ; एतदनेनैव निवर्त्त्यते, न तु दुःखमेव जन्मेति ॥ ५८ ॥

दुःखोद्देशानन्तरमपवर्गः, स प्रत्याख्यायते,—

ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः ॥ ५९ ॥

ऋणानुबन्धान्नास्त्यपवर्गः। "जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवान् जायते, ब्रह्मचर्य्येण ऋषिभ्यः, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः" ( तैत्ति० सं० ६।३।१०।५ ) इति ऋणानि, तेषामनुबन्धः स्वकर्मभिः सम्बन्धः, कर्मसम्बन्धवचनात्,— "जरामर्य्यं वा एतत् सत्रं, यदग्निहोत्रं दर्शपूर्णमासौ च" इति, "जरया ह वा एष तस्मात् सत्राद्विमुच्यते, मृत्युना ह च" इति, ऋणानुबन्धादपवर्गानुष्ठानकालो नास्तीत्यपवर्गाभावः। क्लेशानुबन्धान्नास्त्यपवर्गः, क्लेशानुबद्ध एव जायते, नास्य क्लेशानुबन्ध-

---

माह।—दुःखस्य विविधः कल्पो यत्र तादृशे प्रतिषिद्धहिंसाभोजनमैथुनाऽऽदौ प्रवृत्तिर्मा भूदित्यर्थमुपदेश इति भावः ॥ ५८ ॥

समाप्तं दुःखपरीक्षाप्रकरणम्।

अथ क्रमप्राप्ततयाऽपवर्गः परीक्षणीयः। तत्र च तदर्थकप्रवृत्तिकालाभावात् तदभाव इति पूर्वपक्षयति।—ऋणाद्यनुबन्धादपवर्गानुष्ठानकालाभावादपवर्गाभावः स्यात् ; तथा च श्रूयते,—"जायमानो ह वै ब्राह्मणस्त्रिभिः ऋणैः ऋणवान् जायते, ब्रह्मचर्य्येण ऋषिभ्यः, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः" ( तैत्ति० सं० ६।३।१०।५ ) इति ऋषिभ्यः ऋष्यृणेभ्यो ब्रह्मचर्य्येण मुच्यते, देवेभ्यः देवर्णेभ्यः यज्ञेन मुच्यते, प्रजया अपत्येन पितृणेभ्यो मुच्यते, ऋणापाकरणेनैव च जीवनापगमः ; तथा च श्रूयते,—"जरामर्य्यं

---

(थ) जन्मनिग्रहार्थीयः इत्यस्य प्रयोगस्य मत्वर्थीयप्रयोगवत् साधुत्वम् ; जन्मनिग्रह एव अर्थः प्रवर्त्तते इत्यर्थः।

विच्छेदो गृह्यते। प्रवृत्त्यनुबन्धान्नास्त्यपवर्गः, जन्मप्रभृत्ययं यावत् प्रायणं वाग्बुद्धिशरीराऽऽरम्भेणाविमुक्तो गृह्यते, तत्र यदुक्तं,—"दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्गः" इति, तदनुपपन्नमिति ॥ ५९ ॥

अत्राभिधीयते, यत्तावदृणानुबन्धादिति ऋणैरिव ऋणैरिति,—

**प्रधानशब्दानुपपत्तेर्गुणशब्देनानुवादो निन्दाप्रशंसोपपत्तेः ॥ ६० ॥**

ऋणैरिति नायं प्रधानशब्दः, यत्र खल्वेकः प्रत्यादेयं ददाति, द्वितीयश्च प्रतिदेयं गृह्णाति, तत्रास्य दृष्टत्वात् प्रधानमृणशब्दः, न चैतदिहोपपद्यते ; प्रधानशब्दानुपपत्तेर्गुणशब्दे-

---

वा एतत्सत्रं, यदग्निहोत्रं दर्शपूर्णमासौ च", "जरया ह वा एष तस्मात् सत्राद्विमुच्यते, मृत्युना ह च" इति, ऋणापाकरणमन्तरेण च न तत्र प्रवृत्तिः ; तथा च स्मर्यते,—"ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्। अनपाकृत्य मोक्षन्तु सेवमानो पतत्यधः ॥" ; एवं क्लेशानुबन्धादपि पुरुषो हि रागाऽऽदिभिस्तत्तत्कर्माण्यारभमाणः क्लेशानुबिद्ध एव दृश्यते, तत् कथमपवर्गः ? एवं प्रवृत्त्यनुबन्धादपि पुरुषो हि वाग्बुद्धिशरीरैस्तत्तत्कर्माण्यारभमाणो धर्माधर्मौ यावज्जीवमुपार्जयन् कथमपवृज्यताम् ? इति ॥ ५९ ॥

समाधत्ते।—जायमान इत्याद्यनुवादो हि प्रधानशब्दः, न हि जायमानः कर्मण्यधिक्रियते ; तथा च भाष्यम् ;—यदा तु मातृतो जायते कुमारः, न तदा कर्मभिरधिक्रियते, अर्थिनः शक्तस्य चाधिकारादिति। जायमान इत्यनेन को वा व्यावर्त्तनीयः ?—न ह्यजातस्य प्रसक्तिरस्ति, येनासौ व्यावर्त्तनीयः ; तत्र भाष्यम् ;—जायमान इति गुणशब्दः, विपर्य्ययेऽनधिकारादिति। तथा च जायमान इत्यनेनोपनीत उच्यते, तस्य ब्रह्मचर्य्यादावधिकारात्, अग्निहोत्राऽऽदौ गृहस्थस्याधिकारः, "क्षौमे वसानौ वाऽधीयताम्" इति श्रुतेः ; एवमृणशब्दोऽपि न मुख्यः। न ह्यत्र प्रत्यादेयं कश्चन ददाति, परन्तु ऋणापाकरणवदावश्यकत्वख्यापनाय तथोक्तम्। लाक्षणिकशब्दप्रयोगे बीजमाह।—निन्दाप्रशंसोपपत्तेः ऋणानपाकरणतदपाकरणाभ्यामिवाग्नि-

नायमनुवादः ऋणैरिव ऋणैरिति ; प्रयुक्तोपमञ्चैतत् अग्निर्माणवक इति, अन्यत्र दृष्टश्चायमृणशब्द इह प्रयुज्यते, यथाऽग्निशब्दो माणवके । * कथं गुणशब्देनानुवादः ?—निन्दाप्रशंसोपपत्तेः । * कर्मलोपे ऋणीव ऋणादानान्निन्द्यते, कर्मानुष्ठाने च ऋणीव ऋणदानात् प्रशस्यते । * जायमान इति गुणशब्दः, विपर्य्ययेऽनधिकारात् । * "जायमानो ह वै ब्राह्मणः" ( तैत्ति० सं० ६।३।१०।५ ) इति च शब्दो गृहस्थः सम्पद्यमानो जायमान इति, यदाऽयं गृहस्थो जायते, तदा कर्मभिरधिक्रियते, मातृतो जायमानस्यानधिकारात् ; यदा तु मातृतो जायते कुमारः, न तदा कर्मभिरधिक्रियते, * अर्थिनः शक्तस्य चाधिकारात्, * अर्थिनः कर्मभिरधिकारः, कर्मविधौ कामसंयोगस्मृतेः, "अग्निहोत्रं जुहुयात् स्वर्गकामः" ( मैत्री० उप० ६।३६ ) इत्येवमादि । * शक्तस्य च प्रवृत्तिसम्भवात् * शक्तस्य कर्मभिरधिकारः, प्रवृत्तिसम्भवात् ; शक्तः खलु विहिते कर्मणि प्रवर्त्तते, नेतर इति । * उभयाभावस्तु प्रधानशब्दार्थे * मातृतो जायमाने कुमारे उभयमर्थिता शक्तिश्च न भवतीति । न भिद्यते च लौकिकाद्वाक्याद्वैदिकं वाक्यं, प्रेक्षापूर्वकारिपुरुषप्रणीतत्वेन ; तत्र लौकिकस्तावदपरीक्षकोऽपि न जातमात्रं कुमारकमेवं ब्रूयात्—अधीष्व यजस्व ब्रह्मचर्य्यं चरेति ; कुत एवम् ऋषिरुपपन्नानवद्यवादी उपदेशार्थेन प्रयुक्त उपदिशति ? न खलु वै नर्त्तकोऽन्धेषु प्रवर्त्तते, न गायको बधिरेष्विति । * उपदिष्टार्थविज्ञानञ्चोपदेशविषयः * यश्चोपदिष्टमर्थं विजानाति, तं प्रत्युपदेशः क्रियते, न चैतदस्ति जायमानकुमारक इति ।

---

होमाद्यकरणतत्करणाभ्यां निन्दाप्रशंसे उपपद्येते, न चानुष्ठानकालाभावः, जरया विमुच्यत इत्युक्तेः ; न च जरयाऽशक्तिरुपपद्यते, "अन्तेवासी वा जुहुयात्

गार्हस्थ्यलिङ्गञ्च मन्त्रब्राह्मणं कर्माभिवदति, यच्च मन्त्रब्राह्मणं कर्माभिवदति, तत् पत्नीसम्बन्धिना गार्हस्थ्यलिङ्गेनोपपन्नम्; तस्माद्गृहस्थोऽयं जायमानोऽभिधीयत इति। * अर्थित्वस्य चाविपरिणामे जरामर्य्यवादोपपत्तेः, * यावच्चास्य फलेनार्थित्वं न विपरिणमते, न निवर्त्तते, तावदनेन कर्मानुष्ठेयम्, इत्युपपद्यते जरामर्य्यवादस्तं प्रतीति, जरया ह वेत्यायुषस्तुरीयस्य चतुर्थस्य प्रव्रज्यायुक्तस्य वचनम्; जरया ह वेष एतस्माद्विमुच्यत इति, आयुषस्तुरीयं चतुर्थं प्रव्रज्यायुक्तं जरेत्युच्यते; तत्र हि प्रव्रज्या विधीयते, अत्यन्तजरासंयोगे जरया ह वेत्यनर्थकम्; अशक्तो विमुच्यत इत्येतदपि नोपपद्यते, स्वयमशक्तस्य वाह्यां शक्तिमाह,—"अन्तेवासी वा जुहुयाद्ब्रह्मणा स परिक्रीतः", "क्षीरहोता वा जुहुयाद्धनेन स परिक्रीतः" इति। * अथापि विहितं वाऽनूद्येत, कामाद्वाऽर्थः परिकल्प्येत, विहितानुवचनं न्याय्यमिति, * ऋणवानिवास्वतन्त्रो गृहस्थः कर्मसु प्रवर्त्तते, इत्युपपन्नं वाक्यस्य सामर्थ्यम्; फलस्य हि साधनानि, प्रयत्नविषयः न फलम्; तानि सम्पन्नानि फलाय कल्पन्ते, विहितञ्च जायमानं, विधीयते च जायमानम्; तेन यः सम्बध्यते, सोऽयं जायमान इति। * प्रत्यक्षविधानाभावादिति चेत्, न; प्रतिषेधस्यापि प्रत्यक्षविधानाभावादिति। * प्रत्यक्षतो विधीयते गार्हस्थ्यं ब्राह्मणेन, यदि चाऽऽश्रमान्तरमभविष्यत्, तदपि व्यधास्यत प्रत्यक्षतः, प्रत्यक्षविधानाभावान्नास्त्याश्रमान्तरमिति न, प्रतिषेधस्य प्रत्यक्षविधानाभावात्; न प्रतिषेधोऽपि वै ब्राह्मणेन प्रत्यक्षतो विधीयते, न सन्त्याश्रमान्तराणि, एक एव

ब्रह्मणा स परिक्रीतः" इत्यादिनाऽशक्तस्यापि विधानात्, तस्मादायुषश्चतुर्थभागो जरेत्युच्यते। किञ्च जरामर्य्यवादः कामनाऽभिप्रायेण; तथा च भाष्यम्;—अर्थित्वस्य

गृहस्थाऽऽश्रम इति प्रतिषेधस्य प्रत्यक्षतोऽश्रवणादयुक्तमेतदिति ॥ ६० ॥

अधिकाराच्च विधानं विद्यान्तरवत् ॥ ६१ ॥

यथा शास्त्रान्तराणि स्वे स्वेऽधिकारे प्रत्यक्षतो विधायकानि, नार्थान्तराभावात्; एवमिदं शास्त्रं गृहस्थशास्त्रं स्वेऽधिकारे प्रत्यक्षतो विधायकं, नाऽऽश्रमान्तराणामभावादिति । * ऋग्ब्राह्मणञ्चापवर्गाभिधाय्यभिधीयते । * ऋचश्च ब्राह्मणानि चापवर्गाभिवादीनि भवन्ति । ऋचश्च तावत्,—"कर्मभिर्मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमिच्छमानाः । अथापरे ऋषयो मनीषिणः परं कर्मभ्योऽमृतत्वमानशुः ॥" । "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" ( कैव० उप० २ श्लोकः ) । "परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति" ( कैव० उप० ३ श्लोकः ) । "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् । तमेव विदित्वा अतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥" ( श्वेता० उप० ३ अध्या० ८ मन्त्रः ) । अथ ब्राह्मणानि—"त्रयो धर्मस्कन्धाः,—यज्ञोऽध्ययनं दानमिति; प्रथमस्तप एव, द्वितीयो ब्रह्मचार्य्याचार्य्यकुलवासी, तृतीयोऽत्यन्तमात्मानमाचार्य्यकुलेऽवसादयन्; सर्वं एवैते पुण्यलोका भवन्ति, ब्रह्मसंस्थोऽमृतत्वमेति" ( छान्दो० उप० २ अध्या० २३ खण्डः० २ मन्त्रः ) । "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्तीति" ( बृह० उप० ४ अध्या० ४ ब्राह्म० २२ मन्त्रः ) । "अथो खल्वाहुः, काममय एवायं पुरुष इति, स यथाकामो भवति, तत्क्रतुर्भवति, यत्क्रतु॰

---

चापरिणामि जरामर्य्यवादोपपत्तेरिति । अर्थित्वं कामना, तदपरिणामि तदनाशि, कर्मकरणाभिप्रायेण जरामर्य्यवाद उपपद्यते ॥ ६० ॥

भवति, तत्कर्म कुरुते, यत्कर्म कुरुते, तदभिसम्पद्यते," ( बृह० उप० ४ अध्या० ४ ब्राह्म० ५ मन्त्रः) इति कर्मभिः संसरणमुक्त्वा प्रकृतमन्यदुपदिशन्ति, "—इति नु कामयमानोऽथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामः, न तस्य प्राणा उत्क्रामन्ति, अत्रैव समवनीयन्ते, (द) ब्रह्मैव सन् ब्रह्माप्येति" इति ( बृह० उप० ४ अध्या० ४ ब्राह्म० ६ मन्त्रः )। तत्र यदुक्तम्,—ऋणानुबन्धादपवर्गाभाव इत्येतदयुक्तमिति। ये "चत्वारः पथयो देवयानाः" इति च चातुराश्रम्यश्रुतेरैकाऽऽश्रम्यानुपपत्तिः; फलार्थिनश्चेदं ब्राह्मणं,—"जरामर्य्यं वा एतत् सत्रं, यदग्निहोत्रं दर्शपूर्णमासौ च" इति ॥ ६१ ॥

कथम्?—

समारोपणादात्मन्यप्रतिषेधः ॥ ६२ ॥

"प्राजापत्यामिष्टिं निरूप्य तस्यां सार्ववेदसं हुत्वा आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेत्" इति श्रूयते, तेन विजानीमः, प्रजावित्तलोकैषणाभ्यो व्युत्थितस्य निवृत्ते फलार्थित्वे समारोपणं विधीयते इति। एवञ्च ब्राह्मणानि, "—अथ ह याज्ञवल्क्योऽन्यद्वृत्तमुपाकरिष्यन्। मैत्रेयीति होवाच याज्ञवल्क्यः, प्रव्रजिष्यन् वा अरे अहमस्मात्स्थानादस्मि, हन्त तेऽनया कात्यायन्याऽन्तं करवाणि" ( बृह० उप० ४ अध्या० ५ ब्राह्म०

ननु काम्यानां कामनाविरहेण त्यागसम्भवेऽपि नित्यानां कथं त्यागः?—श्रूयते हि,—"यावज्जीवमग्निहोत्रं जुहुयात्" इति। तत्राऽऽह,—अपवर्गप्रतिषेधो न युक्तः, अग्नीनाम् आत्मनि समारोपविधानात्। श्रूयते—"प्राजापत्यामिष्टिं निरूप्य तस्यां

(द) "समवनीयन्ते—एकीभावेन समवसृज्यन्ते, प्रलीयन्त इत्यर्थः" इति भाष्यम्। "अत्रैव समवनीयन्ते" इत्यंशस्तु नृसिंहोत्तरतापन्यां प्रणवोपनिषदि ५म खण्डान्ते दृश्यते।

१।२ मन्त्रौ )। "इत्युक्तानुशासनाऽसि मैत्रेयि एतावदरे खल्व-मृतत्वम्, इति होक्त्वा याज्ञवल्क्यः विजहार" ( बृह० उप० ४ अध्या० ५ ब्राह्म० १५ मन्त्रः ) ॥ ६२ ॥

पात्रचयान्तानुपपत्तेश्च फलाभावः ॥ ६२ ॥ क ॥

जरामर्य्ये च कर्मव्यविशेषेण कल्प्यमाने सर्वस्य पात्रचयान्तानि कर्माणि इति प्रसज्यते, तत्र एषणा व्युत्थानं न श्रूयते,—"एतद्ध स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते, किं प्रजया करिष्यामः। येषां नोऽयमात्माऽयं लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षा-

सार्ववेदसं हुत्वाऽऽत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेत्" इति ; अत एव "चत्वारः पन्थानो देवयानाः" इति चातुराश्रम्यश्रुतिरपि सङ्गच्छते ॥ ६२ ॥

नन्वग्निहोत्रस्याप्रतिबन्धकत्वेऽपि तत्फलस्वर्गे एवापवर्गप्रतिबन्धकः स्यादत्राऽऽह ।—ज्ञानिनः फलस्य स्वर्गस्य, अभावः, अग्निहोत्रं हि पात्रचयान्तं, पात्राण्यग्निहोत्रपात्राणि, तेषाञ्चयः प्रमीतस्य यजमानस्याङ्गेषु विन्यासः, मुखे घृतपूर्णां स्रुचमिति क्रमेण ; भिक्षोस्तदनुपपत्तेः, तेन तत्परित्यागात् अग्निहोत्रफलाभावेऽपि ज्योतिष्टोमगङ्गास्नानादिहिंसाऽऽदिफलानां प्रतिबन्धकत्वं स्यात्, अतो हेत्वन्तरसमुच्चयाय चकार उपन्यस्तः ; तथा च, प्रारब्धातिरिक्तकर्मणां ज्ञानादेव चय इत्याशयः ; श्रूयते हि,—"तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" ( मुण्ड० उप० ३मु० १ खण्ड, ३ मन्त्रः ), एवं,—"क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" (मुण्ड० उप० २मु० २खण्ड० ८ मन्त्रः)। स्मर्यते,—"ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा" इति ( गीता० ४ अध्या० ३७ श्लोकः )। इत्थञ्च कामनाशून्यस्य प्रजाऽनुत्पादोऽपि नापवर्गविरोधी ; तथा च श्रूयते,—"एतद्ध स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते, किं प्रजया करिष्यामः, येषां नोऽयमात्माऽयं लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय भिक्षाचर्य्यं चरन्ति" इति ( बृह० उप० ४ अध्या० ४ ब्राह्म० २२ मन्त्रः )' ; अन्ये तु,—"फलाभावः फलस्य मुमुक्षून् प्रति अग्निहोत्राऽऽदौ प्रयोजकत्वाभावः, तथा सति भिक्षूणामपि पात्रचयान्तं स्यात् इत्यर्थः" इत्याहुः। इति वृत्तिसम्मतम् अधिकसूत्रम् ॥ ६२ ॥ क ॥

चर्य्यं चरन्ति” (बृह० उप० ४ अध्या० ४ ब्राह्म० २२ मन्त्रः) इति एवञ्चाभ्यस्य व्युत्थितस्य पात्रचयान्तानि कर्म्माणि नोपपद्यन्त इति, नाविशेषेण कर्त्तुः प्रयोजकफलं भवतीति। चातुराश्रम्य-विधानाच्चेतिहास-पुराण-धर्म्मशास्त्रेष्वैकाऽऽश्रम्यानुपपत्तिः। तद-प्रमाणमिति चेत्, न ; प्रमाणेन प्रामाण्याभ्यनुज्ञानात्; प्रमाणेन खलु ब्राह्मणेनेतिहासपुराणस्य प्रामाण्यमभ्यनुज्ञायते, ते वा खल्वेते अथर्व्वाऽऽङ्गिरस एतदितिहासपुराणमभ्यवदन्, इतिहास-पुराणं पञ्चमं वेदानां वेद इति, तस्मादयुक्तमेतदप्रामाण्यमिति। अप्रामाण्ये च धर्म्मशास्त्रस्य प्राणभृतां व्यवहारलोपाल्लोकोच्छेद-प्रसङ्गः। * द्रष्टृप्रवक्तृसामान्याच्चाप्रामाण्यानुपपत्तिः। * य एव मन्त्रब्राह्मणस्य द्रष्टारः प्रवक्तारश्च, ते खल्वितिहास पुराणस्य धर्म्मशास्त्रस्य चेति। * विषयव्यवस्थानाच्च यथाविषयं प्रामाण्यम् * अन्यो मन्त्रब्राह्मणस्य विषयः, अन्यश्चेतिहासपुराणधर्म्मशास्त्राणा-मिति ; यज्ञो मन्त्रब्राह्मणस्य, लोकवृत्तमितिहासपुराणस्य, लोकव्यवहारव्यवस्थानं धर्म्मशास्त्रस्य विषयः ; तत्रैकेन सर्व्वं व्यवस्थाप्यत इति, यथाविषयमेतानि प्रमाणानीन्द्रियादिवदिति। यत् पुनरेतत् क्लेशानुबन्धस्याविच्छेदादिति,—

**सुषुप्तस्य स्वप्नादर्शने क्लेशाभावादपवर्गः ॥ ६२ ॥**

यथा सुषुप्तस्य खलु स्वप्नादर्शने रागानुबन्धः सुखदुःखानु-बन्धश्च विच्छिद्यते, तथाऽपवर्गेऽपीति। एतच्च ब्रह्मविदो मुक्त-स्याऽऽत्मनो रूपमुदाहरन्तीति ॥ ६२ ॥

---

क्लेशानुबन्धं दूषयति।—स्वप्नादर्शनकाले सुषुप्तस्य यथा क्लैभावेन दुःखाभावः, तथाऽपवर्गेऽपि रागाद्यभावेन दुःखाभावः स्यात् ॥ ६२ ॥

यदपि प्रवृत्त्यनुबन्धादिति,—

**न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य ॥ ६४ ॥**

प्रक्षीणेषु रागद्वेषमोहेषु प्रवृत्तिर्न प्रतिसन्धानाय, पूर्वसन्धिस्तु पूर्वजन्मनिवृत्तौ पुनर्जन्म, तच्चादृष्टकारितं, तस्यां प्रहीणायां पूर्वजन्माभावे जन्मान्तराभावोऽप्रतिसन्धानमपवर्गः । * कर्मवैकल्यप्रसङ्ग इति चेत्, न ; कर्मविपाकप्रतिसंवेदनस्याप्रत्याख्यानात् ; * पूर्वजन्मनिवृत्तौ पुनर्जन्म न भवतीत्युच्यते, न तु कर्मविपाकप्रतिसंवेदनं प्रत्याख्यायते, सर्वाणि पूर्वकर्माणि ह्यन्ते जन्मनि विपच्यन्त इति ॥ ६४ ॥

**न क्लेशसन्ततेः स्वाभाविकत्वात् ॥ ६५ ॥**

नोपपद्यते क्लेशानुबन्धविच्छेदः ; कस्मात् ?—क्लेशसन्ततेः स्वाभाविकत्वात् ; अनादिरियं क्लेशसन्ततिः, न चानादिः शक्य उच्छेत्तुमिति ॥ ६५ ॥

अत्र कश्चित् परिहारमाह,—

**प्रागुत्पत्तेरभावानित्यत्ववत् स्वाभाविकेऽप्यनित्यत्वम् ॥ ६६ ॥**

यथाऽनादिः प्रागुत्पत्तेरभाव उत्पन्नेन भावेन निवर्त्त्यते, एवं स्वाभाविकी क्लेशसन्ततिरनित्येति ॥ ६६ ॥

---

प्रवृत्त्यनुबन्धादपवर्गाभावं दूषयति ।—क्लिश्यन्तेऽनेनेति क्लेशो रागादिः तद्विरहितस्य, या प्रवृत्तिः, सा प्रतिसन्धानाय प्रतिबन्धाय, न भवति, धर्माधर्मौ न जनयतीत्यर्थः ॥ ६४ ॥

क्लेशाभावमसहमानः शङ्कते ।—क्लेशसन्ततेरुच्छेदो न युक्तः, स्वाभाविकत्वात् ॥ ६५ ॥

अपर आह,—

**अणुश्यामताऽनित्यत्ववद्वा ॥ ६७ ॥**

यथाऽनादिरणुश्यामता, अथ चाऽग्निसंयोगादनित्या, तथा क्लेशसन्ततिरपीति ॥ ६७ ॥

सतः खलु धर्मो नित्यत्वमनित्यत्वञ्च, तत्त्वभावे ( तत्तु अभावे ) भाक्तमिति, अनादिरणुश्यामतेति हेत्वभावादयुक्तम्, अनुत्पत्तिधर्म्मकमनित्यमिति नात्र हेतुरस्तीति। अयं तु समाधिः,—

**न सङ्कल्पनिमित्तत्वाच्च रागादीनाम् ॥ ६८ ॥**

कर्मनिमित्तत्वादितरेतरनिमित्तत्वाच्चेति समुच्चयः। मिथ्यासङ्कल्पेभ्यो रञ्जनीय-कोपनीय-मोहनीयेभ्यः रागद्वेषमोहा उत्पद्यन्ते, कर्म च सत्त्वनिकायनिर्वर्त्तकं नैयमिकान् रागद्वेषमोहान निर्वर्त्तयति, नियमदर्शनात्; दृश्यते हि कश्चित्सत्त्वनिकायो रागबहुलः, कश्चिद्द्वेषबहुलः, कश्चिन्मोहबहुल इति। इतरेतरनिमित्ता च रागादीनामुत्पत्तिः, मूढो रज्यति, मूढः कुप्यति, रक्तो मुह्यति, कुपितो मुह्यति। सर्वमिथ्यासङ्कल्पानां तत्त्वज्ञानादनुत्पत्तिः; कारणानुत्पत्तौ च कार्य्यानुत्पत्तेरिति, रागाऽऽदीनामत्यन्तमनुत्पत्तिरिति। अनादिश्च क्लेशसन्ततिरित्ययुक्तम्; सर्व इमे खल्वाध्यात्मिका भावा अनादिना प्रबन्धेन प्रवर्त्तन्ते शरीराऽऽदयः, न जात्वत्र कश्चिदनुत्पन्नपूर्वः प्रथमत

---

एकदेशी समाधत्ते।—प्रागुत्पत्तेरभावानित्यत्ववत् प्रागभावानित्यत्ववत्, अनादेः परमाणुश्यामताया विनाशवद्वा विनाशः ॥ ६६ ॥ ६७ ॥

अनित्यत्वं विनाशिभावत्वं, न च तत् प्रागभावे, न वाऽणुश्यामताऽऽदिरनादिः; तथा च भाष्यम्;—अनादिरणुश्यामतेति हेत्वभावादयुक्तम्। इत्यतो मतद्वयमुपेत्य सिद्धान्तमाह।—नोक्तं युक्तम्; कुतः?—रागाऽऽदीनां सङ्कल्पनिमित्तत्वात् सङ्कल्पो

उत्पद्यते, अन्यत्र तत्त्वज्ञानात्। न चैवं सत्यनुत्पत्तिधर्मकं किञ्चिदपायधर्मकं प्रतिज्ञायत इति ; कर्म च सत्त्वनिकाय-निर्वर्त्तकं तत्त्वज्ञानकृतात् मिथ्यासङ्कल्पविघाताम्न रागाद्युत्पत्ति-निमित्तं भवति, सुखदुःखसंवित्तिफलन्तु भवतीति ॥ ६८ ॥

इति वात्स्यायनीये न्यायभाष्ये चतुर्थाध्यायस्याऽऽद्यमाह्निकम्।

## चतुर्थाध्यायस्य द्वितीयमाह्निकम्।

किन्नु खलु भो यावन्तो विषयाः, तावत्सु प्रत्येकं ज्ञान-मुत्पद्यते ? अथ क्वचिदुत्पद्यते ? इति। कस्मात्र विशेषः ?—न तावदेकैकत्र यावद्विषयमुत्पद्यते, ज्ञेयानामानन्त्यात् ; नापि क्वचिदुत्पद्यते, यत्र नोत्पद्यते, तत्रानिवृत्तो मोह इति मोहशेषप्रसङ्गः, न चान्यविषयेण तत्त्वज्ञानेनान्यविषयो मोहः शक्यः प्रतिषेद्धुमिति। (ध) मिथ्याज्ञानं वै खलु मोहः, न तत्त्वज्ञानस्यानुत्पत्तिमात्रम् ; तच्च मिथ्याज्ञानं यत्र विषये प्रवर्त्तमानं संसारबीजं भवति, स विषयस्तत्त्वतो ज्ञेय इति। किं पुनस्तन्मिथ्याज्ञानम् ?—अनात्मन्यात्मग्रहः ; अहमस्मीति

मिथ्याज्ञानं निमित्तं येषाम् ; तथा च, तत्त्वज्ञानेन मिथ्याज्ञाननिवृत्तौ रागाऽऽदिनिवृत्ति-र्युज्यत एवेति भावः ॥ ६८ ॥

समाप्तमपवर्गपरीक्षाप्रकरणम्।

समाप्तं चतुर्थाध्यायस्य प्रथममाह्निकम् ॥ १ ॥

(ध) सिद्धान्ती वदति।

मोहोऽहङ्कार इति, अनात्मानं खल्वहमस्मीति पश्यतो दृष्टिरहङ्कार इति । किं पुनस्तदर्थजातं यद्विषयोऽहङ्कारः ?—शरीरेन्द्रियमनोवेदनाबुद्धयः अर्थजातम् । कथं तद्विषयोऽहङ्कारः संसारबीजं भवति ?—अयं खलु शरीराद्यर्थजातमहमस्मीति व्यवसितः, तदुच्छेदेनाऽऽत्मोच्छेदं मन्यमानोऽनुच्छेदतृष्णापरिप्लुतः पुनः पुनस्तदुपादत्ते, तदुपाददानो जन्ममरणाय यतते, तेनावियोगान्नात्यन्तं दुःखाद्विमुच्यत इति । यस्तु दुःखं दुःखाऽऽयतनं दुःखानुषक्तं सुखञ्च सर्वमिदं दुःखमिति पश्यति, स दुःखं परिजानाति, परिज्ञातञ्च दुःखं प्रहीणं भवत्यनुपादानात् सविषान्नवत्; एवं दोषान् कर्म च दुःखहेतुरिति पश्यति, न चाप्रहीणेषु दोषेषु दुःखप्रबन्धोच्छेदेन शक्यं भवितुमिति दोषान् जहाति, प्रहीणेषु च दोषेषु न प्रवृत्तिः प्रतिसन्धानायेत्युक्तम् ; प्रेत्यभावफलदुःखानि च ज्ञेयानि व्यवस्थापयति कर्म च दोषांश्च प्रहेयान्, अपवर्गोऽधिगन्तव्यः, तस्याधिगमोपायस्तत्त्वज्ञानम्. एवं चतसृभिर्विधाभिः प्रमेयं विभक्तमासेवमानस्याभ्यस्यतो भावयतः सम्यग्दर्शनं यथाभूतावबोधस्तत्त्वज्ञानमुत्पद्यते ; एवञ्च—

**दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः ॥१॥**

शरीरादि दुःखान्तं प्रमेयं दोषनिमित्तं, तद्विषयत्वान्मिथ्याज्ञानस्य ; तदिदं तत्त्वज्ञानं तद्विषयमुत्पन्नमहङ्कारं निवर्त्तयति,

---

अथ शास्त्रस्य परमं प्रयोजनमपवर्गः, स चोद्दिष्टो लक्षितः परीक्षितोऽप्यकिञ्चित्करः, कारणानिरूपणात् ; नन्वभिहितमेव दुःखाऽऽदिसूत्रे—कारणनाशक्रमेण-दुःखाभावोऽपवर्ग इति, इति चेत्सत्यं, मिथ्याज्ञानापगमहेतुर्नाभिहितः ; तत्त्वज्ञानं तत्र हेतुरिति चेत् ?—कस्य तत्त्वं ज्ञातव्यमित्यभिधानीयमित्याशयेन तत्त्वज्ञानपरीक्षा, सैव चाऽऽह्निकार्थः । तत्र च षट् प्रकरणानि,—आदौ तत्त्वज्ञानोत्पत्तिप्रकरणम्, अन्यानि च यथायथं वक्ष्यन्ते ; तत्र सिद्धान्तसूत्रम् ।—अहङ्कारोऽहमित्यभिमानः, स च शरीराऽऽदिविषयको मिथ्याज्ञानमुच्यते, तत्र दोषनिमित्तानां शरीराऽऽदीनां, तत्त्वस्य

समानविषये तयोर्विरोधात् ; एवं तत्त्वज्ञानाद्दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति, स चायं शास्त्रार्थसङ्ग्रहोऽनूद्यते, नापूर्वो विधीयत इति ॥ १ ॥

प्रसङ्ख्यानाऽऽनुपूर्व्या तु खलु,—

## दोषनिमित्तं रूपादयो विषयाः सङ्कल्पकृताः ॥२॥

कामविषया इन्द्रियार्था इति रूपादय उच्यन्ते, ते मिथ्यासङ्कल्प्यमाना रागद्वेषमोहान् प्रवर्त्तयन्ति, तान् पूर्वं प्रसञ्चक्षीत, तांश्च प्रसञ्चक्षाणस्य रूपाऽऽदिविषयो मिथ्यासङ्कल्पो निवर्त्तते, तन्निवृत्तावध्यात्मं शरीराऽऽदि प्रसञ्चक्षीत, तत्प्रसङ्ख्यानादध्यात्मविषयोऽहङ्कारो निवर्त्तते, सोऽयमध्यात्मं बहिश्च विविक्तचित्तो विहरन् मुक्त इत्युच्यते ॥ २ ॥

अतः परं काचित् संज्ञा हेया, काचिद्भावयितव्येत्युपदिश्यते, नार्थनिराकरणमर्थोपादानं वा ; कथमिति ?—

## तन्निमित्तन्त्ववयव्यभिमानः ॥ ३ ॥

तेषां दोषाणां निमित्तन्त्ववयव्यभिमानः ; सा च खलु स्त्रीसंज्ञा सपरिष्कारा पुरुषस्य, पुरुषसंज्ञा च स्त्रियाः, परिष्कारश्च निमित्तसंज्ञा अनुव्यञ्जनसंज्ञा च। निमित्तसंज्ञा—

---

चनात्मत्वस्य, ज्ञानान्निवर्त्तते, आत्मत्वेन हि शरीराऽऽदौ मुह्यन् रञ्जनीयत्वात् रज्यति, कोपनीयेषु कुप्यति। केचित्तु,—"दोषनिमित्तानां रागाऽऽदीनां, तत्त्वज्ञानाद्बलवदनिष्टानुबन्धित्वज्ञानात्, अहङ्कारस्याभिलाषस्य, निवृत्तिरित्यर्थः" इत्याहुः ॥ १ ॥

ननु के तावदनुरञ्जनीया विषयाः, येषु रज्यन् संसरति ? इत्यतो विवेकाय तानुपदिशति।—सङ्कल्पः समीचीनत्वेन भावनं, तद्विषयीकृता रूपाऽऽदयः दोषस्य रागाऽऽदेः, निमित्तम् ; सुन्दरीयमिति जानन् रज्यति, असुन्दरमिति द्वेष्टि, ते रूपाऽऽदयः हेयत्वेन भावनीयाः प्रथमं, ततः शरीराऽऽत्मविवेकः ॥ २ ॥

ननु सौन्दर्याऽऽदिकं पश्यतो रागाऽऽदिर्ज्ञानिनोऽपि दुष्परिहरः ; तदुक्तं,—"चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम्" इत्यतो रागाऽऽदिनिवृत्त्युपायं दर्शयिष्यन्नाह।—

रसनाघ्राणं दन्तोष्ठं चक्षुर्नासिकम्। अनुव्यञ्जनसंज्ञा—इत्थं दन्ताः, इत्थमोष्ठाविति। सेयं संज्ञा कामं वर्द्धयति तदनुषक्तांश्च दोषान् विवर्जनीयान्; वर्जनन्त्वस्याः, भेदेनावयवसंज्ञा; केश-लोममांसशोणितास्थिस्नायुशिराकफपित्तोच्चारादिसंज्ञा, तामशुभसंज्ञेत्याचक्षते, तामस्य भावयतः कामरागः प्रहीयते, सत्येव द्विविधे विषये काचित् संज्ञा भावनीया, काचित् परिवर्ज-नीयेत्युपदिश्यते, यथा विषसम्पृक्तेऽन्नेऽन्नसंज्ञोपादानाय विषसंज्ञा प्रहाणायेति ॥ ३ ॥

अथेदानीमर्थं निराकरिष्यताऽवयव्युपपाद्यते,—

विद्याऽविद्याद्वैविध्यात् संशयः ॥ ४ ॥

सदसतोरुपलम्भाद्विद्या द्विविधा, सदसतोरनुपलम्भाद-विद्याऽपि द्विविधा, उपलभ्यमानेऽवयविनि विद्याद्वैविध्यात्

---

अवयविनि तरुण्यादिशरीरे, अभिमानः परिष्कारबुद्धिः, तन्निमित्तं रागाऽऽदिनिमित्तम्; तथा च, सा बुद्धिर्हेया। अत एव भाष्याऽऽदौ परिष्कारबुद्धिरनुरञ्जनसंज्ञा, सा हेया; दोषदर्शनमशुभसंज्ञा, सा भावनीयेति। अनुरञ्जनसंज्ञा यथा,—"खेलत्-खञ्जननयना परिणतबिम्बाधरा पृथुश्रोणी। कमलमुकुलस्तनीयं पूर्णेन्दुमुखी सुखाय मे भविता॥" इति। अशुभसंज्ञा यथा,—"चर्मनिर्मितपात्रीयं मांसासृक्पूय-पूरिता। अस्यां रज्यति यो मूढः पिशाचः कस्ततोऽधिकः?॥" स्वशरीराऽऽदौ अप्यशुभसंज्ञैव भावनीया; एवं कोपनीयेऽपि शुभसंज्ञा। "मां द्वेष्यसौ दुराचार दुष्टो निष्ठुरचेष्टितः। कण्ठपीठं कुठारेण छित्वाऽस्य स्यां सुखी कदा?॥" अशुभसंज्ञा तु,—"मांसासृक्कीकसमयो देहः किं मेऽपराध्यति। एतस्मादपरः कर्त्ता कर्त्तनीयः कथं मया॥" इति ॥ ३ ॥

समाप्तं तत्त्वज्ञानोत्पत्तिप्रकरणम्।

अथ प्रसङ्गादवयविप्रकरणम्; वस्तुतस्तु शरीरे धर्मद्वयस्य सत्त्वेऽपि एकं ध्येयमपरं हेयमिति निर्युक्तिकम्, अतोऽवयवी नास्ति, किन्तु परमाणुपुञ्ज इति तत्त्वं, तदेव तन्मुमुक्षुभिर्भावनीयम्; परमाणुपुञ्ज इत्यप्यापाततः परमाणोरप्यग्रे निराकरिष्यमाणत्वादिति सौगतशङ्कामपाकर्त्तुमयमारम्भः। यद्यपि द्वितीयाध्याये

संशयः, अनुपलभ्यमाने चाविद्याद्वैविध्यात् संशयः ; सोऽयमवयवी यद्युपलभ्यते, अथापि नोपलभ्यते, न कथञ्चन संशयात् मुच्यत इति ॥ ४ ॥

## तदसंशयः पूर्वहेतुप्रसिद्धत्वात् ॥ ५ ॥

तस्मिन्ननुपपन्नः संशयः ; कस्मात् ?—पूर्वोक्तहेतूनामप्रतिषेधात्, अस्ति द्रव्यान्तराऽऽरम्भ इति ॥ ५ ॥

## वृत्त्यनुपपत्तेरपि तर्हि संशयानुपपत्तिः ॥६॥

वृत्त्यनुपपत्तेरपि तर्हि संशयानुपपत्तिर्नास्ति अवयवीति ॥६॥

तद्विभजते,—

## कृत्स्नैकदेशावृत्तित्वादवयवानामवयव्यभावः ॥७॥

एकैकोऽवयवो न तावत् कृत्स्नेऽवयविनि वर्त्तते, तयोः परिमाणभेदादवयवान्तरसम्बन्धाभावप्रसङ्गाच्च । नाप्यवयव्येकदेशेन, न ह्यस्यान्येऽवयवा एकदेशभूताः सन्तीति ॥ ७ ॥

---

व्यवस्थापित एवावयवी, तथाऽपि स्वयुक्तिदार्ढ्येन सौत्रान्तिकस्य वैभाषिकस्य चाव प्रत्यवस्थानमिति ; तत्र संशयप्रदर्शनाय सूत्रम् ।—संशय इत्यस्य अवयविनीत्यादिः, अवयविनः प्रत्यक्षसिद्धत्वात् तदपलापो दुःशक्यः, इत्यत उक्तं विद्येति ।— प्रमाणभेदेन ज्ञानद्वैविध्यात् ज्ञानत्वलक्षणसाधारणधर्मदर्शनात् ज्ञाने प्रामाण्यसंशयादवयविनि संशय इत्यर्थः ॥ ४ ॥

समाधत्ते ।—तत्रावयविनि, न संशयः, पूर्वहेतुप्रसिद्धत्वात् द्वितीयाध्यायोक्तयुक्तिभिरवयविनः प्रकर्षेण सिद्धत्वात् ॥ ५ ॥

अवयविनि बाधकं शङ्कते ।—अपिरवधारणे ; तर्हि संशयानुपपत्तिर्वृत्त्यनुपपत्तितोऽवयव्यभावादेव स्यादित्यर्थः । वृत्त्यनुपपत्तिं विवृणोति भाष्यकारः,—कृत्स्नैकदेशावृत्तित्वादवयवानामवयव्यभावः । अवयवी हि एकैकावयवे कार्त्स्न्येन एकदेशेन वा ?—नाऽऽद्यः, विषमपरिमाणत्वात् ; अन्त्योऽपि तेनैवावयवेनान्येन वा ?—नाऽऽद्यः, स्वस्मिन् वृत्तिविरोधात् ; नान्त्यः, अवयवान्तरस्यावयवान्तरावृत्तेः । तथाऽपि कथमवयव्यभाव इत्यत्र भाष्यम् ;—तेषु चावृत्तेरवयव्यभावः, तेषु अवयवेषु, पूर्वोक्तयुक्त्या अभावादवयवी नास्ति, न त्वसावृत्तिकत्वेनाऽभ्युपेयत इति भावः । सूत्रमिदमित्यपि वदन्ति ॥६॥

अथावयवेष्वेवावयवी वर्त्तते,—

तेषु चावृत्तेरवयव्यभावः ॥ ८ ॥

न तावत् प्रत्यवयवं वर्त्तते, तयोः परिमाणभेदात् द्रव्यस्य चैकद्रव्यत्वप्रसङ्गात् । नाप्येकदेशेन सर्वेषु, अन्यावयवाभावात्, तदेवं युक्तः संशयो नास्त्यवयवीति ॥ ८ ॥

पृथक्चावयवेभ्योऽवृत्तेः ॥ ९ ॥

पृथक् चावयवेभ्यः, धर्मिभ्यो धर्मस्याग्रहणादिति समानम् ॥ ९ ॥

न चावयव्यवयवाः ॥ १० ॥

॥ १० ॥

एकस्मिन् भेदाभावाद्भेदशब्दप्रयोगानुपपत्तेरप्रश्नः ॥ ११ ॥

किं प्रत्यवयवं कृत्स्नोऽवयवी वर्त्तते ?—अथैकदेशेन ? इति नोपपद्यते प्रश्नः ; कस्मात् ?—एकस्मिन् भेदाभावाद्भेदशब्द-

---

नन्वास्तामवृत्तिरेवावयवी, इति शङ्कायां पूर्वपक्षिसूत्रम् ।—अवयवेभ्यः पृथक्, अवयवी नास्तीति शेषः । तेषु चावृत्तेरित्यस्य सूत्रस्य अवयव्यभाव इत्यनुवर्त्तते ; कुतः ?—अवृत्तेः ; वृत्त्यभावेऽवयविनो नित्यत्वप्रसङ्गः, न च नित्योऽवयव्युपलभ्यते, ततो नास्त्येवावयवीति भावः ; यद्वा,—कार्त्स्न्यैकदेशाभ्यामवयवी न वर्त्तते, किन्तु स्वरूपेणैवेति शङ्कायां पूर्वपक्षिणः सूत्रं पृथगिति ।—अवयवेभ्यः पृथगवयवी नास्ति ; कुतः ?—अवृत्तेः; अवृत्तित्वप्रसङ्गात् ; तथा सति नित्यं स्यादिति भावः । कश्चित्तु,—"अवयवातिरिक्तोऽवयवी वर्त्ततामित्यत्र पूर्वपक्षिणः सूत्रं पृथगिति ।—पूर्वोक्तयुक्त्याऽवयवेभ्यः पृथगप्यवृत्तेः ॥९॥

नन्ववयवावयविनोस्तादात्म्यमेव सम्बन्धः स्यादवाऽऽह ।—न हि तन्तुः पटः, तन्वी पटमिति कश्चित्प्रत्येति, न वाऽभेदेनाऽऽधाराऽऽधेयभाव उपपद्यते ॥ १० ॥

सिद्धान्तसूत्रम् ।—अवयवी कार्त्स्न्येन एकदेशेन वा वर्त्तत इति प्रश्नो न युक्तः, एकस्मिन्नवयविनि, भेदाभावाद्भेदनियतशब्दप्रयोगस्यायुक्तत्वात् ; अनेकस्य-

प्रयोगानुपपत्तेः। कृत्स्नमित्यनेकस्याशेषाभिधानम्, एकदेश इति नानात्वे कस्यचिदभिधानम्; ताविमौ कृत्स्नैकदेशशब्दौ भेदविषयौ नैकस्मिन्नवयविन्युपपद्येते भेदाभावादिति ॥ ११ ॥

अन्यावयवाभावान्नैकदेशेन वर्त्तत इत्यहेतुः,—

**अवयवान्तरभावेऽप्यवृत्तेरहेतुः ॥ १२ ॥**

अवयवान्तराभावादिति। यद्यप्येकदेशोऽवयवान्तरभूतः स्यात्, तथाऽप्यवयवेऽवयवान्तरं वर्त्तेत, नावयवीति; अन्यावयवभावेऽप्यवृत्तेरवयविनो नैकदेशेन वृत्तिरन्यावयवाभावादित्यहेतुः। वृत्तिः कथमिति चेत्?—एकस्यानेकत्राऽऽश्रयाऽऽश्रितसम्बन्धलक्षणा प्राप्तिः। आश्रयाऽऽश्रितभावः कथमिति चेत्?—यस्य यतोऽन्यत्राऽऽत्मलाभानुपपत्तिः, स आश्रयः; न कारणद्रव्येभ्योऽन्यत्र कार्यद्रव्यमात्मानं लभते, विपर्ययस्तु कारणद्रव्येष्विति। नित्येषु कथमिति चेत्?—अनित्येषु दर्शनात् सिद्धम्। नित्येषु द्रव्येषु कथमाश्रयाऽऽश्रयिभाव इति चेत्?—अनित्येषु द्रव्यगुणेषु दर्शनादाश्रयाऽऽश्रितभावस्य नित्येषु सिद्धिरिति। तस्मादवयव्यभिमानः प्रतिषिध्यते निःश्रेयसकामस्य, नावयवी; यथा रूपाऽऽदिषु मिथ्यासङ्कल्पः, न रूपाऽऽदय इति ॥ १२ ॥

---

शेषता हि कार्त्स्न्यं, समुदायिनां किञ्चित्त्वमेकदेशत्वं, न चैकस्य तत्सम्भव इति भावः ॥ ११ ॥

इतश्च वृत्तिविकल्पो न युक्त इत्याह।—अवयवी स्वावयवेषु नैकदेशेन वर्त्तते, अवयवान्तराभावादिति यः परेषां हेतुः, स न युक्तः; कुतः?—अवयवान्तरभावेऽप्यवृत्तेः; अवयवान्तरसत्त्वेऽपि तस्यैव परं वृत्तिरायाति, न त्ववयविनोऽपीति; यद्वा,—अवृत्तेर्वर्त्तनाभावस्य, कृत्स्नैकदेशविकल्पो न हेतुः; कुतः?—अवयवान्तरस्य अवयविभिन्नस्य अवयवस्य, भावेऽपि सत्त्वेऽपि, सम्भवात् घटत्वाऽऽदिवत्, स्वरूपेणैवावयविनो वृत्तेः सम्भवात् वृत्तेः कृत्स्नैकदेशान्यतरनियमो घटत्वाऽऽदौ व्यभिचार्यप्रयोजकश्चेति भावः॥१२॥

सर्वाग्रहणमवयव्यसिद्धेरिति प्रत्यवस्थितोऽप्येतदाह,—

**केशसमूहे तैमिरिकोपलब्धिवत् तदुपलब्धिः॥१३॥**

यथैकैकः केशस्तैमिरिकेण नोपलभ्यते, केशसमूहस्तूपलभ्यते, तथैकैकोऽणुर्नोपलभ्यते, अणुसञ्चयस्तूपलभ्यते, तदिदमणुसमूहविषयं ग्रहणमिति ॥ १३ ॥

**स्वविषयानतिक्रमेणेन्द्रियस्य पटुमन्दभावाद्-विषयग्रहणस्य तथाभावो नाविषये प्रवृत्तिः ॥१४॥**

यथाविषयमिन्द्रियाणां पटुमन्दभावाद्विषयग्रहणानां पटुमन्दभावो भवति, चक्षुः खलु प्रकृष्यमाणं नाविषयं गन्धं गृह्णाति, निकृष्यमाणञ्च न स्वविषयात् प्रच्यवते, सोऽयं तैमिरिकः कश्चिच्चक्षुर्विषयं केशं न गृह्णाति, कश्चित् गृह्णाति केशसमूहम्, उभयं ह्यतैमिरिकेण चक्षुषा गृह्यते, परमाणवस्त्वतीन्द्रिया इन्द्रियाविषयीभूता न केनचिदिन्द्रियेण गृह्यन्ते, समुदितास्तु गृह्यन्ते, इत्यविषये प्रवृत्तिरिन्द्रियस्य प्रसज्येत, न जात्वर्थान्तरमणुभ्यो गृह्यत इति; ते खल्विमे परमाणवः संहिताः (न) गृह्यमाणा अतीन्द्रियत्वं जहति, वियुक्ताश्चागृह्यमाणा न अतीन्द्रियत्वं जहति इति; सोऽयं द्रव्यान्तरानुत्पत्तावतिमहान् व्याघातः, इत्युपपद्यते द्रव्यान्तरं, यत् ग्रहणस्य

"तदसंशयः पूर्वहेतुप्रसिद्धत्वात्" इत्यनेन "सर्वाग्रहणमवयव्यसिद्धेः" इति पूर्वोक्तयुक्तिः खण्डिता, पूर्वपक्षी तां दूषयितुमुपक्रमते।—यथा तैमिरिकस्य तिमिरग्रस्तचक्षुषो नैकः केशः प्रत्यक्षः, किन्तु तत्समूहः; एवमेकः परमाणुरप्रत्यक्षः, तत्समूहरूपो घटाऽऽदिः प्रत्यक्षः स्यात् ॥ १३ ॥

उत्तरयति।—इन्द्रियाणां पाटवे विषयग्रहणस्य पाटवं प्रकर्षः, इन्द्रियाणां मान्द्ये तद्ग्रहणस्य मान्द्यमपकर्षः, न तु पटुतरं चक्षुः शब्दं गृह्णाति; तदिदमुक्तं,—

(न) अत्र "सन्धिता" इत्यपि पाठः।

विषय इति। सम्बन्धमात्रं विषय इति चेत्, न, सम्बन्धस्य संयोगभावात् ; तस्य चाप्तीन्द्रियस्याग्रहणादयुक्तम् ; सम्बन्धः खल्वनेकस्य संयोगः, स च गृह्यमाणाऽऽश्रयो गृह्यते, नातोन्द्रियाऽऽश्रयः ; भवति हीदमनेन संयुक्तमिति, तस्मादयुक्तमेतदिति। गृह्यमाणस्य चेन्द्रियेण विषयस्याऽऽवरणाद्यनुपलब्धिकारणमुपलभ्यते ; तस्मान्नेन्द्रियदौर्बल्यादनुपलब्धिरणूनाम् ; यथा,—नेन्द्रियदौर्बल्याच्चक्षुषाऽनुपलब्धिर्गन्धाऽऽदीनामिति ॥ १४ ॥

## अवयवावयविप्रसङ्गश्चैवमाप्रलयात् ॥ १५ ॥

यः खल्ववयविनोऽवयवेषु वृत्तिप्रतिषेधादभावः, सोऽयमवयवस्यावयवेषु प्रसज्यमानः सर्वप्रलयाय वा कल्पेत ? निरवयवाद्वा परमाणुतो निवर्त्तेत ? उभयथा चोपलब्धिविषयस्याभावः, तदभावादुपलब्ध्यभावः, उपलब्ध्याश्रयश्चायं वृत्तिप्रतिषेधः, स आश्रयं व्याघ्नन्नाऽऽत्मघाताय कल्पत इति ॥ १५ ॥

अथापि,—

## न प्रलयोऽणुसद्भावात् ॥ १६ ॥

अवयवविभागमाश्रित्य वृत्तिप्रतिषेधादभावः प्रसज्यमानो निरवयवात् परमाणोर्निवर्त्तते, न सर्वप्रलयाय कल्पते, निरवयवत्वन्तु खलु परमाणोर्विभागैरल्पतरप्रसङ्गस्य, यतो नाल्पीय-

---

स्वविषयानतिक्रमेण इति। फलितार्थमाह, नाविषये प्रवृत्तिरिति।—तथा च, स्वाविषयं परमाणुं समूहत्वाऽऽपन्नमपि कथं चक्षुर्गृह्णीयात् ? इति भावः ॥ १४ ॥

दोषान्तराभिधानाय सूत्रम्।—एवमुक्तप्रकारेण, वृत्तिविकल्पदोषोऽवयविन्यवयवे च प्रसक्त आ प्रलयात् ; प्रलयोऽभावः ; तथा च सर्वाभाव एव स्यात्, न कस्यापि ग्रहणमिति साधूक्तं,—"सर्वाग्रहणमवयव्यसिद्धेः" इति ॥ १५ ॥

अस्तु सर्वाभावः, इत्यत्राऽऽह।—आश्रयनाशाद्यभावेन परमाणोर्नाशाभावेन तत्सम्भवात् ; यद्वा,—नन्ववयवावयविप्रसङ्गस्तथा प्रलयपर्यन्तं स्वीकार्यः, प्रलये च

स्तत्वावस्थानात्; लोष्टस्य खलु प्रविभज्यमानावयवस्याल्पतरमल्पतममुत्तरमुत्तरं भवति; स चायमल्पतरप्रसङ्गः यस्मान्नाल्पतरमस्ति, यः परमोऽल्पस्तत्र निवर्त्तते, यतश्च नाल्पीयोऽस्ति, तं परमाणुं प्रचक्ष्मह इति ॥ १६ ॥

परं वा त्रुटेः ॥ १७ ॥

अवयवविभागस्यानवस्थानाद्द्रव्याणामसङ्ख्येयत्वात् त्रुटिनिवृत्तिरिति ॥ १७ ॥

अथेदानीमानुपलम्भिकः सर्वं नास्तीति मन्यमान आह,—

आकाशव्यतिभेदात् तदनुपपत्तिः ॥ १८ ॥

तस्याणोर्निरवयवस्यानुपपत्तिः; कस्मात्?—आकाशव्यतिभेदात्। अन्तर्बहिश्चाणुराकाशेन समाविष्टो व्यतिभिन्नः, व्यतिभेदात् सावयवः, सावयवत्वादनित्य इति ॥ १८ ॥

आकाशासर्वगतत्वं वा ॥ १९ ॥

अथैतन्नेष्यते, परमाणोरन्तर्नास्त्याकाशमित्यसर्वगतत्वं प्रसज्यत इति ॥ १९ ॥

---

निखिलपृथिव्यादिनाशात् पुनः सर्गो न स्यादित्याशयेन शङ्कते,—अवयवेति। समाधत्ते, नेति।—न सकलपृथिव्यादिनाशः, परमाणुसद्भावादित्यर्थः ॥ १६ ॥

परमाणुरेव कः? इत्यत्राऽऽह।—त्रुटेः परं यदतिसूक्ष्मं, तत्परमाणुः। वाशब्दोऽवधारणे; अथवा,—त्रुटेरवयवस्तदवयवो वा परमाणुरिति विकल्पार्थो वाशब्दः; यद्वा,—त्रुटेः परं सूक्ष्मं परमाणुः, त्रुटावेव वा विश्राम इति विकल्पोऽभिमतः ॥ १७ ॥

समाप्तमवयवावयविप्रकरणम्।

अथ विश्वस्य शून्यत्वात् क्व परमाणुसम्भावना? इति मतनिराकरणाय निरवयवप्रकरणम्; तत्र पूर्वपक्षसूत्रम्।—तस्य निरवयवस्याणोः, अनुपपत्तिः; कुतः?—आकाशव्यतिभेदात् अन्तर्बहिश्चाऽऽकाशसमावेशात्; तथा च सावयवः, ततश्चानित्य इति ॥१८॥

अथ नाऽऽकाशव्यतिभेदः, तर्हि आकाशमसर्वगतं स्यादित्याह।—स्यादिति शेषः ॥ १९ ॥

**अन्तर्बहिश्च कार्य्यद्रव्यस्य कारणान्तरवचनादकार्य्ये तदभावः ॥ २० ॥**

अन्तरिति पिहितं कारणान्तरैः कारणमुच्यते, बहिरिति च व्यवधायकमव्यवहितं कारणमेवोच्यते, तदेतत्कार्य्यद्रव्यस्य सम्भवति, नाणोः, अकार्य्यत्वात्; अकार्य्ये हि परमाणावन्तर्बहिरित्यस्याभावः। यत्र चास्य भावः,—अणुकार्य्यं तत्, न परमाणुः; यतो हि नाल्पतरमस्ति, स परमाणुरिति ॥ २० ॥

**शब्दसंयोगविभवाच्च सर्वगतम् ॥ २१ ॥**

यत्र क्वचिदुत्पन्नाः शब्दा विभवन्त्याकाशे, तदाश्रया भवन्ति; मनोभिः परमाणुभिस्तत्कार्य्यैश्च संयोगा विभवन्त्याकाशे, नासंयुक्तमाकाशेन किञ्चिन्मूर्त्तद्रव्यमुपलभ्यते, तस्मान्नासर्वगतमिति ॥ २१ ॥

**अव्यूहाविष्टम्भविभुत्वानि चाऽऽकाशधर्माः ॥ २२ ॥**

संयताप्रतिघातिना द्रव्येण न व्यूह्यते, यथा काष्ठेनोदकम्; कस्मात्?—निरवयवत्वात्। सपच्च प्रतिघाति द्रव्यं न विष्टभ्नाति, नास्य क्रियाहेतुं गुणं प्रतिबध्नाति; कस्मात्?—अस्पर्शत्वात्; विपर्य्यये हि विष्टम्भो दृष्ट इति; स भवान् स्पर्शवति

---

समाधत्ते।—अन्तःशब्दो बहिःशब्दश्च कार्य्यद्रव्यस्यावयवविशेषवाची, न चाकार्य्येऽवयवसम्भव इत्यर्थः। बहिरिति दृष्टान्तार्थम् ॥ २० ॥

आकाशस्यासर्वगतत्वं स्यादित्यत आऽऽह।—शब्दस्य संयोगस्य च यो विभवः, अथवा,—शब्दजनकाभिघातसंयोगस्य यो विभवः सार्वत्रिकत्वं, तस्मात्, पुनः सर्वगतम्, आकाशमिति शेषः; सर्वदेशे शब्दोत्पत्त्या तज्जनकसंयोगानुमानात् सर्वमूर्त्तसंयोगित्वरूपसर्वगतत्वं तस्य सिद्धम् ॥ २१ ॥

आकाशस्य सर्वसंयोगित्वे व्यूहनविष्टम्भौ स्याताम्, अत आह।—व्यूहः प्रतिहतस्य परावर्त्तनं, विष्टम्भ उत्तरदेशगतिप्रतिबन्धः, आकाशे तयोरभावः निस्स्पर्शत्वात्; विभुत्वं

द्रव्ये दृष्टं धर्मं विपरीतं नाऽऽशङ्कितुमर्हति, अन्यवयवस्याणुतरत्वप्रसङ्गादणुकार्य्यप्रतिषेधः ; सावयवत्वे चाणोरन्यवयवोऽणुतर इति प्रसज्यते ; कस्मात् ?—कार्य्यकारणद्रव्ययोः परिमाणभेददर्शनात् ; तस्मादन्यवयवस्याणुतरत्वम्। यस्तु सावयवः, अणुकार्य्यं तदिति, तस्मादणुकार्य्यमिदं प्रतिषिध्यत इति। कारणविभागाच्च कार्य्यस्यानित्यत्वं, नाऽऽकाशव्यतिभेदात् ; लोष्टस्यावयवविभागादनित्यत्वं, नाऽऽकाशसमावेशादिति ॥२२॥

## मूर्त्तिमताञ्च संस्थानोपपत्तेरवयवसद्भावः ॥ २३ ॥

परिच्छिन्नानां हि स्पर्शवतां संस्थानं त्रिकोणं चतुरस्रं समं परिमण्डलमित्युपपद्यते, यत् तत्संस्थानं, सोऽवयवसन्निवेशः ; परिमण्डलाश्चाणवः, तस्मात् सावयवा इति ॥ २३ ॥

## संयोगोपपत्तेश्च ॥ २४ ॥

मध्ये सन्नणुः पूर्वापराभ्यामणुभ्यां संयुक्तस्तयोर्व्यवधानं कुरुते, व्यवधानेनानुमीयते,—पूर्वभागेन पूर्वेणाणुना संयुज्यते, परभागेणापरेणाणुना संयुज्यत इति ; यौ तौ पूर्वापरौ भागौ, तावस्यावयवौ ; एवं सर्वतः संयुज्यमानस्य सर्वतोभागा अवयवा इति। यत्तावन्मूर्त्तिमतां संस्थानोपपत्तेरवयवसद्भाव इति, अत्रोक्तम् ; किमुक्तम् ?—विभागाल्पतरप्रसङ्गस्य, यतो नाल्पीयस्तत्र

सर्वगतत्वम् ; यद्युक्तं सूत्रे शून्यतावादिमतं न सङ्गच्छते आकाशादेस्तैरनभ्युपगमात्, तथाऽपि तन्मत इति पूरयित्वा व्याख्येयं ॥ २२ ॥

पूर्वपक्षी युक्त्यन्तरमाशङ्कते।—परमाणोरिति शेषः। हेतुमाह,—संस्थानोपपत्तेः संस्थानवत्त्वात्, परमाणुर्हि परिमण्डलाऽऽकारः। संस्थानवत्त्वे मानं भङ्ग्या वदति, मूर्त्तिमतामिति।—मूर्त्तत्वात् संस्थानवत्त्वमित्यर्थः। च पूर्वोक्तहेतुं समुच्चिनोति, मूर्त्तत्वस्य हेतुत्वसमुच्चयार्थो वा चकारः ॥ २३ ॥

युक्त्यन्तरमाह।—अवयवसद्भाव इत्यनुवर्त्तते। संयोगवत्त्वादिति हेत्वर्थः ; संयोगवत्त्वात् कथं सावयवत्वम् ? इति चेत्, इत्थं संयोगस्याव्याप्यवृत्तित्वात्, अव्याप्यवृत्तित्वञ्च

निवृत्तेरण्ववयवस्य चाणुतरत्वप्रसङ्गादणुकार्य्यप्रतिषेध इति। यत् पुनरेतत् संयोगोपपत्तेश्चेति, स्पर्शवत्त्वाद्व्यवधानमाश्रयस्य चाव्याप्त्या भागभक्तिः; उक्तञ्चात्र—स्पर्शवानणुः, स्पर्शवतोरण्वोः प्रतिघाताद्व्यवधायकः, न सावयवत्वात्, किन्तु स्पर्शवत्त्वात्; स्पर्शवत्त्वाच्च व्यवधाने सत्यणुसंयोगो नाऽऽश्रयं व्याप्नोतीति भागभक्तिर्भवति; भागवानिवायमिति, उक्तञ्चात्र—विभागेऽल्पतरप्रसङ्गश्च, यतो नाल्पीयस्तत्रावस्थानात् तदवयवस्य चाणुतरत्वप्रसङ्गादणुकार्य्यप्रतिषेध इति ॥ २४ ॥

मूर्त्तिमताञ्च संस्थानोपपत्तेः संयोगोपपत्तेश्च परमाणूनां सावयवत्वमिति हेत्वोः,—

**अनवस्थाकारित्वादनवस्थाऽनुपपत्तेश्चाप्रतिषेधः॥२५॥**

यावन्मूर्त्तिमत्, यावच्च संयुज्यते, तत्सर्वं सावयवमित्यनवस्थाकारिणाविमौ हेतू, सा चानवस्था नोपपद्यते, सत्यामवस्थायां सत्यौ हेतू स्याताम्; तस्मादप्रतिषेधोऽयं निरवयवत्वस्येति। विभागस्य विभज्यमानहानिर्नोपपद्यते, तस्मात् प्रलयान्तता नोपपद्यत इति; अनवस्थायाञ्च प्रत्यधिकरणं द्रव्यावयवानामानन्त्यात् परिमाणभेदानां गुरुत्वस्य चाग्रहणम्; समानपरिमाणत्वं चावयवावयविनोः परमाण्ववयवविभागादूर्द्ध्वमिति ॥ २५ ॥

वच्छेदकभेदं विना नोपपद्यते, अवच्छेदकश्चावयव इति। ननु परमाण्ववयवेऽप्ययं दोषः स्यात्, तथा चानवस्थितपरम्पराप्रसङ्ग इति चेत्, तर्हि त्यज परमाणुव्यसनं, स्वीकुरु शून्यतावादं, निरवयवमाकाशाऽऽदिकमपि नास्तीति भावः ॥ २४ ॥

समाधत्ते।—पूर्वोक्तयुक्त्या परमाणोर्निरवयवत्वप्रतिषेधो न युक्तः; कुतः?—अनवस्थाकारित्वात्। प्रामाणिकीयमनवस्था स्यादत आह, 'अनवस्थाऽनुपपत्तेश्चेति।—सर्व्वेषामनवस्थितावयवत्वे मेरुसर्षपयोस्तुल्यपरिमाणत्वाऽऽपत्तिः; इत्थञ्च तत्संयोगावच्छेदकादिविभागा, न वा शून्यतायुक्ता निष्प्रमाणत्वात्, प्रमाणसत्त्वे शून्यत्वविरोधात्, निष्प्रमाणकशून्यताऽभ्युपगमे किमपराद्धं पूर्णतया? इति दिक् ॥ २५ ॥

समाप्तं निरवयवप्रकरणम्।

यदिदं भवान् बुद्धीराश्रित्य बुद्धिविषयाः सन्तीति मन्यते, मिथ्याबुद्धय एताः ; यदि हि तत्त्वबुद्धयः स्युः, बुद्ध्या विवेचने क्रियमाणे याथात्म्यं बुद्धिविषयाणामुपलभ्येत,—

**बुद्ध्या विवेचनात्तु भावानां याथात्म्यानुपलब्धिस्तन्त्वपकर्षणे पटसद्भावानुपलब्धिवत् तदनुपलब्धिः ॥ २६ ॥**

यथाऽयं तन्तुरयं तन्तुरिति प्रत्येकं तन्तुषु विविच्यमानेषु नार्थान्तरं किञ्चिदुपलभ्यते, यत्पटबुद्धेर्विषयः स्यात्, याथात्म्यानुपलब्धेः असति विषये पटबुद्धिर्भवतीति मिथ्याबुद्धिर्भवति ; एवं सर्वत्रेति ॥ २६ ॥

**व्याहतत्वादहेतुः ॥ २७ ॥**

यदि बुद्ध्या विवेचनं भावानां, न सर्वभावानां याथात्म्यानुपलब्धिः ; अथ सर्वभावानां याथात्म्यानुपलब्धिः, न बुद्ध्या विवेचनं भावानाम् ; बुद्ध्या विवेचनं याथात्म्यानुपलब्धिश्चेति व्याहन्यते ; तदुक्तम्,—"अवयवावयविप्रसङ्गश्चैवमाप्रलयात्" इति ॥ २७ ॥

---

ननु बाह्यार्थाभावात् कुतोऽवयवावयविव्यवस्था ? इति मतमपाकर्त्तुं बाह्यार्थभङ्गनिराकरणमारभते । प्रमेयत्वं ज्ञानत्वव्याप्यं न वेति संशयः, तत्र पूर्वपक्षसूत्रम् ।—तु प्रकरणविच्छेदार्थः ; भावानां बुद्ध्या विवेचनादभेदोल्लेखात्, याथात्म्यस्य ज्ञानभेदलक्षणस्य, अनुपलब्धिरनुपपत्तिः ; घट इति ज्ञानं मम जातमिति ह्यनुभूयते, तत्र घट इति ज्ञानमित्यनेन ज्ञानघटयोरभेद उल्लिख्यते, ततो न ज्ञानातिरिक्तो विषयः ; यथा पटे विविच्यमाने तन्तूनामेवापकर्षणादावतिरिक्तं न वस्तु, एवं तन्तुरपि नांशुव्यतिरिक्त इति ; घटत्वाऽऽदिस्तु ज्ञानस्यैवाऽऽकारविशेष इति भावः ॥ २६ ॥

समाधत्ते ।—उक्तो हेतुर्न युक्तः, व्याहतत्वात् ; न हि बुद्ध्या विवेचने पटस्य तन्तुरूपता सिध्यति, तन्तुतः पट इति हि प्रतीयते, न तु तन्तुः पट इति ; एवं पटेन प्रावरणं, न तु तन्तुभिः ; किञ्च, तन्तुपटविवेचनादेव बाह्यार्थसिद्धिः, ज्ञानेन तु स्वस्मिन् पटाभेदो नोल्लिख्यते, स्वाविषयकत्वात् ; अनुव्यवसायेन तु पटविषयकत्वं व्यवसाये समुल्लिख्यते ॥ २७ ॥

## तदाश्रयत्वादपृथग्ग्रहणम् ॥ २८ ॥

कार्य्यद्रव्यं कारणद्रव्याऽऽश्रितं, तत् कारणेभ्यः पृथङ्नोपलभ्यते, विपर्य्यये पृथग्ग्रहणात् ; यत्राऽऽश्रयाऽऽश्रितभावो नास्ति, तत्र पृथग्ग्रहणमिति ; बुद्ध्या विवेचनात्तु भावानां पृथग्ग्रहणमतीन्द्रियेष्वणुषु ; यदिन्द्रियेण गृह्यते, तदेतया बुद्ध्या विविच्यमानमन्यदिति ॥ २८ ॥

## प्रमाणतश्चार्थप्रतिपत्तेः ॥ २९ ॥

बुद्ध्या विवेचनाद्भावानां याथात्म्योपलब्धिः । यदस्ति, यथा च, तत् सर्वं प्रमाणत उपलब्ध्या सिध्यति, या च प्रमाणत उपलब्धिः, तत् बुद्ध्या विवेचनं भावानाम् ; तेन सर्वशास्त्राणि सर्वकर्माणि सर्वे च शरीरिणां व्यवहारा व्याप्ताः । परीक्षमाणो हि बुद्ध्याऽध्यवस्यति इदमस्तीदं नास्तीति ; तत्र न सर्वभावानुपपत्तिः ॥ २९ ॥

## प्रमाणानुपपत्त्युपपत्तिभ्याम् ॥ ३० ॥

एवञ्च सति सर्वं नास्तीति नोपपद्यते ; कस्मात् ?—प्रमाणोपपत्त्यनुपपत्तिभ्याम् ; यदि सर्वं नास्तीति प्रमाणमुपपद्यते,

---

ननु तन्तुपटयोर्भेदे पार्थक्येन ग्रहणं स्यादत्र चाऽऽह ।—पृथग्ग्रहणं, यदि तन्तुविषयकप्रत्यक्षविषयत्वं पटस्याऽऽपाद्यते । तत्रोत्तरं, तदाश्रयत्वादिति ।—पटो हि तन्त्वाश्रितः, तेन सामग्रीसत्त्वात्पटप्रत्यक्षस्य तन्तुविषयकत्वं यदि च भेदप्रत्यय आपाद्यते, तदा भवत्येवेति भावः ॥ २८ ॥

ननु ज्ञानस्योभयवादिसिद्धत्वात् तन्मात्रपदार्थकल्पने लाघवात् तदतिरिक्तपदार्थाभावसिद्धिः स्यादित्यत आह ।—पूर्वोक्तहेतुं समुच्चिनोति चकारः, अर्थस्य घटादेः, प्रतिपत्तेः प्रमाणाधीनत्वात् ; तथा च प्रामाणिकेऽर्थे गौरवं न बाधकमिति भावः, अन्यथा ज्ञानमपि न सिध्येद्गौरवाऽऽदियुक्ततयाऽऽपत्तिः ॥ २९ ॥

न वा बाह्यार्थाभावसाधनं सम्भवतीत्याह ।—व्याघाताच्च बाह्याभाव इति शेषः । बाह्यं नास्तीत्यत्र यदि प्रमाणमस्ति, तदा प्रमाणस्य बाह्यस्य सत्त्वाद्बाह्या-

सर्वं नास्तीत्येतद्व्याहन्यते ; अथ प्रमाणं नोपपद्यते, सर्वं नास्तीत्यस्य कथं सिद्धिः ?—अथ प्रमाणमन्तरेण सिद्धिः ; सर्वमस्तीत्यस्य कथं न सिद्धिः ? ॥ ३० ॥

**स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः ॥३१॥**

यथा स्वप्ने न विषयाः सन्ति, अथ चाभिमानो भवति, एवं न प्रमाणानि प्रमेयाणि च सन्ति, अथ च प्रमाणप्रमेयाभिमानो भवति ॥ ३१ ॥

**मायागन्धर्वनगरमृगतृष्णिकावद्वा ॥ ३२ ॥**

**हेत्वभावादसिद्धिः ॥ ३३ ॥**

स्वप्नान्ते विषयाभिमानवत् प्रमाणप्रमेयाभिमानः, न पुनर्जागरितान्ते विषयोपलब्धिवत्, इत्यत्र हेतुर्नास्ति, हेत्वभावादसिद्धिः ; स्वप्नान्ते चासन्तो विषया उपलभ्यन्त इत्यत्रापि हेत्वभावः, * प्रतिबोधेऽनुपलम्भादिति चेत्, प्रतिबोधविषयोपलम्भादप्रतिषेधः । * यदि प्रतिबोधेऽनुपलम्भात् स्वप्ने विषया न सन्तीति, तर्हि इमे प्रतिबुद्धेन विषया उपलभ्यन्ते, उपलम्भात् सन्तीति ; विपर्य्यये हि हेतुसामर्थ्यम्, उपलम्भाभावे सत्यनुपलम्भादभावः सिध्यति, उभयथा त्वभावे नानुपलम्भस्य सामर्थ्य-

---

भावः, ; अथ नास्ति, तदा निष्प्रमाणकत्वान्न तत्सिद्धिरित्यर्थः ; किञ्च, घटाऽऽदौ यदि प्रमाणमस्ति, तदा तत एव बाह्यार्थसिद्धिः ; अथाप्रमाणं, तदा कथं घट इति ज्ञानस्य घटाऽऽकारत्वं मन्यसे ? ज्ञानस्यैवानुत्पत्तेरिति ॥ ३० ॥

ननु प्रमाणप्रमेयव्यवहारो न पारमार्थिकः, परन्तु विज्ञानानि तत्तदाकाराणि वासनापरिपाकवशादेव स्वाप्नप्रत्ययवदैन्द्रजालिकप्रतीतिवच्चाऽऽविर्भवन्तीत्याशयेन प्रवृत्ते सूत्राभ्याम् ।—स्पष्टम् ॥ ३१ ॥ ३२ ॥

समाधत्ते ।—बाह्याभावस्यासिद्धिः हेत्वभावात् प्रमाणाभावात् ; अथवा,—हेतोरुपादानादेरनभ्युपगमे घटोऽयमित्यादिज्ञानानामसिद्धिरित्यर्थः ; न च वासनावशात्

मस्ति ; यथा प्रदीपस्याभावाद्रूपस्यादर्शनमिति ; तत्र भावे नाभावः समर्थ्यत इति। * स्वप्नान्तविकल्पे च हेतुवचनम्।* स्वप्नविषयाभिमानवदिति ब्रुवता स्वप्नान्तविकल्पे हेतुर्वाच्यः ; कश्चित् स्वप्नो भयोपसंहितः, कश्चित् प्रमोदोपसंहितः, कश्चिदुभयविपरीतः, कदाचित् स्वप्नमेव न पश्यतीति ; निमित्तवतस्तु स्वप्नविषयाभिमानस्य निमित्तविकल्पाद्विकल्पोपपत्तिः ॥ ३३ ॥

## स्मृतिसङ्कल्पवच्च स्वप्नविषयाभिमानः ॥ ३४ ॥

पूर्वोपलब्धो विषयः। यथा स्मृतिश्च सङ्कल्पश्च पूर्वोपलब्धविषयो न तस्य प्रत्याख्यानाय कल्पते, तथा स्वप्ने विषयग्रहणं पूर्वोपलब्धविषयं न तस्य प्रत्याख्यानाय कल्पते ; एवं दृष्टविषयश्च स्वप्नान्तो जागरितान्तेन ; यः सुप्तः स्वप्नं पश्यति, स एव जाग्रत् स्वप्नदर्शनानि प्रतिसन्धत्ते—इदमद्राक्षमिति ; तत्र जाग्रद्बुद्धिवृत्तिवशात् स्वप्नविषयाभिमानो मिथ्येति व्यवसायः, सति च प्रतिसन्धाने या जाग्रतो बुद्धिवृत्तिः, तद्वशादयं व्यवसायः,—स्वप्नविषयाभिमानो मिथ्येति, * उभयाविशेषे तु साधनाऽऽनर्थक्यम्। * यस्य स्वप्नान्तजागरितान्तयोरविशेषः, तस्य स्वप्नविषयाभिमानवदिति साधनमनर्थकं, तदाश्रयप्रत्याख्यानात् ; अतस्मिंस्तदिति च व्यवसायः प्रधानाऽऽश्रयः, अपुरुषे

स्यादिति वाच्यं, वासनाया अतिरिक्तत्वे बाह्योपरागप्रसङ्गात् ; वासनायाः सन्तानसमानतया चाक्षुषादेरपि सन्तानाऽऽपत्तिरिति दिक् ॥ ३३ ॥

ननु सविषया अहेतुका अपि स्वाप्नप्रत्यया इव भावनाप्रत्यया इव परेऽपि प्रत्यया भवेयुरित्यत आह।—पूर्वोपलब्धविषयः इति शेषः। सङ्कल्प उपनीतभानम् ; यथा स्मृत्यादिः पूर्वोपलब्धविषयकः, तथा स्वाप्नप्रत्ययोऽपीति न निर्विषयकः। न च स्वप्ने स्वमपि खादति, निजशिरःखण्डनमपि पश्यति ; न त्विदं पूर्वोपलब्धमिति वाच्यं, स्वस्य खादनस्य च निजशिरसः खण्डनस्य च पूर्वोपलब्धत्वात्, संसर्गभानस्य च भ्रान्तत्वात् ; न वाऽहेतुकत्वं स्मृत्यादिदृष्टान्तेन, संस्कारस्य स्मृतौ स्मृतेश्च विशिष्ट-

स्थाणौ पुरुष इति व्यवसायः, स प्रधानाऽऽश्रयः ; न खलु पुरुषेऽनुपलब्धे पुरुष इत्यपुरुषे व्यवसायो भवति ; एवं स्वप्नविषयस्य व्यवसायो हस्तिनमद्राक्षं पर्वतमद्राक्षमिति प्रधानाऽऽश्रयो भवितुमर्हति ॥ ३४ ॥

एवञ्च सति,—

**मिथ्योपलब्धिविनाशस्तत्त्वज्ञानात् स्वप्नविषयाभिमानप्रणाशवत् प्रतिबोधे ॥ ३५ ॥**

स्थाणौ पुरुषोऽयमिति व्यवसायो मिथ्योपलब्धिरतस्मिंस्तदिति ज्ञानम् ; स्थाणौ स्थाणुरिति व्यवसायस्तत्त्वज्ञानम् ; तत्त्वज्ञानेन च मिथ्योपलब्धिर्निवर्त्तते, नार्थः स्थाणुपुरुषसामान्यलक्षणः, यथा प्रतिबोधे या ज्ञानवृत्तिः, तथा स्वप्नविषयाभिमानो निवर्त्तते, नार्थो विषयसामान्यलक्षणः ; तथा मायागन्धर्वनगरमृगतृष्णिकानामपि या बुद्धयोऽतस्मिंस्तदिति व्यवसायाः, तत्राप्यनेनैव कल्पेन मिथ्योपलब्धिविनाशस्तत्त्वज्ञानात्, नार्थप्रतिषेध इति । * उपादानवच्च मायाऽऽदिषु मिथ्याज्ञानम् । * प्रज्ञापनीयस्वरूपञ्च द्रव्यमुपादाय साधनवान् परस्य मिथ्याऽध्यवसायं करोति सा माया, नीहारप्रभृतीनां नगरस्वरूपसन्निवेशे दूरान्नगरबुद्धिरुत्पद्यते, विपर्य्यये तदभावात् ; सूर्य्यमरीचिषु भौमेनोष्मणा संसृष्टेषु स्पन्दमानेषूदकबुद्धिर्भवति, सामान्यग्रहणात् अन्तिकस्थस्य, विपर्य्यये तदभावात् ; क्वचित् कदाचित् कस्यचिच्च भावान्नानिमित्तं मिथ्याज्ञानम् । दृष्टञ्च

---

बुद्धौ च हेतुत्वस्याभिमतत्वात् ; तत्र भवे दोषः काचविशेषोऽदृष्टविशेषोदोषो वेत्यन्यदेतत् ॥ ३४ ॥

ननु भ्रमस्यापि सद्विषयकत्वे तत्प्रतिरोधः कथं स्यात् ? इत्याशङ्क्याऽऽह ।—मिथ्योपलब्धेर्मायागन्धर्वनगराऽऽदिज्ञानस्य, तत्त्वज्ञानादनारोपितवस्तुप्रत्ययात्, विनाशः

बुद्धिहेतं मायाप्रयोक्तु: परस्य च दूरान्तिकस्थयोर्गन्धर्वनगर-मृगतृष्णिकासु, सुप्तप्रतिबुद्धयोश्च स्वप्नविषये ; तदेतत् सर्वस्या-भावे निरुपाऽऽख्यतायां निरात्मकत्वे नोपपद्यत इति ॥ ३५ ॥

**बुद्धेश्चैवं निमित्तसद्भावोपलम्भात् ॥ ३६ ॥**

मिथ्याबुद्धेश्चार्थवदप्रतिषेध: ; कस्मात् ?—निमित्तोपलम्भात्, सद्भावोपलम्भाच्च । उपलभ्यते मिथ्याबुद्धिनिमित्तम् ; मिथ्याबुद्धिश्च प्रत्यात्ममुत्पन्ना गृह्यते संवेद्यत्वात्, तस्मात् मिथ्याबुद्धिरप्य-स्तीति ॥ ३६ ॥

**तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्ति: ॥३७॥**

तत्त्वं स्थाणुरिति, प्रधानं पुरुष इति, तत्त्वप्रधानयोरलोपा-द्भेदात् स्थाणौ पुरुष इति मिथ्याबुद्धिरुत्पद्यते, सामान्यग्रहणात् ; एवं पताकायां बलाकेति, लोष्टे कपोत इति ; न तु समाने विषये मिथ्याबुद्धीनां समावेश:, सामान्यग्रहणाव्यवस्थानात् । यस्य तु निरात्मकं निरुपाऽऽख्यं सर्वं, तस्य समावेश: प्रसज्यते ;

---

प्रतिरोधी भ्रमत्वज्ञानं वा । एवं स्वप्नप्रत्ययस्यापि दर्पणमुखविभ्रमस्य तत्त्वज्ञानेना-प्रतिरोधिऽपि भ्रमत्वज्ञानं भवत्येवेति भाव: ॥ ३५ ॥

माध्यमिकस्तु वाह्यासत्त्वं प्रसाध्य तद्दृष्टान्तेन बुद्धेरप्यसत्त्वं साधयति, तं प्रत्याह ।—एवं वाह्यवद्बुद्धेरपि न प्रतिषेध:, निमित्तसद्भावोपलम्भात् सहेतुकत्वस्य प्रमितत्वात् ; न ह्यलीकं सहेतुकं सम्भवति, अहेतुकत्वे च कादाचित्कत्वव्याकोप: । केचित्तु,—"भ्रमस्य सद्विषयत्वे प्रमात्वं स्यादित्यत्राऽऽह, बुद्धेरिति ।—एवं प्रमात्वं, निमित्तस्य प्रकारस्य, सद्भाव: सत्त्वं यत्र ; तथा च, शुक्तिरजतयो: सत्यत्वेऽपि शुक्तौ रजतत्ववैशिष्ट्याभावान्न तद्बुद्धे: प्रमात्वमिति भाव:" इत्याहु: । अत्र चोपलम्भपदमनति-प्रयोजनकम् ॥ ३६ ॥

न वा मिथ्याबुद्धिदृष्टान्तेन ज्ञानमात्रस्यासद्भावविषयकत्वं सद्विषयकत्वाभावो वा सम्भवतीत्याह ।—तत्त्वं धर्मिस्वरूपप्रधानम् आरोप्यम् ; तथा च भ्रमे धर्म्यंशे प्रमात्वमारोप्य रजतत्वाऽऽद्यंशे च भ्रमत्वमिति दृष्टान्तासिद्धिरिति भाव: । केचित्तु,—

गन्धाऽऽदौ च प्रमेये गन्धाऽऽदिबुद्धयो मिथ्याऽभिमताः, तत्त्वप्रधानयोः सामान्यग्रहणस्य चाभावात् तत्त्वबुद्धय एव भवन्ति ; तस्मादयुक्तमेतत् प्रमाणप्रमेयबुद्धयो मिथ्येति ॥ ३७ ॥

"दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः" इत्युक्तमिति। अथ कथं तत्त्वज्ञानमुत्पद्यत इति ?—

समाधिविशेषाभ्यासात् ॥ ३८ ॥

स तु प्रत्याहृतस्येन्द्रियेभ्यो मनसो धारकेण प्रयत्नेन धार्य्यमाणस्याऽऽत्मना संयोगस्तत्त्वबुभुत्साविशिष्टः सति हि तस्मिन्निन्द्रियार्थेषु बुद्धयो नोत्पद्यन्ते, तदभ्यासवशात् तत्त्वबुद्धिरुत्पद्यते ॥ ३८ ॥

यदुक्तं—"सति हि तस्मिन्निन्द्रियार्थेषु बुद्धयो नोत्पद्यन्ते" इत्येतत्,—

नार्थविशेषप्राबल्यात् ॥ ३९ ॥

अनिच्छतोऽपि बुद्ध्युत्पत्तेर्नैतद्युक्तम् ; कस्मात् ?—अर्थविशेषप्राबल्यात् । अबुभुत्समानस्यापि बुद्ध्युत्पत्तिर्दृष्टा,

"प्रमात्वाप्रमात्वयोर्विरोधात्कथमेकत्र समावेश इत्यत आह, तत्त्वेति।—तथा च, विषयभेदान्न विरोध इति भावः" इत्याहुः ॥ ३७ ॥

समाप्तं वाह्यार्थभङ्गनिराकरणप्रकरणम् ।

ननु शास्त्राधीनं तत्त्वज्ञानं क्षणिकम्, अतस्तन्नाशे मिथ्याज्ञानं स्यादेव ; न हि तादृशं किञ्चिदेव ज्ञानं दृढभूमिसदासनमिथ्याज्ञानसमुन्मूलनक्षमम्, अतस्तत्त्वज्ञानविवृद्धिप्रकरणमारभते ; तत्त्वज्ञानविवृद्धिस्तत्त्वज्ञानवासना, ततश्चाऽऽत्यन्तिको मिथ्याज्ञाननाशः। तत्र तत्त्वज्ञानविवृद्धौ हेतुमाह।—समाधिः चित्तस्याभिमतविषयनिष्ठत्व, तस्य विशेषः प्रकर्षो विषयान्तरानभिष्वङ्गलक्षणः, तस्याभ्यासात् पौनःपुन्यात्, तत्त्वज्ञानविवृद्धिः, तदेव च निदिध्यासनमामनन्ति। तत्त्वज्ञानविवृद्ध्या च मिथ्याज्ञानवासना-तिरोभावः, तथा च योगसूत्रं,—"तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी" ( यो० सू० स० पा० ५० सू० )। प्रतिबन्धः कार्य्याक्षमतासम्पादनं विनाशो वा ॥ ३८ ॥

यथा स्तनयित्नुशब्दप्रभृतिषु ; तत्र समाधिविशेषो नोपपद्यते ॥ ३९ ॥

## क्षुदादिभिः प्रवर्त्तनाच्च ॥ ४० ॥

क्षुत्पिपासाभ्यां शीतोष्णाभ्यां व्याधिभिश्चानिच्छतोऽपि बुद्धयः प्रवर्त्तन्ते ; तस्मादैकाग्र्यानुपपत्तिरिति ॥ ४० ॥

अस्त्वेतत् समाधिव्युत्थाननिमित्तं समाधिप्रत्यनीकञ्च, सति त्वेतस्मिन्,—

## पूर्वकृतफलानुबन्धात् तदुत्पत्तिः ॥ ४१ ॥

पूर्वकृतो जन्मान्तरोपचितस्तत्त्वज्ञानहेतुर्धर्मप्रविवेकः, फलानुबन्धो योगाभ्याससामर्थ्यम् ; निष्फले हि अभ्यासे नाभ्यासा आद्रियेरन्, (प) दृष्टं हि लौकिकेषु कर्मस्वभ्याससामर्थ्यम् ॥ ४१ ॥

---

ननु रागाऽऽदिभिः प्रतिबन्धात् समाधिरेव नोदेतीत्याक्षिपति सूत्राभ्याम्।—अर्थविशेषस्य तनयवनिताऽऽदिरागस्य, प्राबल्याच्चिरकालानुबन्धात्, तदनुसन्धानमवर्जनीयमिति तदभावः, स्याच्च घनगर्जिताऽऽदिज्ञानेन प्रतिबन्धः ; एवं क्षुत्तृष्णाभयाऽऽदिभिः प्रतिरुद्धस्तदुपशमाय प्रयतेत ॥ ३९ ॥ ४० ॥

परिहरति।—जन्मान्तरकृतसमाधिजन्यसंस्कारवशात् समाधिसिद्धिरित्यर्थः, अत एव चानेकजन्मसंसिद्ध इत्यादि सङ्गच्छते ; वयन्तु—पूर्वकृतस्य प्रथमतः कृतस्येश्वराऽऽराधनस्य, फलं धर्मविशेषः, तत्सम्बन्धादित्यर्थः ; तथा च योगसूत्रं,—"समाधिसिद्धिरीश्वरप्रणिधानात्" (यो० सू० सा० पा० ४५ सू०)। सूत्रान्तरञ्च तत्रैव,—"ततः प्रत्यक्चेतनाऽधिगमोऽप्यन्तरायाभावश्च" (यो० सू० स० पा० २९ सू०)। तत्र ईश्वरप्रणिधानात्, विषयप्रातिकूल्येन चित्तावस्थानं प्रत्यहाभावश्चेत्यर्थः ॥ ४१ ॥

---

(प) "नाभ्यासमाद्रियेरन्" इति पाठान्तरम्।

प्रत्यनीकपरिहारार्थञ्च,—

**अरण्यगुहापुलिनाऽऽदिषु योगाभ्यासोपदेशः ॥४२॥**

योगाभ्यासजनितो धर्मो जन्मान्तरेऽप्यनुवर्त्तते, प्रचयकाष्ठागते तत्त्वज्ञानहेतौ धर्मे प्रकृष्टायां समाधिभावनायां तत्त्वज्ञानमुत्पद्यत इति; दृष्टश्च समाधिनाऽर्थविशेषप्राबल्याभिभवः, 'नाहमेतदश्रौषं, नाहमेतदज्ञासिषम्, अन्यत्र मे मनोऽभूत्' इत्याह लौकिक इति ॥ ४२ ॥

यद्यर्थविशेषप्राबल्यादनिच्छतोऽपि बुद्ध्युत्पत्तिरनुज्ञायते,—

**अपवर्गेऽप्येवं प्रसङ्गः ॥ ४३ ॥**

मुक्तस्यापि बाह्यार्थसामर्थ्याद्बुद्धय उत्पद्येरन्निति ॥ ४३ ॥

**न निष्पन्नावश्यम्भावित्वात् ॥ ४४ ॥**

कर्मवशान्निष्पन्नशरीरे चेष्टेन्द्रियार्थाऽऽश्रये निमित्तभावादवश्यम्भावी बुद्धीनामुत्पादः; न च प्रबलोऽपि सन् बाह्योऽर्थ आत्मनो बुद्ध्युत्पादे समर्थो भवति, तस्येन्द्रियेण संयोगाद्बुद्ध्युत्पादे सामर्थ्यं दृष्टमिति ॥ ४४ ॥

**तदभावश्चापवर्गे ॥ ४५ ॥**

तस्य बुद्धिनिमित्ताऽऽश्रयस्य शरीरेन्द्रियस्य धर्माधर्माभावादभावोऽपवर्गे, तत्र यदुक्तम्—"अपवर्गेऽप्येवं प्रसङ्गः" इति, तदयुक्तम्; तस्मात् सर्वदुःखविमोक्षोऽपवर्गः। यस्मात् सर्व-

---

योगाभ्यासस्थानमुपदिशति।—तत्र स्थिरचित्तता स्यादिति भावः। इदं न सूत्रं, भाष्यमिति केचित् ॥ ४२ ॥

तटस्थः शङ्कते।—एवं प्रसङ्गः अर्थविशेषप्राबल्याद्विषयावभासप्रसङ्गः ॥ ४३ ॥

समाधत्ते।—निष्पन्नस्य शरीराऽऽदेः, अवश्यम्भावित्वात् कारणत्वात्, ज्ञानाऽऽदिष्विति शेषः ॥ ४४ ॥

दुःखबीजं सर्वदुःखाऽऽयतनं चापवर्गे विच्छिद्यते, तस्मात् सर्वेण दुःखेन विमुक्तिरपवर्गः, न निर्बीजं निरायतनञ्च दुःखमुत्पद्यत इति ॥ ४५ ॥

**तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः ॥ ४६ ॥**

तस्यापवर्गस्याधिगमाय यमनियमाभ्यामात्मसंस्कारः ; यमः

---

ननु किमेतावता ? इत्यत आह ।—तस्य शरीराऽऽदेः, अभावः, तदारम्भकधर्माधर्मविरहादिति भावः ॥ ४५ ॥

ननु समाधिमात्रादेव निष्प्रत्यूहोऽपवर्गः स्यात् ?—साधनान्तरं वाऽपेक्षणीयम् ? अत आह ; यद्वा,—समाधिसाधनान्याह ।—तदर्थमपवर्गार्थमिति भाष्याऽऽदौ, तदर्थं समाध्यर्थमिति वा । यमानाह योगसूत्रम्,—“अहिंसासत्यमस्तेयब्रह्मचर्यापरिग्रहा यमाः” ( यो० सू० सा० पा० ३० सू० ) । नियमानाह,—“शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः” (यो० सू० सा० पा० ३२ सू०)। स्वाध्यायः स्वाभिमतमन्त्रजपः । निषिद्धानाचरणतत्तदाश्रमविहिताचरणे यमनियमा इत्यन्ये । आत्मसंस्कारः आत्मनोऽपवर्गाधिगमक्षमता । ननु यमनियमावेव साधने, उतान्यदपि ? इत्यत आह, योगादिति ।—आत्मविधिः आत्मसाक्षात्कारविधायकवाक्यम्,—“आत्मा वा अरे द्रष्टव्यः” ( बृह० उप० ४ अध्या० ५ ब्राह्म० ६ मन्त्रः ) “आत्मानं चेद्विजानीयात्” ( बृह० उप० ४ अध्या० ४ ब्राह्म० १२ मन्त्रः ) इत्यादि । योगादिति प्रतिपाद्यत्वं पञ्चम्यर्थः ; तथा च, योगशास्त्रोक्ताऽऽत्मतत्त्वाधिगमसाधनैश्चाऽऽत्मसंस्कारः कर्त्तव्य इत्यर्थः ; तथा च योगसूत्रं,—“योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः” ( यो० सू० सा० पा० २८ सू० ) ; तदर्थश्च,—योगाङ्गानां यमनियमाऽऽदीनाम्, अनुष्ठानाच्चित्तस्याशुद्धेरविद्याऽऽदिरूपायाः, क्षये सति ज्ञानस्य दीप्तिः प्रकर्षः, स च विवेकख्यातिपर्यन्तो जायते, सा च सत्त्वपुरुषान्यतासाक्षात्कारः । अस्मन्मते तु,—देहाऽऽदिभिन्नाऽऽत्मसाक्षात्कारः, स च नेदानीमविद्याप्रतिबन्धाद्देहाऽऽत्मनोर्मनश्चक्षुराद्ययोग्यत्वाच्च ; भवति चासौ योगजधर्मात् ; योगाङ्गानि तदुक्तानि,— “यमनियमाऽऽसनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि” इति ( यो० सू० सा० पा० २९ सू० ) ; आसनं पद्माऽऽसनाऽऽदि कुशाऽऽसनाऽऽदि च, “चैलाजिनकुशोत्तरम्” ( गी० ६ अध्या० ११ श्लो० ) इति भगवद्वचनात् ।

समानमाश्रमिणां धर्मसाधनं, नियमस्तु विशिष्टम्, आत्मसंस्कारः पुनरधर्महानं धर्मोपचयश्च ; योगशास्त्राच्चाध्यात्मविधिः प्रतिपत्तव्यः ; स पुनस्तपः प्राणायामः प्रत्याहारो ध्यानं धारणा इति। इन्द्रियविषयेषु प्रसङ्ख्यानाभ्यासो रागद्वेषप्रहाणार्थः, उपायस्तु योगाऽऽचारविधानमिति ॥ ४६ ॥

**ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवादः ॥ ४७ ॥**

तदर्थमिति। प्रकृतं ज्ञायतेऽनेनेति ज्ञानमात्मविद्याशास्त्रं, तस्य ग्रहणमध्ययनधारणे, अभ्यासः सततक्रियाऽध्ययनश्रवणचिन्तनानि, तद्विद्यैश्च सह संवाद इति प्रज्ञापरिपाकार्थम् ; परिपाकस्तु संशयच्छेदनमविज्ञातार्थावबोधोऽध्यवसिताभ्यनुज्ञानमिति। समया वादः संवादः ॥ ४७ ॥

---

प्राणायाममाह योगसूत्रम् ;—"तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः" ( यो० सू० सा० पा० ४९ सू०)। तस्मिन् आसनस्थैर्य्ये, प्राणवायोरेव निर्गमप्रवेशरूपक्रियाविशेषात् श्वासप्रश्वासव्यपदेशः। बहिरिन्द्रियाणां स्वस्वविषयवैमुख्येनावस्थानं प्रत्याहारः। धारणामाह योगसूत्रम् ;—"देशबन्धश्चित्तस्य धारणा" (यो० सू० वि० पा० १ सू० )। देशे नाभिचक्राऽऽदौ, चित्तस्य बन्धो विषयान्तरवैमुख्येनावस्थानम्। ध्यानमाह,—"तत्र प्रत्ययैकतानता ध्यानम्" ( यो० सू० वि० पा० २ सू० )। धारणैव धारावाहिनी ध्यानमित्यर्थः। समाधिमाह,—"तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः" ( यो० सू० वि० पा० ३ सू० )। ध्येयस्य धर्मो ज्ञानस्वरूपञ्च यदि ध्याने न भासते, तदा समाधिरित्यर्थः। सूत्रान्तरम् ;—"त्रयमन्तरङ्गं पूर्वेभ्यः" ( यो० सू० वि० पा० ७ सू० ), चरमत्रयं साक्षादुपकारकमित्यर्थः ॥ ४६ ॥

नन्वेवं किमान्वीक्षिक्या ? इत्यत आह।—तदर्थमित्यनुवर्त्तते। ज्ञायतेऽनेनेति ज्ञानं शास्त्रं प्रकृतं, तस्य ग्रहणमध्ययनधारणे, तत्राभ्यासो दृढतरसंस्कारः, तद्विद्यैस्तदभियुक्तैः, संवादः, स्वानुभवदार्ढ्याय, न हि योगाङ्गज्ञानाय ; तत्सापेक्षत्वेन न प्रकृतशास्त्रवैफल्य, ध्येयस्वरूपवैलक्षण्यात् ॥ ४७ ॥

"तद्विद्यैश्च सह संवादः" इत्यविभक्तार्थं वचनं विभज्यते,—

**तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोऽर्थिभिरनसूयिभिरभ्युपेयात् ॥ ४८ ॥**

एतन्निगदेनैव नीतार्थमिति ॥ ४८ ॥

यदिदं मन्येत पक्षप्रतिपक्षपरिग्रहः प्रतिकूलः परस्येति,—

**प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे ॥ ४९ ॥**

तमभ्युपेयादिति अनुवर्त्तते। परतः प्रज्ञामुपादित्समानस्तत्त्वबुभुत्साप्रकाशनेन स्वपक्षमनवस्थापयन् स्वदर्शनं परिशोधयेदिति ॥ ४९ ॥

अन्योऽन्यप्रत्यनीकानि च प्रावादुकानां दर्शनानि, स्वपक्षरागेण चैके न्यायमतिवर्त्तन्ते तत्र,—

**तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखाऽऽवरणवत् ॥ ५० ॥**

अनुत्पन्नतत्त्वज्ञानानामप्रहीणदोषाणां तदर्थं घटमानानामेतदिति। विद्यानिर्वेदाऽऽदिभिश्च परेणावज्ञायमानस्य ताभ्यां

---

संवादप्रकारं दर्शयतुमाह।—तं तद्विदं, सब्रह्मचारी सहाध्यायी, विशिष्टः प्रकृष्टज्ञानवान्, श्रेयोऽर्थी मुमुक्षुः; "विशिष्टः पूर्वोक्तभिन्न इत्यर्थः" इति कश्चित्। विजिगीषुव्यावृत्त्यर्थं अनसूयिभिरिति ॥ ४८ ॥

संवादप्रकारमाह।—वाशब्दो निश्चयार्थः। अर्थित्वे तत्त्वबुभुत्सायां सत्यां, प्रयोजनार्थं तत्त्वनिर्णयार्थं, प्रतिपक्षहीनं प्रतिकूलपक्षहीनं, यथा स्यात् तथाऽभ्युपेयात; तथा च भाष्यम्;—"स्वपक्षमनवस्थापयन् स्वदर्शनं परिशोधयेत्" इति; तत्त्वनिर्णीषुतया न पक्षपात इति भावः ॥ ४९ ॥

समाप्तं तत्त्वज्ञानविवृद्धिप्रकरणम्।

तद्विद्यैः सह संवाद इत्युक्त वयोवाद्यैः सह संवादः न कर्त्तव्य इति भ्रमो मा भूदिति तत्त्वज्ञानपरिपालनप्रकरणमारभते।—तत्त्वाध्यवसायस्य तत्त्वनिर्णयस्य, संरक्षणं

विगृह्य कथनम्; विगृह्येति विजिगीषया, न तत्त्वबुभुत्सयेति, तदेतद्विद्यापालनार्थं, न लाभपूजा-ख्यात्यर्थमिति ॥ ५० ॥

## ताभ्यां विगृह्य कथनम् ॥ ५० ॥ क ॥

इति वात्स्यायनीये न्यायभाष्ये चतुर्थाध्यायस्य द्वितीयमाह्निकम्।
समाप्तश्चायं चतुर्थोऽध्यायः ॥ ४ ॥

---

परोक्तदूषणाऽऽस्कन्दनेनाप्रामाण्यशङ्काविघटनं, तदर्थं, जल्पवितण्डे, पूर्वमुक्ते इति शेषः ॥ ५० ॥

ननु ताभ्यां किं कार्य्यम्? इत्यत आह।—अयमर्थः,—वयोवाद्यैः तद्दर्शनाभ्यासाहितकुज्ञानैरपरैर्वा यदि स्वपक्ष आक्षिप्यते, तदा ताभ्यां जल्पवितण्डाभ्याम्; सावधारणं चैतत्। वय्यन्तःपातिनामाक्षेपे तु वादजल्पवितण्डाभिर्यथेच्छं कथयेदिति भावः। वस्तुतस्तु मुमुक्षोर्न तादृशैः सह संवादः, वीतरागत्वात्; न हि शास्त्रपरिपालनमपि तदुद्देश्यं, न वा तदुपेक्षयैव शास्त्रं गच्छति, किन्तु शास्त्रमभ्यस्येतेति तत्त्वमिति। इति वृत्तिसम्मतम् अधिकसूत्रम् ॥ ५० ॥ क ॥

समाप्तं तत्त्वज्ञानपरिपालनप्रकरणम्।

इति चतुर्थाध्यायस्य द्वितीयमाह्निकम् ॥ २ ॥

इति महामहोपाध्यायश्रीमद्विद्यानिवासभट्टाचार्य्याऽऽत्मज-श्रीविश्वनाथसिद्धान्तपञ्चाननभट्टाचार्य्यकृतायां न्यायसूत्रवृत्तौ चतुर्थोऽध्यायः ॥ ४ ॥

---

## पञ्चमाध्यायस्य प्रथममाह्निकम् ।

साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिबहुत्वमिति सङ्क्षेपेणोक्तम्; तद्विस्तरेण विभज्यते। ताः खल्विमा जातयः स्थापनाहेतौ प्रयुक्ते चतुर्विंशतिः प्रतिषेधहेतवः।

**साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्प-साध्य-प्राप्त्यप्राप्तिप्रसङ्ग-प्रतिदृष्टान्तानुत्पत्तिसंशय-प्रकरणाहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धि-नित्यानित्यकार्य्यसमाः ॥ १ ॥**

साधर्म्येण प्रत्यवस्थानमविशिष्यमाणं स्थापनाहेतुतः

---

नत्वा शङ्करचरणं शरणं दीनस्य दुर्गमे तरणम्।
सम्प्रति निरूपयामः पञ्चममध्यायमतिगहनम् ॥

अथ जातिनिग्रहस्थानयोरुद्दिष्टयोर्लक्षितयोर्बहुत्वं "तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम्" इत्यनेन सूचितं तत्तच्छिष्यजिज्ञासाऽनुसारिप्रमाणाऽऽदिपरीक्षयाऽन्तरितं, सम्प्रत्यवसरतः प्रपञ्चनीयम्; तत्र जातिपरीक्षासहितजातिनिग्रहस्थानविशेषलक्षणमध्यायार्थः। जातिपरीक्षासहितजातिविशेषलक्षणं प्रथमाऽऽह्निकार्थः; सप्तदश चात्र प्रकरणानि, तत्राऽऽदौ सत्प्रतिपक्षदेशनाभासप्रकरणम्, अन्यानि च यथास्थानं वक्ष्यन्ते, तत्र च विशेषलक्षणार्थं जातिं विभजते।

अत्र च साधर्म्याऽऽदीनां कार्य्यान्तानां द्वन्द्वे तैः समा इत्यर्थात् साधर्म्यसमादयश्चतुर्विंशतिर्जातय इत्यर्थः, अत्र च जातिविशेष्यत्वात् स्त्रीलिङ्गं समाशब्दं मन्यन्ते; भाष्यवार्त्तिकाऽऽदौ समशब्दः; अग्रिमसूत्रेषु तु समशब्दो निर्विवाद एव, तत्र जातिशब्दस्य स्त्रीलिङ्गतया यद्यपि नान्वयः, तथाऽपि प्रतिषेधो विशेष्य इति भाष्याऽऽदयः। वयन्तु,—"तद्विकल्पात्" इति सूत्रस्थविकल्पस्यैव विशेष्यत्वम्; विविधः कल्पः प्रकारो विकल्पः; तथा चैते साधर्म्यसमाऽऽदयो जातिविकल्पाः, एवमग्रिमसूत्रेष्वपि। इत्थञ्च जातेर्विशेष्यत्वे साधर्म्यसमेत्यपीति ब्रूमः। "समीकरणार्थं प्रयोगः समः" इति वार्त्तिकम्।

साधर्म्यसमः, अविशेषं तत्र तत्रोदाहरिष्यामः। एवं वैधर्म्यसमप्रभृतयोऽपि निर्वक्तव्याः॥ १॥

लक्षणन्तु,—

**साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्य्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ॥ २॥**

साधर्म्येणोपसंहारे साध्यधर्मविपर्य्ययोपपत्तेः साधर्म्येणैव प्रत्यवस्थानमविशिष्यमाणं स्थापनाहेतुतः साधर्म्यसमः प्रतिषेधः। निदर्शनम्;—क्रियावानात्मा, द्रव्यस्य क्रियाहेतुगुणयोगात्; द्रव्यं लोष्टः क्रियाहेतुगुणयुक्तः क्रियावान्, तथा चाऽऽत्मा, तस्मात् क्रियावानिति। एवमुपसंहृते परः साधर्म्येणैव प्रत्यवतिष्ठते, निष्क्रिय आत्मा, विभुनो द्रव्यस्य निष्क्रियत्वात्; विभु चाऽऽकाशं निष्क्रियञ्च, तथा चाऽऽत्मा, तस्मान्निष्क्रिय इति। न चास्ति विशेषहेतुः, क्रियावत्साधर्म्यात् क्रियावता भवितव्यं, न पुनरक्रियसाधर्म्यात् निष्क्रियेण, इति विशेषहेत्वभावात् साधर्म्यसमः

यद्यपि नैतावता समीकरणं, तथाऽपि समीकरणाद्देश्यकत्वमस्त्येव; अथवा साधर्म्यमिव समं यत्र स साधर्म्यसमः, एकत्र व्याप्तिराधिक्येऽपि साधर्म्यं सममेवेति भावः॥ १॥

साधर्म्यवैधर्म्यसमौ लक्षयति।—उपसंहारे साध्यस्योपसंहरणे वादिना कृते, तद्धर्मस्य साध्यरूपधर्मस्य, यो विपर्य्ययो व्यतिरेकः, तस्य साधर्म्यवैधर्म्याभ्यां केवलाभ्यां व्याप्त्यनपेक्षाभ्यां, यदुपपादनं, ततो हेतोः साधर्म्यवैधर्म्यसमावुच्येते; तदयमर्थः,—वादिना अन्वयेन व्यतिरेकेण वा साध्ये साधिते प्रतिवादिनः साधर्म्यमात्रप्रवृत्तहेतुना तदभावाऽऽपादनं साधर्म्यसमा, वैधर्म्यमात्रप्रवृत्तहेतुना तदभावाऽऽपादनं वैधर्म्यसमा; तत्र साधर्म्यसमा यथा,—शब्दोऽनित्यः कृतकत्वाद्घटवत्, व्यतिरेकेण वा व्योमवदित्युपसंहृते नैतदेवम्; यद्यनित्यघटसाधर्म्यान्नित्याऽऽकाशवैधर्म्याद्वाऽनित्यः स्यात्, नित्याऽऽकाशसाधर्म्यादमूर्त्तत्वान्नित्यः स्यात्, विशेषो वा वक्तव्यः। वैधर्म्यसमा यथा,—शब्दोऽनित्यः कृतकत्वाद्घटवत् आकाशवद्वा, इति स्थापनायाम् अनित्यघटवैधर्म्यादमूर्त्तत्वान्नित्यः स्यात् विशेषो वा वक्तव्य इति। अत्र साधर्म्यत्वमात्रं वैधर्म्यत्वमात्रं वा गमकतौपयिक·

प्रतिषेधो भवति। अथ वैधर्म्यसमः ;—क्रियाहेतुगुणयुक्तो लोष्टः परिच्छिन्नो दृष्टः, न च तथाऽऽत्मा ; तस्मान्न लोष्टवत् क्रियावानिति ; न चास्ति विशेषहेतुः, क्रियावत्साधर्म्यात् क्रियावता भवितव्यं, न पुनः क्रियावद्वैधर्म्यादक्रियेण, इति विशेषहेत्वभावाद्वैधर्म्यसमः। वैधर्म्येण चापसंहारे निष्क्रिय आत्मा, विभुत्वात् ; क्रियावद्द्रव्यमविभु दृष्टम् ; यथा लोष्टः, न च तथाऽऽत्मा, तस्मान्निष्क्रियः, इति वैधर्म्येण प्रत्यवस्थानम् ; निष्क्रियं द्रव्यमाकाशं क्रियाहेतुगुणरहितं दृष्टं, न तथाऽऽत्मा, तस्मान्न निष्क्रिय इति ; न चास्ति विशेषहेतुः, क्रियावद्वैधर्म्यान्निष्क्रियेण भवितव्यं, न पुनरक्रियवैधर्म्यात्, क्रियावतेति विशेषहेत्वभावाद्वैधर्म्यसमः। क्रियावान् लोष्टः क्रियाहेतुगुणयुक्तो दृष्टः, तथा चाऽऽत्मा, तस्मात् क्रियावानिति ; न चास्ति विशेषहेतुः, क्रियावद्वैधर्म्यान्निष्क्रियः, न पुनः क्रियावत्साधर्म्यात् क्रियावानिति विशेषहेत्वभावात् साधर्म्यसमः ॥ २ ॥

अनयोरुत्तरम्,—

गोत्वाद्गोसिद्धिवत् तत्सिद्धिः ॥ ३ ॥

साधर्म्यमात्रेण वैधर्म्यमात्रेण च साध्यसाधने प्रतिज्ञायमाने स्यादव्यवस्था, सा तु धर्मविशेषे नोपपद्यते ; गोसाधर्म्यात् गोत्वाज्जातिविशेषाद्गौः सिध्यति, न तु सास्नाऽऽदिसम्बन्धात् (फ) अश्वाऽऽदिवैधर्म्याद्गोत्वादेव गौः सिध्यति, न गुणादिभेदात् ;

मित्यभिमानात् सत्प्रतिपक्षदेशनाभासे चेमे। "अनैकान्तिकदेशनाभासा" इति वार्त्तिके त्वनैकान्तिकपदं योगात् सत्प्रतिपक्षपरम्, एकान्ततः साध्यसाधकत्वाभावात् ॥ २ ॥

अनयोरसदुत्तरत्वे बीजमाह।—गोत्वात् गोसिद्धिर्गोव्यवहार इति सम्प्रदायः। वयन्तु,—गोत्वाद्गवेतरासमवेतत्वे सति गोसमवेतात्सास्नादितः, एतेन व्याप्तिपक्षधर्मत्वे दर्शिते ; गोर्गोत्वस्य तादात्म्येन गोरेव वा सिद्धिर्यथा, तथैव कृतकत्वादपि व्याप्ति-

(फ) अत्र बहुव्रीहिः। [partly illegible: अत्र ...सावयवानां बहुव्रीहिः।]

तच्चैतत् कृतव्यवस्थानमवयवप्रकरणे ; प्रमाणानामभिसम्बन्धाच्चैकार्थकारित्वं समानं वाक्य इति, हेत्वाभासाऽऽश्रया खल्वियमव्यवस्थेति ॥ ३ ॥

साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः ॥ ४ ॥

दृष्टान्तधर्मं साध्येन समासञ्जयन्नुत्कर्षसमः। यदि क्रियाहेतुगुणयोगाल्लोष्टवत् क्रियावानेवाऽऽत्मा, लोष्टवदेव स्पर्श-

---

पक्षधर्मतासहितादनित्यत्वसिद्धिः, न तु व्याप्तिपक्षधर्मतारहितात् साधर्म्यमात्रात् ; तथा सति चदूषकसाधर्म्यात् प्रमेयत्वादितस्त्वद्वचनमप्यदूषकं स्यादित्ययं विशेषः ॥ ३ ॥

इति सत्प्रतिपक्षदेशनाभासप्रकरणम्।

क्रमप्राप्तं जातिषट्कं निरूपयति।—उत्कर्षेण सम उत्कर्षसमः, एवमपकर्षसमोऽपि। वर्ण्यावर्ण्यसाध्येति भावप्रधानो निर्देशः; वर्ण्यत्वाऽऽदिना समो वर्ण्यसमाऽऽदिः। अविद्यमानधर्माऽऽरोप उत्कर्षः, विद्यमानधर्मापचयोऽपकर्षः, वर्ण्यत्वं वर्णनीयत्वं, तच्च सन्दिग्धसाध्यकत्वाऽऽदि, तदभावोऽवर्ण्यत्वं, विकल्पो वैविध्यं, साध्यत्वं पक्षावयवसाधनीयत्वम् ; साध्यदृष्टान्तयोर्धर्मविकल्पादिति पञ्चानामुत्थानबीजम् ; उभयसाध्यत्वादिति षष्ठस्य। तदयमर्थः,—साध्यतेऽनेनेति साध्यं पक्षः, तथा च साध्यदृष्टान्तयोरित्यस्य पक्षदृष्टान्तयोरन्यतरस्मिन्नित्यर्थः, धर्मविकल्पो धर्मस्य वैचित्र्यम्; तच्च क्वचित्सत्त्वं, क्वचिदसत्त्वम् ; प्रकृते साध्यसाधनान्यतररूपस्य धर्मस्य विकल्पात्सत्त्वाद्वयोऽविद्यमानधर्माऽऽरोपः, स उत्कर्षसमः, व्याप्तिमपुरस्कृत्य पक्षदृष्टान्तान्यतरस्मिन् साध्यसाधनान्यतरेणाविद्यमानधर्मप्रसञ्जनम् उत्कर्षसम इति फलितार्थः ; यथा शब्दोऽनित्यः कृतकत्वादिति स्थापनायाम्, अनित्यत्वेन कृतकत्वं घटे रूपसहचरितम्, अतः शब्दोऽपि रूपवान् स्यात् ; तथा च विवक्षितविपरीतसाधनाद्विशेषविरुद्धो हेतुः, तद्देशनाभासा चेयम्। एवं श्रावणशब्दसाधर्म्यात् कृतकत्वाद्घटोऽपि श्रावणः स्यादविशेषात् ; वस्तुतस्तु घटे श्रावणत्वाऽऽपादनेऽर्थान्तरम्, अत एतल्लक्षणे दृष्टान्तपदं साध्यपदञ्च न देयम्। अपकर्षसमायान्तु धर्मविकल्पः, धर्मस्य सहचरितधर्मस्य विकल्पोऽसत्त्वं, ततः अपकर्षः साध्यसाधनान्यतरस्याभावप्रसञ्जनम् ; तथा च पक्षदृष्टान्तान्यतरस्मिन् व्याप्तिमपुरस्कृत्य सहचरितधर्माभावेन हेतुसाध्यान्यतराभावप्रसञ्जनमपकर्षसमा ; यथा शब्दोऽनित्यः

वानपि प्राप्नोति ; अथ न स्पर्शवान्, लोष्टवत् क्रियावानपि न प्राप्नोति, विपर्य्यये वा विशेषो वक्तव्य इति । साध्ये धर्माभाव

---

कृतकत्वादित्यत्र यद्यनित्यत्वसहचरितघटधर्मात् कृतकत्वादनित्यः शब्दः, तदा कृतकत्वा- नित्यत्वसहचरितघटधर्मरूपत्वस्य व्यावृत्त्या शब्दे कृतकत्वस्यानित्यत्वस्य च व्यावृत्तिः स्यात्, आद्ये—असिद्धिदेशना, द्वितीये—बाधदेशना ; एवं शब्दे कृतकत्वसहचरितश्रावणत्वस्य संयोगादावनित्यत्वकृतकत्वसहचरितगुणत्वस्य च व्यावृत्त्या घटेऽनित्यत्वं कृतकत्वञ्च व्यावर्त्ततेति । दृष्टान्ते साध्यसाधनवैकल्यदेशनाभासोऽपीयम् ; यत्तु वार्त्तिके,—"शब्दो नीरूपः इतिवत् घटोऽपि नीरूपः स्यादित्यपकर्ष इति" तदसत्, घटे नीरूपत्वाऽऽपादन- स्यार्थान्तरत्वात् ; आचार्य्यस्वरसोऽप्येवम् ; यत्तु वैधर्म्यसमाया अत्रैवान्तर्भावः स्यादिति, तन्न, उद्भेयसङ्करेऽप्युपाधेरसङ्करात् । वर्ण्यसमायान्तु साध्यः सिद्धाभाववान् सन्दिग्ध- साध्यकाऽऽदिर्वा, तस्य धर्मः सन्दिग्धसाध्यकाऽऽदिवृत्तिहेतुः, तस्य विकल्पात्मत्वात्, दृष्टान्ते वर्ण्यत्वस्य सन्दिग्धसाध्यकत्वस्याऽऽपादनं वर्ण्यसमा ; तदयमर्थः,—पक्षवृत्तिहेतुर्हि गमकः, पक्षश्च सन्दिग्धसाध्यकः, तथा च सन्दिग्धसाध्यकवृत्तिहेतुस्तथा दृष्टान्तेऽपि स्वीकार्य्यः, तथा च दृष्टान्तस्यापि सन्दिग्धसाध्यकत्वात्पक्षवृत्तित्वानिश्चयादसाधारणो हेतुः, तद्देशनाभासा चेयं, हेतुः सन्दिग्धसाध्यकवृत्तिर्यदि न दृष्टान्ते, तदा गमकत्व- भावात् साधनविकलो दृष्टान्तः स्यादिति भावः । अवर्ण्यसमायान्तु दृष्टान्ते सिद्धसाध्यकै र्यो धर्मो हेतुः, तस्य सत्त्वात्, पक्षे शब्दादावसन्दिग्धसाध्यकत्वाऽऽपादनमवर्ण्यसमा, दृष्टान्ते हेतोर्यादृशत्वं, तादृशो हेतुरेव गमक इत्यभिमानेन एवमापादनम् ; दृष्टान्ते यो हेतुः सिद्धसाध्यकवृत्तिः, स चेन्न पक्षे, तदा गमकहेत्वभावात् स्वरूपासिद्धिः स्यात्, अतस्तादृशो हेतुरवश्यं पक्षत्वाभिमते स्वीकार्य्यः ; तथा च सन्दिग्धसाध्यकत्वलक्षण पक्षत्वाभावादाश्रयासिद्धिः ; असिद्धिदेशनाभासा चेयम् । विकल्पसमायान्तु पक्षे दृष्टान्ते च यो धर्मः, तस्य विकल्पो विरुद्धः कल्पो व्यभिचारित्वम् ; उपलक्षणं चैतत् अन्यहान्त- र्तनस्यापि बोध्यम् । व्यभिचारोऽपि हेतोर्धर्मान्तरं प्रति, धर्मान्तरस्य साध्यं प्रति, 'र्मान्तरस्य धर्मान्तरं प्रति वा ; तथा च कस्यचिद्धर्मस्य क्वचिद्व्यभिचारदर्शनेन धर्मत्वाविशेषात् प्रकृतहेतोः प्रकृतसाध्यं प्रति व्यभिचाराऽऽपादनं विकल्पसमा ; यथा शब्दोऽनित्यः कृतकत्वादित्यत्र कृतकत्वस्य गुरुत्वव्यभिचारदर्शनाद्रूपत्वस्यानित्यत्व- व्यभिचारदर्शनादनित्यत्वस्य मूर्त्तत्वव्यभिचारदर्शनाद्धर्मत्वाविशेषात् कृतकत्वमप्यनित्यत्वं व्यभिचरेत् ; इत्यनैकान्तिकदेशनाभासा चेयम् । पक्षदृष्टान्ताऽऽदेः प्रकृतसाध्य- तुल्यताऽऽपादनं साध्यसमा ; तत्रायमाशयः,—एतत्प्रयोगसाध्यस्यैवानुमितिविषयत्वम् ;

दृष्टान्तात् प्रसञ्जयतोऽपकर्षसमः । लोष्टः खलु क्रियावानविभुर्दृष्टः, काममात्माऽपि क्रियावानविभुरस्तु, विपर्य्यये वा विशेषो वक्तव्य इति । ख्यापनीयो वर्ण्यः, विपर्य्ययादवर्ण्यः, तावेतौ साध्यदृष्टान्तधर्मौ, विपर्य्ययस्य तौ वर्ण्यावर्ण्यसमौ भवतः । साधनधर्मयुक्ते दृष्टान्ते धर्मान्तरविकल्पात् साध्यधर्मविकल्पं प्रसञ्जयतो विकल्पसमः । क्रियाहेतुगुणयुक्तं किञ्चिद्गुरु, यथा लोष्टः ; किञ्चिल्लघु, यथा वायुः । एवं क्रियाहेतुगुणयुक्तं किञ्चित् क्रियावत् स्यात्, यथा लोष्टः ; किञ्चिदक्रियं, यथाऽऽत्मा, विशेषो वा वाच्य इति । हेत्वाद्यवयवसामर्थ्ययोगी धर्मः साध्यः, तं दृष्टान्ते प्रसञ्जयतः साध्यसमः । यदि यथा लोष्टः, तथाऽऽत्मा प्राप्तः, तर्हि यथाऽऽत्मा, तथा लोष्ट इति ; साध्यश्चायमात्मा क्रियावानिति, कामं लोष्टोऽपि साध्यः ; अथ नैवं, न तर्हि यथा लोष्टः, तथाऽऽत्मा ॥ ४ ॥

एतेषामुत्तरम्,—

**किञ्चित्साधर्म्यादुपसंहारसिद्धेर्वैधर्म्यादप्रतिषेधः ॥५॥**

अलभ्यः सिद्धस्य निह्नवः, सिद्धञ्च किञ्चित्साधर्म्यादुप·

---

तथा च पक्षाऽऽदेरनुमितिविषयत्वात् साध्यवदेतत्पर्य्यायसाध्यत्वम्, अतः साध्यसमा ; तथा हि, पक्षाऽऽदेः पूर्वं सिद्धत्वे एतत्पर्य्यायसाध्यत्वाभावान्नानुमितिविषयत्वम् ; पूर्वमसिद्धत्वे पक्षाऽऽदेरज्ञानादाश्रयासिद्ध्यादयः ; तद्देशनाभासा चेयम् । सूत्रार्थस्तु उभयसाध्यत्वात्, उभयं पक्षदृष्टान्तौ, तद्धर्मौ हेत्वादिः, तत्साध्यत्वं तदधीनानुमितिविषयत्वम् ; साध्यस्येव पक्षाऽऽदेरपीति तुल्यताऽऽपादनम् इति, लिङ्गोपहितभानमते लिङ्गस्याप्यनुमितिविषयत्वात् साध्यसमत्व, हेतोश्च साध्यत्वे हेतुभानं, दृष्टान्तोऽपि साध्य इत्याशयः ॥ ४ ॥

एतासामसदुत्तरत्वे बीजमाह ।—किञ्चित्साधर्म्यात् साधर्म्यविशेषात् व्याप्तिसहितात्, उपसंहारसिद्धेः साध्यसिद्धेः, वैधर्म्यादेतद्विपरीतात्, व्याप्तिनिरपेक्षात् साधर्म्यमात्रात्, अयमा अतः प्रतिषेधो न सम्भवतीत्यर्थः, अन्यथा प्रमेयत्वरूपासाधकसाधर्म्यात् तद्दूषणमप्यसम्यक् स्यादिति भावः ; तथा चायं क्रमः,—अनित्यत्वव्याप्यात्

मानम् ; यथा गौस्तथा गवय इति ; तत्र न लभ्यौ गोगवययोर्धर्मविकल्पश्चोदयितुम् ; एवं साधके धर्मे दृष्टान्तादिसामर्थ्ययुक्ते न लभ्यः साध्यदृष्टान्तयोर्धर्मविकल्पाद्वैधर्म्यात् प्रतिषेधो वक्तुमिति ॥ ५ ॥

## साध्यातिदेशाच्च दृष्टान्तोपपत्तेः ॥ ६ ॥

यत्र लौकिकपरीक्षकाणां बुद्धिसाम्यं, तेनाविपरीतोऽर्थोऽतिदिश्यते प्रज्ञापनार्थम् ; एवं साध्यातिदेशाद्दृष्टान्त उपपद्यमाने साध्यत्वमनुपपन्नमिति ॥ ६ ॥

---

कृतकत्वात् शब्देऽनित्यत्वमुपसंहरामः, न तु कृतकत्वं रूपस्यापि व्याप्यं, येन ततो रूपमप्यापादनीयं शब्दे ; एवम् अनित्यत्वं न रूपव्याप्यं, येन रूपाभावादनित्यत्वाभावः शब्दे स्यात् ; एवं वर्ण्यसमेऽपि किञ्चित्साधर्म्यात् व्याप्यताऽवच्छेदकावच्छिन्नाद्धेतोः साध्यसिद्धिः, साध्यहेतुमत्त्वञ्च दृष्टान्तताप्रयोजकं, न तु पक्षे यावद्विशेषणावच्छिन्नो हेतुः, तावदवच्छिन्नहेतुमत्त्वम्, अन्यथा त्वयाऽपि दूषणीयो दृष्टान्तो कर्त्तव्यः, सोऽपि न स्यात् ; एवमवर्ण्यसमेऽपि व्याप्यताऽवच्छेदकावच्छिन्नस्य दृष्टान्तदृष्टस्य पक्षे सत्त्वात् साध्यसिद्धिः, न तु दृष्टान्तवृत्तियावद्धर्मावच्छिन्नस्य पक्षे सत्त्वम् ; एवं विकल्पसमेऽपि प्रकृतसाध्यव्याप्यात् प्रकृतहेतोः साध्यसिद्धिः, तद्वैधर्म्यात् यत्किञ्चिद्व्यभिचारात् कृतः प्रतिषेधो न सम्भवति; न हि यत्किञ्चिद्व्यभिचारादेव प्रकृतहेतोः प्रकृतसाध्यासाधकत्वम्, अतिप्रसङ्गात् ; एवं साध्यसमेऽपि व्याप्याद्धेतोः सिद्धे पक्षे साध्यसिद्धिः, न तु पक्षदृष्टान्तादयोऽप्यनेन साध्यन्ते ; तथा सति क्वचिदपि साध्यसिद्धिर्न स्यात्, त्वदीयदूषणमपि विलीयेत ॥ ५ ॥

वर्ण्यावर्ण्यसाध्यसमासु समाधानान्तरमप्याह ।—दृष्टान्ततोपपत्तिः साध्यातिदेशात्, दृष्टान्ते हि साध्यमतिदिश्यते, तावतैव दृष्टान्तत्वमुपपद्यते, न तद्गतो धर्मः, पक्षदृष्टान्तयोरभेदाऽऽपत्तेः ; पक्षाऽऽदेरपि साध्यसमत्वमेतेन प्रत्युक्तम् । दृष्टोऽन्तो दृष्टान्तः पक्षः, तस्याद्यङ्गमानित्यसः पक्षोत्कीर्तनात् ; तथा च साध्यस्यातिदेशात् साधनात् पक्ष इत्युच्यते, न तु पक्षोऽपि साध्यते, अतिप्रसङ्गादिति भावः ॥ ६ ॥

समाप्तं जातिषट्कप्रकरणम् ।

प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्या अविशिष्टत्वादप्राप्त्या असाधकत्वाच्च प्राप्त्यप्राप्तिसमौ ॥ ७ ॥

हेतुः प्राप्य वा साध्यं साधयेत्?—अप्राप्य वा? न तावत् प्राप्य, प्राप्त्यामविशिष्टत्वादसाधकः; द्वयोर्विद्यमानयोः प्राप्तौ सत्यां किं कस्य साधकं साध्यं वा? अप्राप्य साधकं न भवति, नाप्राप्तः प्रदीपः प्रकाशयतीति; प्राप्त्या प्रत्यवस्थानं प्राप्तिसमः, अप्राप्त्या प्रत्यवस्थानमप्राप्तिसमः ॥ ७ ॥

अनयोरुत्तरम्,—

घटाऽऽदिनिष्पत्तिदर्शनात् पीड़ने चाभिचारादप्रतिषेधः ॥ ८ ॥

उभयथा खल्वयुक्तः प्रतिषेधः, कर्त्तृकरणाधिकरणानि प्राप्य

---

क्रमप्राप्तौ प्राप्त्यप्राप्तिसमौ लक्षयति।—हेतोरिति साधकत्वमिति शेषः। प्राप्तिपक्षे दोषमाह, प्राप्त्याऽविशिष्टत्वादिति।—द्वयोरपि प्राप्तत्वाविशेषात् किं कस्य साधकम्? अप्राप्तिपक्षे दोषमाह, अप्राप्त्येति।—अप्राप्तस्य साधकत्वेऽतिप्रसङ्गात्, साधकत्वञ्चात्र कारकज्ञापकसाधारणम्; एवञ्च कारकज्ञापकलक्षणं साधनं कार्य्यज्ञाप्यलक्षणेन साध्येन सम्बद्धं सत्साधकं चेत्, तदा सत्त्वाविशेषान्न कार्य्यकारणभावः, तत्सम्बन्धस्य प्रागेव ज्ञातत्वान्न ज्ञाप्यज्ञापकभावः, प्राप्तयोर्न जन्यजनकभावः। प्राप्तत्वेन लवणोदकयोरिवाभेदादित्याशय इत्यन्ये; तथा च प्राप्त्याऽविशेषादनिष्टाऽऽपादनेन प्रत्यवस्थानं प्राप्तिसमा। यदि चाप्राप्य लिङ्गं साध्यबुद्धिं जनयति, साध्याभावबुद्धिमेव किं तन्न जनयेत्? अप्राप्तत्वाविशेषात्; तथा चाप्राप्त्या साधकत्वादनिष्टाऽऽपादनमप्राप्तिसमा। प्रतिकूलतर्कदेशनाभासे चेमे ॥ ७ ॥

अनयोरसदुत्तरत्वे बीजमाह।—दण्डादितो घटाऽऽदिनिष्पत्तेर्दर्शनात् सर्वलोकप्रत्यक्षसिद्धत्वात्, अभिचारात् श्येनादितः, शत्रुपीड़ने च व्यभिचारान्न त्वदुक्तः प्रतिषेधः सम्भवति; न हि कारणं दण्डाऽऽदि प्रागेव घटाऽऽदिना सम्बद्धम्, अपि तु मृदादिना;

स्यदं घटाऽऽदिकार्य्यं निष्पादयन्ति, अभिचाराच्च पीड़ने सति दृष्टमप्राप्य साधकत्वमिति ॥ ८ ॥

**दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ ॥ ९ ॥**

साधनस्यापि साधनं वक्तव्यमिति प्रसङ्गे प्रत्यवस्थानं प्रसङ्गसमः प्रतिषेधः। क्रियाहेतुगुणयोगी क्रियावान् लोष्ट इति हेतुर्नापदिश्यते ; न च हेतुमन्तरेण सिद्धिरस्तीति। प्रतिदृष्टान्तेन प्रत्यवस्थानं प्रतिदृष्टान्तसमः। क्रियावानात्मा, क्रियाहेतुगुणयोगात् लोष्टवदित्युक्ते प्रतिदृष्टान्त उपादीयते, क्रियाहेतुगुणयुक्तमाकाशं निष्क्रियमिति। कः पुनराकाशस्य क्रियाहेतुगुणः ? वायुना संयोगः संस्कारापेक्षः वायुवनस्पतिसंयोगवदिति ॥ ९ ॥

श्येनाऽऽदिरप्युद्देश्यतया पीड़ां जनयति, अन्यथा लोकवेदसिद्धकार्य्यकारणभावोच्छेदे त्वदुक्तो हेतुरप्यसाधकः स्यादिति ॥ ८ ॥

इति प्राप्त्यप्राप्तिसमजातिद्वयप्रकरणम् ।

क्रमप्राप्ते प्रसङ्गप्रतिदृष्टान्तसमे जाती लक्षयति।—दृष्टान्तस्य कारणं प्रमाणं, तदनपदेशोऽनभिधानम्, अभिधानञ्चानतिप्रयोजनकम् ; तथा च दृष्टान्तस्य साध्यवत्त्वे प्रमाणाभावात् प्रत्यवस्थानमर्थः ; यद्यपीदं सदुत्तरमेव, तथाऽपि दृष्टान्ते प्रमाणं वाच्यं, तत्रापि प्रमाणान्तरमित्यनवस्थया प्रत्यवस्थाने तात्पर्य्यम् ; तदुक्तमाचार्य्यैः,—"अनवस्थाभासप्रसङ्गः प्रसङ्गसमः" इति। एतन्मते हेतोर्हेत्वन्तरमित्यनवस्थाऽपि प्रसङ्गसम एव ; पूर्वमते तु हेत्वनवस्थाऽऽदिकं वक्ष्यमाणाऽऽकृतिगणेष्वन्तर्भूतमिति विशेषः। अनवस्थादेशनाभासा चेयम्। प्रतिदृष्टान्तेन प्रत्यवस्थानात् प्रतिदृष्टान्तसमः. एतच्च सावधारणम् ; तेन प्रतिदृष्टान्तमात्रबलेन व्याप्तिमपुरस्कृत्य प्रत्यवस्थानमर्थः, तेन साधर्म्यसमाव्युदासः। यदि घटदृष्टान्तबलेनानित्यः शब्दः, तदाऽऽकाशदृष्टान्तबलेन नित्य एव स्यात्, नित्यः किं न स्यादिति बाधः प्रतिरोधो वाऽऽपादनीयः, हेतुरनङ्गम् दृष्टान्तमात्रबलादेव साध्यसिद्धिरित्यभिमानः। बाधप्रतिरोधान्यतरदेशनाभासा चेयम् ॥ ९ ॥

अनयोरुत्तरम्,—

**प्रदीपाऽऽदानप्रसङ्गनिवृत्तिवत्तद्विनिवृत्तिः ॥ १० ॥**

इदं तावदयं पृष्टो वक्तुमर्हति, अथ के प्रदीपमुपाददते ?—किमर्थं वा ?—इति ; दिदृक्षमाणाः दृश्यदर्शनार्थमिति। अथ प्रदीपं दिदृक्षमाणाः प्रदीपान्तरं कस्मान्नोपाददते ? अन्तरेणापि प्रदीपान्तरं दृश्यते प्रदीपः, तत्र प्रदीपदर्शनार्थं प्रदीपोपादानं निरर्थकम्। अथ दृष्टान्तः किमर्थमुच्यत इति ?—अप्रज्ञातस्य ज्ञापनार्थमिति। अथ दृष्टान्ते कारणापदेशः किमर्थं दृश्यते ? यदि प्रज्ञापनार्थं, प्रज्ञातो दृष्टान्तः ; स खलु लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं, स दृष्टान्तः, इति तत्प्रज्ञानार्थः कारणापदेशो निरर्थकः, इति प्रसङ्गसमस्योत्तरम् ॥ १० ॥

अथ प्रतिदृष्टान्तसमस्योत्तरम्,—

**प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः ॥ ११ ॥**

प्रतिदृष्टान्तं ब्रुवता न विशेषहेतुरपदिश्यते,—अनेन प्रकारेण प्रतिदृष्टान्तः साधकः, न दृष्टान्त इति ; एवं प्रति-

---

प्रसङ्गसमे प्रत्युत्तरमाह।—दृष्टान्तो हि निदर्शनस्थानत्वेन साध्यनिश्चयार्थमपेक्ष्यते, न तु दृष्टान्तदृष्टान्ताऽऽद्यनवस्थितपरम्परा लोकसिद्धा युक्तिसिद्धा वा ; अन्यथा घटाऽऽदिप्रत्यक्षाय प्रदीप इव प्रदीपप्रत्ययार्थमनवस्थितप्रदीपपरम्परा प्रसज्येत, त्वदीयसाधनमपि व्याहन्येत ॥ १० ॥

प्रतिदृष्टान्तसमे प्रत्युत्तरमाह।—अयमाशयमुत्तरक्रमः,—प्रतिदृष्टान्तस्त्वया किमर्थमुपादीयते ?—मदीयहेतोर्बाधार्थं, सत्प्रतिपक्षितत्वार्थं वा ? नाऽऽद्यः, यतः प्रतिदृष्टान्तस्य हेतुत्वे स्वार्थसाधकत्वे, मदीयो दृष्टान्तो नाहेतुः नासाधकः, तथा च तुल्यबलत्वान्न बाधः ; न वा द्वितीयोऽपि, यतः प्रतिदृष्टान्तस्य स्वार्थसाधकत्वे उच्यमाने नाहेतुर्दृष्टान्तः, मदीयो दृष्टान्तस्तु सहेतुकत्वादाधिकबलः। वस्तुतो हेतुं विना दृष्टान्त-

दृष्टान्तहेतुत्वे नाहेतुर्दृष्टान्त इत्युपपद्यते; स च कथमहेतुर्न स्यात्? यद्यप्रतिषिद्धः साधकः स्यादिति ॥ ११ ॥

**प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः ॥१२॥**

अनित्यः शब्दः प्रयत्नानन्तरीयकत्वात् घटवदित्युक्ते अपर आह,—प्रागुत्पत्तेरनुत्पन्ने शब्दे प्रयत्नानन्तरीयकत्वमनित्यत्व-कारणं नास्ति, तदभावान्नित्यत्वं प्राप्तं, नित्यस्य चोत्पत्तिर्नास्ति; अनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमः ॥ १२ ॥

अस्योत्तरम्,—

**तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रति-षेधः ॥ १३ ॥**

तथाभावादुत्पन्नस्येति, उत्पन्नः खल्वयं शब्द इति भवति,

भावेन न सत्प्रतिपक्षसम्भावना, तदभावस्याप्यवगताज्ञानाभावात्; हेतूपादाने तु सहेतुरत्वमेवेति भावः इति ॥ ११ ॥

इति प्रसङ्गसमप्रतिदृष्टान्तसमप्रकरणम् ।

क्रमप्राप्तमनुत्पत्तिसमं लक्षयति ।—प्रागुत्पत्तेरिति, साधनाङ्गस्येति शेषः । कारणाभावात् हेत्वभावात्; तथा च, साधनाङ्गपक्षहेतुदृष्टान्तानामुत्पत्तेः प्राक् हेत्वभाव इत्यनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमः; यथा घटो रूपवान् गन्धात् पटवदित्युक्ते घटोत्पत्तेर्गन्धोत्पत्तेश्च पूर्वं हेत्वभावादसिद्धिः; पटे च गन्धोत्पत्तेः पूर्वं हेत्वभावेन दृष्टान्तासिद्धिः, एवम् आद्यक्षणे रूपाभावाद्बाधश्च, अनुत्पत्त्या प्रत्यवस्थानस्य तत्रापि सत्त्वात् उत्पत्तेः पूर्वं हेत्वाद्यभावेन प्रत्यवस्थानस्यैव लक्षणत्वात् जातित्वं सतीति न विस्मरणीयम्; तेनोत्पत्तिकालावच्छिन्नो घटो गन्धवानित्येव बाधेन प्रत्यवस्थाने नातिव्याप्तिः । असिद्ध्यादिदेशनाभासा चेयम् ॥ १२ ॥

अस्योत्तरमाह ।—उत्पन्नस्य तथाभावात् घटाद्यात्मकत्वात्, तत्र कारणस्य हेतोः, उपपत्तेः सत्त्वात्, कथं कारणप्रतिषेधः? अयमाशयः,—पक्षे हेत्वभावोऽसिद्धिः, न त्वनुत्पन्ने हेत्वभावः सम्भवति, अधिकरणाभावात्; न हि हेत्वभावमात्रमसिद्धिः, त्वदीयहेतोरपि क्वचिदभावसत्त्वात्; एतेन दृष्टान्तासिद्धिर्व्याख्याता, यदा कदाचिद्धेतु-

प्रागुत्पत्तेः शब्द एव नास्ति, उत्पन्नस्य शब्दभावात् ; शब्दस्य सतः प्रयत्नानन्तरीयकत्वमनित्यकारणमुपपद्यते, कारणोपपत्तेरयुक्तोऽयं दोषः, प्रागुत्पत्तेः कारणाभावादिति ॥ १३ ॥

**सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात् संशयसमः ॥ १४ ॥**

अनित्यः शब्दः प्रयत्नानन्तरीयकत्वात् घटवत्, इत्युक्ते हेतौ संशयेन प्रत्यवतिष्ठते, सति प्रयत्नानन्तरीयकत्वे अस्त्येवास्य नित्येन सामान्येन साधर्म्यमैन्द्रियकत्वम्, अस्ति च घटेनानित्येन, अतो नित्यानित्यसाधर्म्यादनिवृत्तः संशय इति ॥ १४ ॥

अस्योत्तरम्,—

**साधर्म्यात् संशये न संशयो वैधर्म्यादुभयथा वा संशयो(ये)ऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः ॥ १५ ॥**

विशेषाद्वैधर्म्यादवधार्य्यमाणेऽर्थे पुरुष इति न स्थाणुपुरुष-

---

सत्त्वेनैव दृष्टान्तत्वोपपत्तेः ; एवं हेत्वादीनां यदा कदाचित्पक्षे सत्त्वादेव हेत्वादिभावः, न तु सार्वत्रिकी तदपेक्षेति ॥ १३ ॥

इत्यनुत्पत्तिसमप्रकरणम् ।

क्रमप्राप्तं संशयसमं लक्षयति।—नित्यानित्यसाधर्म्यादिति संशयकारणोपलक्षणम् ; तेन समानधर्मदर्शनाऽऽदियत्किञ्चित्संशयकारणबलात् संशयेन प्रत्यवस्थानं संशयसमः ; अधिकन्तु उदाहरणपरम् । तथा हि, शब्दोऽनित्यः कार्य्यत्वाद्घटवदित्युक्ते, सामान्ये श्रोत्वाऽऽदौ दृष्टान्ते घटे ऐन्द्रियकत्वं तुल्यम् ; यथा कार्य्यत्वान्निर्णायकादनित्यत्वं निर्णीयते, तथा ऐन्द्रियकत्वात् संशयकारणादनित्यत्वं सन्दिह्यताम् ; एवं शब्दत्वाऽऽद्यसाधर्म्यदर्शनादपि संशयो बोध्यः ; तथा च हेतुज्ञानेऽप्रामाण्यशङ्काऽऽधानद्वारा साध्यसंशयात् सत्प्रतिपक्षदेशनाभासेयम् ॥ १४ ॥

अस्योत्तरम् ।—साधर्म्यात् साधर्म्यदर्शनात्, संशये आपाद्यमानेऽपि न संशयः,

साधर्म्यात् संशयोऽवकाशं लभते, एवं वैधर्म्याद्विशेषात् प्रयत्नानन्तरीयकत्वादवधार्य्यमाणे शब्दस्यानित्यत्वे नित्यानित्यसाधर्म्यात् संशयोऽवकाशं न लभते, यदि वै लभेत, ततः स्थाणुपुरुषसाधर्म्यानुच्छेदादत्यन्तं संशयः स्यात्, गृह्यमाणे च विशेषे नित्यसाधर्म्यं संशयहेतुरिति नाभ्युपगम्यते, न हि गृह्यमाणे पुरुषस्य विशेषे स्थाणुपुरुषसाधर्म्यं संशयहेतुर्भवति ॥ १५ ॥

**उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसमः ॥१६॥**

उभयेन नित्येन चानित्येन साधर्म्यात् पक्षप्रतिपक्षयोः प्रवृत्तिः प्रक्रिया ; अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद्घटवदित्येकः पक्षं प्रवर्त्तयति, द्वितीयश्च नित्यसाधर्म्यात् प्रतिपक्षं प्रवर्त्तयति, नित्यः शब्दः श्रावणत्वात् शब्दत्ववत् इति। एवञ्च सति प्रयत्नानन्तरीयकत्वादिति हेतुरनित्यसाधर्म्येणोच्यमानो न प्रकरणमतिवर्त्तते, प्रकरणानतिवृत्तेः निर्णयानतिवर्त्तनम् ; समानञ्चैतन्नित्यसाधर्म्येणोच्यमाने हेतौ, तदिदं प्रकरणा-

---

वैधर्म्याद्वैधर्म्यदर्शनात् ; यदि च कार्य्यत्वरूपविशेषदर्शनेऽपि संशयः, तदाऽत्यन्तसंशयप्रसङ्गः संशयानुच्छेदप्रसङ्गः। न च तथाऽभ्युपगन्तुं शक्यमित्याह, नित्यत्वेति।—सामान्यस्य समानधर्मदर्शनस्य, नित्यत्वानभ्युपगमात् नित्यसंशयजनकत्वानभ्युपगमात् ; तथा सति त्वदीयहेतुरपि न परपक्षप्रतिषेधकः स्यादिति भावः। सामान्यस्य गोत्वाऽऽदेः नित्यत्वानभ्युपगमात् नित्यत्वानभ्युपगमप्रसङ्गात्; तत्रापि साधारणधर्मप्रमेयत्वाऽऽदिना संशय एव स्यादिति केचित् ॥ १५ ॥

इति संशयसमप्रकरणम्।

क्रमप्राप्तं प्रकरणसमं लक्षयति :—उभयसाधर्म्यात् अन्वयसहचाराद्व्यतिरेकसहचाराद्वा, प्रक्रिया प्रकर्षेण क्रियासाधनं, विपरीतसाधनमिति फलितार्थः, तत्सिद्धेस्तस्य पूर्वमेव सिद्धेः ; तथा चाधिकबलत्वेनाऽऽरोपितप्रमाणान्तरेण बाधेन

नतिवृत्त्या प्रत्यवस्थानं प्रकरणसमः। समानञ्चैतद्वैधर्म्येऽपि; उभयवैधर्म्यात् प्रक्रियासिद्धेः प्रकरणसम इति ॥ १६ ॥

अस्योत्तरम्.—

प्रतिपक्षात् प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः ॥ १७ ॥

उभयसाधर्म्यात् प्रक्रियासिद्धिं ब्रुवता प्रतिपक्षात् प्रक्रियासिद्धिरुक्ता भवति, यद्युभयसाधर्म्यं, तत्रैकतरः प्रतिपक्ष इति, एवं सत्युपपन्नः प्रतिपक्षो भवति, प्रतिपक्षोपपत्तेरनुपपन्नः प्रतिषेधः, यतः प्रतिपक्षोपपत्तिः प्रतिषेधोपपत्तिश्चेति. विप्रतिषिद्धमिति, तत्त्वानवधारणाच्च प्रक्रियासिद्धिः, विपर्य्यये प्रकरणावसानात्, तत्त्वावधारणे ह्यवसितं प्रकरणं भवतीति ॥ १७ ॥

त्रैकाल्यासिद्धेर्हेतोरहेतुसमः ॥ १८ ॥

हेतुः साधनम्; तत् साध्यात् पूर्वं पश्चात् सह वा भवेत्?

---

प्रत्यवस्थानं प्रकरणसमः; यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते नैतदेव, श्रावणत्वेन नित्यत्वसाधकेन बाधात्। बाधदेशनाभासा चेयम् ॥ १६ ॥

अत्रोत्तरमाह।—प्रतिपक्षाद्विपरीतसाध्यसाधकत्वेनाभिमताच्छ्रावणत्वाऽऽदितः, प्रकरणसिद्धेर्या मदीयसाध्यस्य यः प्रतिषेधः त्वया क्रियते, तस्यानुपपत्तिः; कुतः?—प्रतिपक्षोपपत्तेः त्वत्पक्षापेक्षया प्रतिपक्षस्य मदीयपक्षस्य, उपपत्तेः साधनात्। अयमाशयः,—श्रावणत्वेन पूर्वं नित्यत्वस्य साधनात् यो बाध उच्यते, स नोपपद्यते, पूर्वं साधितस्य बलवत्त्वाभावात्; कदाचित् कृतकत्वेनानित्यत्वस्यापि पूर्वं साधनादिति त्वत्पक्षप्रतिषेधोऽपि स्यात् ॥ १७ ॥

इति प्रकरणसमप्रकरणम्।

क्रमप्राप्तमहेतुसमं लक्षयति।—त्रैकाल्यं कार्य्यकालतत्पूर्वापरकालाः, तेन हेतोरसिद्धेः हेतुत्वासिद्धेः; अयमर्थः,—दण्डाऽऽदिकं घटाऽऽदेनं पूर्ववर्त्तितया कारणम्; तदानीं घटाऽऽदेरभावात् कस्य कारणं स्यात्? अत एव न घटाद्युत्तरकालवर्त्तितयाऽपि

यदि पूर्वं साधनम्, असति साध्ये कस्य साधनम् ? अथ पश्चात्, असति साधने कस्येदं साध्यम् ? अथ युगपत् साध्यसाधने, द्वयोर्विद्यमानयोः किं कस्य साधनम् ? किं कस्य साध्यम् ? इति हेतुना न विशिष्यते ; अहेतुना साधर्म्यात् प्रत्यवस्थानमहेतुसमः ॥ १८ ॥

अस्योत्तरम्,—

**न हेतुतः साध्यसिद्धेस्त्रैकाल्यासिद्धिः ॥ १९ ॥**

न त्रैकाल्यासिद्धिः ; कस्मात् ?—हेतुतः साध्यसिद्धेः । निर्वर्त्तनीयस्य निर्वृत्तिः विज्ञेयस्य विज्ञानम् उभयं कारणतो दृश्यते, सोऽयं महान् प्रत्यक्षविषय उदाहरणमिति । यत्तु खलूक्तम् "असति साध्ये कस्य साधनम्" इति ?—यत्तु निर्वर्त्यते, यच्च विज्ञाप्यते, तस्येति ॥ १९ ॥

**प्रतिषेधानुपपत्तेः प्रतिषेद्धव्याप्रतिषेधः ॥ २० ॥**

पूर्वं पश्चात् युगपद्वा प्रतिषेध इति नोपपद्यते, प्रतिषेधानुपपत्तेः स्थापनाहेतुः सिद्ध इति ॥ २० ॥

---

न वा समानकालवर्त्तितया तुल्यकालवर्त्तिनोः सव्येतरविषाणयोरिवाविनिगमनाऽऽपत्तेः ; तथा च कालसम्बन्धखण्डनेनाहेतुतया प्रत्यवस्थानमहेतुसमः, कारणमात्रखण्डनेन ज्ञप्तिहेतोरपि खण्डनान्न तदसङ्ग्रहः । प्रतिकूलतर्कदेशनाभासा चेयम् ॥ १८ ॥

अत्रोत्तरमाह ।—त्रैकाल्यासिद्धिस्त्रैकाल्येन याऽसिद्धिरुक्ता, सा न ; कुतः ?—हेतुतः साध्यसिद्धेः त्वयाऽप्यभ्युपगमात् ॥ १९ ॥

पूर्ववर्त्तितामात्रेणैव हेतुतासम्भवात्, अन्यथा त्वदीयहेतोरपि साध्यं न सिध्येदित्याह ।—हेतुफलभावखण्डने प्रतिषेधस्याप्यनुपपत्तेः प्रतिषेद्धव्यस्य परकीयहेतोर्न प्रतिषेध इत्यर्थः ॥ २० ॥

इति अहेतुसमप्रकरणम् ।

## अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः ॥२१॥

अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद्घटवदिति स्थापिते पक्षे अर्थापत्त्या प्रतिपक्षं साधयतोऽर्थापत्तिसमः, यदि प्रयत्नानन्तरीयकत्वादनित्यसाधर्म्यादनित्यः शब्द इति, अर्थादापद्यते नित्यसाधर्म्यान्नित्य इति ; अस्ति तु अस्य नित्येन साधर्म्यमस्पर्शत्वमिति ॥ २१ ॥

अस्योत्तरम्.—

## अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेः ॥ २२ ॥

अनुपपाद्य सामर्थ्यमनुक्तमर्थादापद्यत इति ब्रुवतः पक्षहानेरुपपत्तिः, अनुक्तत्वात् अनित्यपक्षसिद्धावर्थादापन्नं नित्यपक्षस्य हानिरिति, अनैकान्तिकत्वाच्चार्थापत्तेः ; उभयपक्षसमा चेयमर्थापत्तिः, यदि नित्यसाधर्म्यादस्पर्शत्वादाकाशवच्च नित्यः शब्दः, अर्थादापन्नमनित्यसाधर्म्यात् प्रयत्नानन्तरीयकत्वादनित्य इति ; न चेयं विपर्य्ययमात्रादेकान्तेनार्थापत्तिः, न खलु वै

---

क्रमप्राप्तमर्थापत्तिसमं लक्षयति।—अर्थापत्तिरर्थापत्त्याभासः ; तथा चार्थापत्त्याभासेन प्रतिपक्षसाधनाय प्रत्यवस्थानमर्थापत्तिसमः ; अयमाशयः,—अर्थापत्तिर्हि उक्तेनानुक्तमाक्षिपति ; यथा शब्दोऽनित्य इत्युक्तेऽर्थादापद्यते ऽन्यत् नित्यम् ; तथा च दृष्टान्तासिद्धिः विरोधश्च। कृतकत्वादनित्य इत्युक्तेऽर्थादापन्नम् अन्यस्माद्धेतोर्बाधो सत्प्रतिपक्षो वा। अनुमानादनित्य इत्युक्ते प्रत्यक्षान्नित्य इति च बाधः, विशेषविधेः शेषनिषेधफलकत्वमित्यभिमानः। सर्वदोषदर्शनाभासा चेयम् ॥ २१ ॥

अत्रोत्तरम्।—किमुक्तेन अनुक्तं यत्किञ्चिद्वार्थादापद्यते ?—उक्तोपपादकं वा ? आद्ये,—त्वत्पक्षहानिरप्यापाद्यता, त्वयाऽनुक्तत्वात् ; अन्त्ये,—अस्या अर्थापत्तेरनैकान्तिकत्वम्, ऐकान्तिकत्वम् एकपक्षसाधकत्वं बलं, तन्नास्ति ; न हि अनित्य इत्यस्योपपादकं

अनित्य भावः घटवदित्यर्थादापद्यते द्वयोराश्रयो घटनाभाव इति ॥ २२ ॥

**एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात् सद्भावोपपत्तेरविशेषसमः ॥ २३ ॥**

एको धर्मः प्रयत्नानन्तरीयकत्वं शब्दघटयोरुपपद्यत इत्यविशेषे उभयोरनित्यत्वे सर्वस्याविशेषः प्रसज्यते ; कथम् ?— सद्भावोपपत्तेः ; एको धर्मः सद्भावः सर्वस्योपपद्यते, सद्भावोपपत्तेः सर्वाविशेषप्रसङ्गात् प्रत्यवस्थानमविशेषसमः ॥ २३ ॥

अस्योत्तरम्,—

**क्वचित्तद्धर्मानुपपत्तेः क्वचिच्चोपपत्तेः प्रतिषेधाभावः ॥ २४ ॥**

यथा साध्यदृष्टान्तयोरेकधर्मस्य प्रयत्नानन्तरीयकत्वस्योप-

---

नित्यत्वमिति ; न हि विशेषविधिमात्रं शेषनिषेधफलकम्, अपि तु सति तात्पर्ये क्वचित्, न हि नीलो घट इत्युक्ते सर्वमन्यदनीलमिति क्वचित् प्रतिपद्यते ॥ २२ ॥

इति अर्थापत्तिसमप्रकरणम् ।

अविशेषसमं लक्षयति ।—एकस्य धर्मस्य कृतकत्वाऽऽदेः, शब्दे घटे चोपपत्तेः सत्त्वात् ; यदि शब्दघटयोरनित्यत्वेनाविशेष उच्यते, तदा सर्वेषामविशेषप्रसङ्गः ; कुतः ?—सद्भावोपपत्तेः (क) सतः सद्भावस्य, ये भावा धर्माः सत्त्वप्रमेयत्वाऽऽदयः, तेषामुपपत्तेः सत्त्वात् ; तथा च सर्वेषामभेदे पदार्थविभागः, सर्वेषामेकजातीयत्वेऽवान्तरजात्युच्छेदः, सर्वेषामनित्यत्वे आत्मादिविलय इत्यादि । तथा च, सद्भावप्रवृत्तिधर्मेणाविशेषाऽऽपादनमविशेषसम इति फलितम् । अत्र चाविशेषसम इति लक्ष्यनिर्देशः, सद्भावोपपत्तेः सर्वाविशेषप्रसङ्गादिति लक्षणं, शेषं व्युत्पादकम् । प्रतिकूलतर्कदेशनाभासा चेयम् ॥ २३ ॥

अस्योत्तरमाह ।—यदसंबद्धस्य हेतोः, धर्मो व्याप्त्यादिः, तस्य क्वचित् कृतकत्वाऽऽदौ,

---

(क) सद्वैधर्म्याभावात् ।

पत्तेरनित्यत्वधर्मान्तरमविशेषः, न एवं सर्वभावानां सद्भावोपपत्तिनिमित्तं धर्मान्तरमस्ति, येनाविशेषः स्यात्; अथ मतम्, अनित्यत्वमेव धर्मान्तरं सद्भावोपपत्तिनिमित्तं भावानां सर्वत्र स्यात्, एवमिदं खलु वै कल्प्यमाने अनित्याः सर्वे भावाः सद्भावोपपत्तेरिति पक्षः प्राप्नोति; तत्र प्रतिज्ञाऽर्थव्यतिरिक्तमन्यदुदाहरणं नास्ति, अनुदाहरणश्च हेतुर्नास्तीति, प्रतिज्ञैकदेशस्य च उदाहरणत्वमनुपपन्नम्; न हि साध्यमुदाहरणं भवति, ततश्च नित्यानित्यभावादनित्यमित्यत्वानुपपत्तिः; तस्मात् सद्भावोपपत्तेः सर्वाविशेषप्रसङ्ग इति निरभिधेयमेतद्वाक्यमिति। सर्वभावानां सद्भावोपपत्तेरनित्यत्वमिति ब्रुवताऽनुज्ञातं शब्दस्यानित्यत्वं, तत्रानुपपन्नः प्रतिषेध इति ॥ २४ ॥

उभयकारणोपपत्तेरुपपत्तिसमः ॥ २५ ॥

यद्यनित्यत्वकारणमुपपद्यते शब्दस्येत्यनित्यः शब्दः, नित्यत्वकारणमप्युपपद्यते अस्यास्पर्शत्वम्, इति नित्यत्वमप्युपपद्यते; उभयस्यानित्यत्वस्य नित्यत्वस्य च कारणोपपत्त्या प्रत्यवस्थानमुपपत्तिसमः ॥ २५ ॥

---

उपपत्तेः सत्त्वात्, क्वचित् सत्त्वाऽऽदौ, अनुपपत्तेः अभावात्, त्वदुक्तस्य प्रतिषेधस्याभावोऽत्रैव इत्यर्थः ॥ २४ ॥

इति अविशेषसमप्रकरणम् ।

उपपत्तिसमं लक्षयति।—उभयं पक्षप्रतिपक्षौ, तयोः कारणस्य प्रमाणस्य, उपपत्तेः सत्त्वात्; तथा च व्याप्तिमपुरस्कृत्य यत्किञ्चिद्धर्मेण परपक्षदृष्टान्तेन स्वपक्षसाधनेन प्रत्यवस्थानम् उपपत्तिसमः; यथा—शब्दोऽनित्यः कृतकत्वादित्युक्ते, यथा त्वत्पक्षेऽनित्यत्वे प्रमाणमस्ति, तथा मत्पक्षेऽपि सप्रमाणकः, त्वत्पक्षमत्पक्षान्यतरत्वात् त्वत्पक्षवत्। तथा च बाधः प्रतिरोधो वा, तद्देशनाभासा चेयम् ॥ २५ ॥

अस्योत्तरम्,—

**उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः ॥ २६ ॥**

"उभयकारणोपपत्तेः" इति ब्रुवता नानित्यत्वकारणोपपत्तेरनित्यत्वं प्रतिषिध्यते, यदि प्रतिषिध्यते, नोभयकारणोपपत्तिः स्यात् ; उभयकारणोपपत्तिवचनादनित्यत्वकारणोपपत्तिरभ्यनुज्ञायते, अभ्यनुज्ञानादनुपपन्नः प्रतिषेधः ; व्याघातात् प्रतिषेध इति चेत् ?— समानो व्याघातः ; एकस्य नित्यत्वानित्यत्वप्रसङ्गं व्याहतं ब्रुवतोक्तः प्रतिषेध इति चेत् ?—स्वपक्षपरपक्षयोः समानो व्याघातः, स च नैकतरस्य साधक इति ॥ २६ ॥

**निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः ॥२७॥**

निर्दिष्टप्रयत्नानन्तरीयकत्वस्यानित्यत्वकारणस्याभावेऽपि वायुनोदनात् वृक्षशाखाभङ्गजस्य शब्दस्यानित्यत्वमुपलभ्यते ; निर्दिष्टस्य साधनस्याभावेऽपि साध्यधर्मोपलब्ध्या प्रत्यवस्थानमुपलब्धिसमः ॥ २७ ॥

---

अथोत्तरमाह ।—अयं त्वदुक्तप्रतिषेधो न सम्भवति ; कुतः ?—मत्पक्षे उपपत्तिकारणस्य मत्पक्षसाधकप्रमाणस्य, त्वयाऽभ्यनुज्ञानात् ; त्वया हि मत्पक्षस्य दृष्टान्तीकरणेन सप्रमाणकत्वमनुज्ञातम्, अतः कथं तत्प्रतिषेधः शक्यते कर्तुम् ? अनुज्ञातस्यापि प्रतिषेधे स्वपक्ष एव किं न प्रतिषिध्यते ? ॥ २६ ॥

इति उपपत्तिसमप्रकरणम् ।

उपलब्धिसमं लक्षयति ।—वादिना निर्दिष्टस्य कारणस्य साधनस्य, अभावेऽपि साध्यस्योपलम्भात् प्रत्यवस्थानमुपलब्धिसम इत्यर्थः ; तथा हि, पर्वतो वह्निमान् धूमादित्यादिकं वह्न्यवधारणार्थमुच्यते, न च तत् सम्भवति, धूमं विना आलोकाऽऽदितोऽपि वह्निसिद्धेः ; तथा च न तस्य साधकत्वमिति प्रतिकूलतर्कः, न वा धूमाद्वह्निमानित्येवावधारणं, द्रव्यत्वादेरपि धूमेन साधनात् ; न वा पर्वत एव वह्निमानित्यादिकम् अवधारयितुं शक्यते, महानसादेरपि वह्निमत्त्वात् ; अन्यथा दृष्टान्तासिद्धिः स्यात् । एवं वह्निशून्यपर्वतस्यापि सत्त्वाद्बाध इत्यादि । तद्देशनाभासा चेयम् ॥ २७ ॥

अस्योत्तरम्,—

**कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः ॥ २८ ॥**

प्रयत्नानन्तरीयकत्वादिति ब्रुवता कारणत उत्पत्तिरभिधीयते, न कार्यस्य कारणनियमः ; यदि च कारणान्तरादप्युपपद्यमानस्य शब्दस्य तदनित्यत्वमुपपद्यते, किमत्र प्रतिषिध्यत इति ? न प्रागुच्चारणात् विद्यमानस्य शब्दस्यानुपलब्धिः ; कस्मात् ?—आवरणाद्यनुपलब्धेः ; यथा विद्यमानस्योदकादेरर्थस्याऽऽवरणादेरनुपलब्धिः ; नैवं शब्दस्याग्रहणकारणेनाऽऽवरणाऽऽदिनाऽनुपलब्धिः, गृह्येत चैतदस्याग्रहणकारणमुदकाऽऽदिवत्, न गृह्यते ; तस्मादुदकाऽऽदिविपरीतः शब्दोऽनुपलभ्यमान इति ॥ २८ ॥

**तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः ॥ २९ ॥**

तेषामावरणाऽऽदीनामनुपलब्धिर्नोपलभ्यते, अनुपलम्भान्ना-

---

उत्तरमाह ।—कारणान्तरात् साधनान्तराद्वाप्रयत्नादितोऽपि, तद्धर्मस्य साध्यस्य, उपपत्तेरनुक्तः प्रतिषेधो न सम्भवति ; अयमाशयः,—न हि वयमव्यभिचारार्थं वह्निमान् धूमादित्यादिकं प्रयुञ्ज्महे, अपि तु वह्निमत्त्वस्य वह्नेः सिद्ध्यर्थम् ; अन्यथा तदुक्तमसाधकतासाधनमपि न स्यात्, असाधकतासाधनान्तरस्यापि सम्भवात् ॥ २८ ॥

इति उपलब्धिसमप्रकरणम् ।

अनुपलब्धिसमं लक्षयति ।—यद्यपि चेयं द्वितीयाध्याये दर्शिता दूषिता च, तथाऽप्यनुपलब्धिसमजातिः एवम्, इति तत्रानुक्तैव नामप्राप्ताऽभिधीयते ; तत्रायं क्रमः,—नैयायिकैस्तावच्छब्दानित्यत्वमेव साध्यते, यदि शब्दो नित्यः स्यात्, उच्चारणात् प्राक् कुतो नोपलभ्यते ? न हि घटाऽऽद्यावरककुड्याऽऽदिवच्छब्दस्याऽऽवरणमस्ति, तदनुपलब्धेरिति । तत्रैवं जातिवादी प्रत्यवतिष्ठते,—यथाऽऽवरणानुपलब्धेरावरणाभावः,

स्तीत्यभावोऽस्याः सिध्यति, अभावसिद्धौ हेत्वभावात् तद्विपरीतमस्तित्वमावरणाऽऽदीनामवधार्य्यते, तद्विपरीतोपपत्तेर्यत् प्रतिज्ञातं,—"न प्रागुच्चारणाद्विद्यमानस्य शब्दस्यानुपलब्धिः" इत्येतन्न सिध्यति ; सोऽयं हेतुरावरणाद्यनुपलब्धेरित्यावरणाऽऽदिषु चाऽऽवरणाद्यनुपलब्धौ च समयाऽनुपलब्ध्या प्रत्यवस्थितोऽनुपलब्धिसमो भवति ॥ २९ ॥

अस्योत्तरम्,—

अनुपलम्भाऽऽत्मकत्वादनुपलब्धेरहेतुः ॥३०॥

आवरणाऽऽद्यनुपलब्धिर्नास्ति, अनुपलम्भात्, इत्यहेतुः ; कस्मात्?—अनुपलम्भाऽऽत्मकत्वादनुपलब्धेः उपलम्भाभावमात्रत्वादनुपलब्धेः ; यदस्ति, तदुपलब्धेर्विषयः, उपलब्ध्या तदस्तीति प्रतिज्ञायते ; यन्नास्ति, तदनुपलब्धेर्विषयः, अनुपलभ्यमानं नास्तीति प्रतिज्ञायते ; सोऽयमावरणाऽऽद्यनुपलब्धेरनुपलम्भाभावोऽनुपलब्धौ स्वविषये प्रवर्त्तमानो न स्वविषयं प्रतिषेधति। अप्रतिषिद्धा चाऽऽवरणाद्यनुपलब्धिर्हेतुत्वाय कल्पते, आवरणा-

---

सिध्यति, तदा आवरणानुपलब्धेरप्यनुपलम्भादावरणानुपलब्धेरप्यभावः सिध्येत् ; तथा चाऽऽवरणानुपलब्धिप्रमाणक आवरणाभावो न स्यात्, अपि त्वावरणोपपत्तिरेव स्यात्, इति शब्दनित्यत्वे नोक्तं बाधकं युक्तम्। नन्वनुपलब्धेरनुपलब्ध्यन्तरानपेक्षत्वात् कथमेवम्? इति चेत्, इत्थम् अनुपलब्धेरनुपलब्ध्यन्तरानपेक्षत्वे स्वयमेव स्वस्मिन्ननुपलब्धिरूपेति वाच्यम् ; तथा च तथैवानुपलब्ध्याऽनुपलब्ध्यलम्भवात् तदभावसिद्धेः स्वाऽऽत्मन्यनुपलब्धिरूपत्वाभावेऽनुपलब्धित्वमेव न स्यात् ; अनुपलब्धेरनुपलब्ध्यन्तरापेक्षणेऽनवस्था स्पष्टैव। इत्येवंरूपेण प्रत्यवस्थानमनुपलब्धिसम इत्यर्थः। प्रतिकूलतर्कदेशनाभासा चेयम् ॥ २९ ॥

अत्रोत्तरमाह।—अनुपलब्धिः स्वात्मन्यनुपलब्धिरिति ; कोऽर्थः?—स्वयमनुपलब्धिरूपेति चेत्, भवत्येव ; स्वविषयेऽप्यनुपलब्धिरिति चेत्, नेदं प्रसक्तम्, अनुपलब्धेरनुपलम्भाऽऽत्मकत्वात् उपलम्भाभावाऽऽत्मकत्वात्, अभावस्य च निर्विषयकत्वात्।

ऽऽदीनि तु विद्यमानत्वादुपलब्धेर्विषयाः, तेषामुपलब्ध्या भवितव्यम्; यत्तानि नोपलभ्यन्ते, तदुपलब्धेः स्वविषयप्रतिपादिकाया अभावादनुपलम्भादनुपलब्धेर्विषयो गम्यते; न सन्त्यावरणाऽऽदीनि शब्दस्याग्रहणकारणानीति अनुपलम्भादनुपलब्धिः सिध्यति, विषयः स तस्येति ॥ ३० ॥

## ज्ञानविकल्पानाञ्च भावाभावसंवेदनादध्यात्मम् ॥ ३१ ॥

अहेतुरिति अनुवर्त्तते। शरीरे शरीरिणां ज्ञानविकल्पानां भावाभावौ संवेदनीयौ,—अस्ति मे संशयज्ञानं, नास्ति मे संशयज्ञानमिति; एवं प्रत्यक्षानुमानाऽऽगमस्मृतिज्ञानेषु सेयमावरणाऽऽद्यनुपलब्धिरुपलब्ध्यभावः स्वसंवेद्यः, नास्ति मे शब्दस्याऽऽवरणाऽऽद्यनुपलब्धिः, इति नोपलभ्यन्ते शब्दस्याग्रहणकारणान्यावरणाऽऽदीनीति। तत्र यदुक्तं,—तदनुपलब्धेरनुपलम्भादभावसिद्धिरिति, एतन्नोपपद्यते ॥ ३१ ॥

---

स्वाऽऽत्मन्यनुपलब्धित्वाभावेऽनुपलब्धित्वमेव वाधमस्याः ? इति चेत्, वात्मनो विरोधः ? न हि घटः स्वविषयो न भवतीति, नायं घटः आवरणाभावः; वाधमनुपलब्धिविषयः ? इति चेत्, क एवमाह ? किन्त्वनुपलब्धिस्वरूपातेन्द्रियग्राह्यत्वादनुपलब्धिग्राह्यत्युपचर्य्यते, अतः "तदनुपलब्धेरनुपलम्भात्" इत्यादिकमहेतुः; अन्यथा त्वत्साधनमपि दोषानुपलब्धेरनुपलम्भात् सदोषमेव स्यादिति ॥ ३० ॥

नन्वनुपलब्धेः स्वस्मिन्ननुपलब्धित्वाभावेऽनुपलब्धिरपि केन सिध्येत् ? अत आह।— अध्यात्मम् आत्मन्यधि, ज्ञानविकल्पानां ज्ञानविशेषाणां, भावाभावयोर्मनसा संवेदनात्; 'घटं साक्षात्करोमि, वह्निमनुमिनोमि, नानुमिनोमि' इत्येवं ज्ञानविशेष-तदभावानां मनसैव सुग्रहत्वादिति भावः ॥ ३१ ॥

इति अनुपलब्धिसमप्रकरणम्।

**साधर्म्यात् तुल्यधर्मोपपत्तेः सर्वानित्यत्व-प्रसङ्गादनित्यसमः ॥ ३२ ॥**

अनित्येन घटेन साधर्म्यादनित्यः शब्द इति ब्रुवतः, अस्ति घटेनानित्येन सर्वभावानां साधर्म्यमिति सर्वस्यानित्यत्वमनिष्टं सम्पद्यते ; सोऽयमनित्यत्वेन प्रत्यवस्थानादनित्यसम इति ॥ ३२ ॥

अस्योत्तरम्,—

**साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्य-साधर्म्याच्च ॥ ३३ ॥**

प्रतिज्ञाऽऽद्यवयवयुक्तं वाक्यं पक्षनिवर्त्तकं प्रतिपक्षलक्षणं प्रतिषेधः, तस्य पक्षेण प्रतिषेध्येन साधर्म्यं प्रतिज्ञाऽऽदियोगः,

---

अनित्यसमं लक्षयति।—यदि दृष्टान्तघटसाधर्म्यात् कृतकत्वात् तेन सह तुल्यधर्मतोपपद्यते, इत्यतः शब्देऽनित्यत्वं साध्यते, तदा सर्वस्यैवानित्यत्वं स्यात्, सत्त्वाऽऽदिरूपसाधर्म्यसम्भवात् ; न चेदमर्थान्तरयुक्तमिति वाच्यं, सर्वस्यानित्यत्वे व्यतिरेकाग्रहादनुमानदूषणे तात्पर्य्यात्, परस्यान्वयव्यतिरेकिण एवानुमानत्वादित्याशयः ; तथा च, व्याप्तिमपुरस्कृत्य यत्किञ्चिद्दृष्टान्तसाधर्म्येण सर्वस्य साध्यवत्त्वाऽऽपादनमनित्यसमा ; साध्यपदादविशेषसमातो व्यवच्छेदः, तत्र सर्वाविशेष एवाऽऽपाद्यते, न तु सर्वस्य साध्यवत्त्वम् । यत्तु अनित्यत्वेन समाऽनित्यसमेति भावप्रधानो निर्देशः, तथा च अन्वर्थलक्ष्यमेव लक्षणमिति, तन्न ; वह्निमान् धूमादित्यादौ महानससाधर्म्यात् सत्त्वात्सर्वस्य वह्निमत्त्वं स्यात्, इत्यस्य जात्यन्तरत्वाऽऽपत्तेः । आचार्य्यास्तु,—"साधर्म्यं वैधर्म्यस्याप्युपलक्षकम् ; यथाऽऽकाशवैधर्म्यात् कृतकत्वाच्छब्दोऽनित्यः, तथाऽऽकाशवैधर्म्यादाकाशभिन्नत्वाऽऽदितः सर्वमेवानित्यं स्यात् ; इत्यत्र लक्षणे यत्किञ्चिद्धर्मेणेत्येव वाच्यम्" इत्याहुः । अत्र च वैधर्म्यस्य विपक्षावृत्तित्वान्न सर्वस्य साध्यवत्त्वाऽऽपादनं, किन्त्वात्माऽऽदीनाम् अनित्यत्वं स्यादिति ; तत्र चार्थान्तरमित्यवधेयम् । प्रतिकूलतर्कदेशनाभासा चेयम् ॥ ३२ ॥

अत्रोत्तरमाह।—यदि यत्किञ्चित्साधर्म्यात् सर्वस्य साध्यवत्त्वमापादयतस्तव साधर्म्यस्यासाधकत्वमभिमतं, तदा त्वत्कृतप्रतिषेधस्याप्यसिद्धिः, तत्रापि प्रतिषेध्य-

तत्र यथानित्यसाधर्म्यादनित्यत्वस्यासिद्धिः, साधर्म्यादसिद्धेः प्रतिषेधस्याप्यसिद्धिः, प्रतिषेध्येन साधर्म्यादिति ॥ ३३ ॥

**दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्मस्य हेतुत्वात्तस्य चोभयथाभावान्नाविशेषः ॥३४॥**

दृष्टान्ते यः खलु धर्मः साध्यसाधनभावेन प्रज्ञायते, स हेतुत्वेनाभिधीयते; स चोभयथा भवति,—केनचित् समानः, कुतश्चिद्विशिष्टः, सामान्यात् साधर्म्यं, विशेषाच्च वैधर्म्यम्; एवं साधर्म्यविशेषो हेतुः, नाविशेषेण साधर्म्यमात्रं वैधर्म्यमात्रं वा; साधर्म्यमात्रं वैधर्म्यमात्रं चाऽऽश्रित्य भवानाह,—"साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः" इति; एतदयुक्तमिति; अविशेषसमप्रतिषेधे च यदुक्तं, तदपि वेदितव्यम् ॥ ३४ ॥

इत्यनित्यसमप्रकरणम् ।

**नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः ॥ ३५ ॥**

अनित्यः शब्द इति प्रतिज्ञायते, तदनित्यत्वं किं शब्दे

---

साधर्म्येण प्रसक्तत्वात्; तथा ह्येवं साध्यते, कृतकत्वं न साधकं, दृष्टान्तसाधर्म्यरूपत्वात् सत्त्वाऽऽदिवत्; अत्र च त्वदीयहेतुस्वप्रतिषेध्येन मदीयहेतुना कृतकत्वेन सत्त्वेन च सह साधर्म्यरूपः, तथा चायमपि न साधकः स्यात् ॥ ३३ ॥

यदि च साधर्म्यमात्रं न साधकम्, अपि तु व्याप्तिसहितमित्यभिमतं, तदा कृतकत्वे तदस्ति, न तु सत्त्व इति विशेष इत्याह।—साध्यसाधनभावेन व्याप्यव्यापकभावेन, दृष्टान्ते प्रज्ञातस्य प्रमितस्य, धर्मस्य कृतकत्वस्य, हेतुत्वात् साधकत्वात्, तस्य हेतुत्वस्य, उभयथा अन्वयेन व्यतिरेकेण च, भावात् मदीयहेतौ सत्त्वात्, सत्त्वाऽऽदिनाऽविशेष इति यदुक्तं, तन्न भवति ॥ ३४ ॥

नित्यसमं लक्षयति।—अनित्यस्य भावः अनित्यत्वं, तस्य नित्यं सर्वकालं, स्वीकारे

नित्यम्? अथानित्यम्? यदि तावत् सदा भवति, धर्मस्य सदाभावाद्धर्मिणोऽपि सदाभाव इति नित्यः शब्द इति; अथ न सर्वदा भवति, अनित्यत्वस्याभावान्नित्यः शब्दः। एवं नित्यत्वेन प्रत्यवस्थानान्नित्यसमः॥ ३५॥

अस्योत्तरम्,—

**प्रतिषेध्ये नित्यमनित्यभावादनित्येऽनित्यत्वोपपत्तेः प्रतिषेधाभावः॥ ३६॥**

प्रतिषेध्ये शब्दे नित्य(त्व)मनित्यत्वस्य भावादित्युच्यमानेऽनुज्ञातं शब्दस्यानित्यत्वम्, अनित्यत्वोपपत्तेश्च नानित्यः शब्द इति प्रतिषेधो नोपपद्यते; अथ नाभ्युपगम्यते नित्य(त्व)मनित्यत्वस्य भावादिति हेतुर्न भवतीति हेत्वभावात् प्रतिषेधानुपपत्तिरिति। उत्पन्नस्य निरोधादभावः शब्दस्यानित्यत्वम्; तत्र परिप्रश्नानुपपत्तिः; सोऽयं प्रश्नः,—तदा नित्यत्वं किं शब्दे सर्वदा भवति? अथ न? इत्यनुपपन्नः; कस्मात्?—उत्पन्नस्य

---

अनित्ये शब्दे, नित्यत्वं स्यादित्यापादनं नित्यसमा; अयमाशयः,—अनित्यत्वस्य नित्यत्वमस्वीकारेऽनित्यत्वाभावदशायां तस्यानित्यत्वम्; न तस्यापि नित्यत्वाऽऽपत्तिः। न हि दण्डाभावदशायां दण्डोत्पत्तिः, अतोऽनित्यत्वस्य नित्यत्वमेव स्वीकार इत्यभ्युपगन्तव्यम्; तथा च शब्दस्यापि नित्यत्वाऽऽपत्तिः, तेन बाधः सत्प्रतिपक्षो वा, तद्देशनाभासा चेयम; एवमनित्यत्वं यदि नित्यं, कथं शब्दस्यानित्यतां कुर्य्यात्? न हि रक्तं महारजनं परस्य नीलतां सम्पादयति; अथानित्यं, तदा तदभावदशायाम् अनित्यत्वं न स्यादित्यादिकमूह्यम्; एतदनुसारेण लक्षणमपि कार्य्यमित्याचार्य्याः। वयन्तु,—अनित्यस्य भावो धर्मः, तस्य नित्यत्वमभ्युपगतेऽनित्यत्वेनाभ्युपगतस्य नित्यत्वं स्यात्; यथा क्षितिः सकर्त्तृका, इत्यत्र अनित्यक्षितेर्धर्मः सकर्त्तृकत्वं त्वया क्षितौ नित्यमुपेयते न वा? न चेत्, तदा साध्याभावादंशतो बाधः; अथ क्षितौ नित्यमेव सकर्त्तृकत्वं, तदा विरुद्धम्; तद्देशनाभासा चेयमिति ब्रूमः॥ ३५॥

अथोत्तरमाह।—प्रतिषेध्ये नत्पक्षे शब्दे, सर्वदा अनित्यभावात् अनित्यत्वात्, अनित्ये

थो निरोधादभावः, शब्दस्य तदनित्यत्वम् ; एवञ्च सत्यधिकरणा-ऽऽधेयविभागो व्याघातान्नास्तीति, नित्यानित्यविरोधाच्च नित्यत्वमनित्यत्वं चैकस्य धर्मिणो धर्मौ विरुध्येते, न सम्भवतः, तत्र यदुक्तं,—नित्यमनित्यत्वस्य भावान्नित्य एव, तदवर्त्तमानार्थमुक्तमिति ॥ ३६॥

प्रयत्नकार्य्यानेकत्वात्कार्य्यसमः ॥ ३७ ॥

प्रयत्नानन्तरीयकत्वादनित्यः शब्द इति ; यस्य प्रयत्नानन्तरमात्मलाभः, तत् खल्वभूत्वा भवति ; यथा घटाऽऽदिकार्य्यम् ; अनित्यमिति च भूत्वा न भवतीत्येतद्विज्ञायते ; एवमवस्थिते प्रयत्नकार्य्यानेकत्वादिति प्रतिषेध उच्यते, प्रयत्नानन्तरमात्मलाभश्च दृष्टो घटाऽऽदीनां, व्यवधानापोहाच्चाभिव्यक्तिर्व्यवहितानां, तत् किं प्रयत्नानन्तरमात्मलाभः शब्दस्य ?—आहोऽभिव्यक्तिः ? इति विशेषो नास्ति। कार्य्याविशेषेण प्रत्यवस्थानं कार्य्यसमः ॥ ३७॥

---

शब्दे, धर्म्मनित्यत्वमुपपद्यते ; न हि सम्भवति अनित्यत्वं नित्यमस्ति, अथ च तन्नित्यमिति व्याघातात् ; न च नित्यमिति सर्व्वकालमित्यर्थः, तथा च शब्दस्यानित्यत्वे कथं सर्व्वकाल-मनित्यत्वसम्बन्धः ? इति वाच्यं, सर्व्वकालमित्यस्य यावत्सत्त्वमित्यर्थात् ; अतः त्वत्कृतः प्रतिषेधो न सम्भवति। मतान्तरे तु,—अनित्यत्वेऽनित्यत्वोपपत्ते र्हेतोस्त्वया यः प्रतिषेधः कृतः, स न सम्भवतीत्यर्थः ॥ ३६ ॥

इति नित्यसमप्रकरणम् ।

कार्य्यसमं लक्षयति।—प्रयत्नकार्य्यस्य प्रयत्नसम्पादनीयस्य, अनेकत्वात् अनेक-विषयत्वात् ; अयमर्थः,—शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वादित्युक्ते, प्रयत्नानन्तरीयकत्वं प्रयत्नकार्य्ये घटाऽऽदौ प्रयत्नानन्तरोपलभ्यमाने कीलकादावपि दृष्टम् ; तत्र द्वितीयं न तज्जन्यत्वसाधकम्, आद्यन्तु असिद्धम् ; तथा च, सामान्यत उक्तहेतोरनभिमतविशेष-निराकरणेन प्रत्यवस्थानं कार्य्यसमा। असिद्धदेशनाभासा चेयम्। अथवा,—प्रयत्न-कार्य्याणां प्रयत्नकर्त्तव्यानां, कर्त्तव्यप्रयत्नानामिति यावत्, तादृशानाम् अनेकविधत्वादुक्ता-न्यस्य व्याघातकमुत्तरं कार्य्यसमा ; तथा चास्या आकृतिगणत्वात् सूत्रानुदर्शितानामपि परिग्रहः, यथा त्वत्पक्षे किञ्चिद्दूषणं भविष्यतीति शङ्का पिशाचीसमा कार्य्यकारण-भावस्योपकारनियतत्वेऽनवस्थेत्यनुपकारसमा इत्यादि ॥ ३७ ॥

अस्योत्तरम्,—

**कार्य्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः ॥ ३८ ॥**

सति कार्य्यान्यत्वे अनुपलब्धिकारणोपपत्तेः प्रयत्नस्याहेतुत्वं शब्दस्याभिव्यक्तौ, यत्र प्रयत्नानन्तरमभिव्यक्तिः, तत्रानुपलब्धिकारणं व्यवधानमुपपद्यते, व्यवधानापोहाच्च प्रयत्नानन्तरभाविनोऽर्थस्योपलब्धिलक्षणाभिव्यक्तिर्भवतीति ; न तु शब्दस्यानुपलब्धिकारणं किञ्चिदुपपद्यते, यस्य प्रयत्नानन्तरमपोहाच्छब्दस्योपलब्धिलक्षणाभिव्यक्तिर्भवतीति ; तस्मादुत्पद्यते शब्दः, नाभिव्यज्यत इति ॥ ३८ ॥

हेतोश्चेदनैकान्तिकत्वमुपपद्यते, अनैकान्तिकत्वादसाधकः स्यात् इति ; यदि चानैकान्तिकत्वादसाधकत्वम्,—

**प्रतिषेधेऽपि समानो दोषः ॥ ३९ ॥**

प्रतिषेधोऽप्यनैकान्तिकः ; किञ्चित् प्रतिषेधति, किञ्चिन्नेति अनैकान्तिकत्वादसाधक इति। अथवा शब्दस्यानित्यत्वपक्षे प्रयत्नानन्तरमुत्पादः, नाभिव्यक्तिरिति विशेषहेत्वभावः ;

---

अस्योत्तरम्।—शब्दस्य कार्य्यान्यत्वेऽकार्य्यत्वे, प्रयत्नस्य कर्तृप्रयत्नस्य, अहेतुत्वम् अकारणत्वम्, इदञ्च तदा स्यात्, यद्यनुपलब्धिकारणमावरणाऽऽदिकमुपपद्येत, न च तच्छब्देऽस्तीत्यर्थः ; आकृतिगणपक्षे तु,—कार्य्याणां जातीनाम्, अन्यत्वे नानाविधत्वे, इदमुत्तरम् ;—प्रयत्नस्य त्वदीयदूषणप्रयत्नस्य, अहेतुत्वम् असाधकतासाधकत्वाभावः, उपलब्धेः कारणस्य प्रमाणस्य निर्दोषवाक्यस्य, या उपपत्तिः निर्दोषवाक्याधीनोपपादनं, तदभावात् तद्वाक्यस्य स्वपक्षव्याघातकत्वादित्यर्थः ॥ ३८ ॥

इति कार्य्यसमप्रकरणम्।

एवं तावज्जातिवादिनं प्रति सर्वत्र सदुत्तरेणैवोद्धारः कार्य्य इत्यभिहितं, तत्र निर्णयविजयफलकत्वं कथायां सम्पद्यते ; असदुत्तरोद्भावने तु बन्ध्ययोः संप्रयोगवन्नाभिमतफलसिद्धिरिति व्युत्पादयितुं कथाभासरूपां षट्पक्षीं शिष्यशिक्षायै प्रदर्शयति।—

नित्यत्वपक्षेऽपि प्रयत्नानन्तरमभिव्यक्तिः, नोत्पाद इति विशेष-हेत्वभावः; सोऽयमुभयपक्षसमो विशेषहेत्वभाव इत्युभयमप्य-नैकान्तिकत्वमिति ॥ ३९ ॥

सर्वत्रैवम् ॥ ४० ॥

सर्वत्र साधर्म्यप्रभृतिषु प्रतिषेधहेतुषु यत्र विशेषो दृश्यते, तत्रोभयोः पक्षयोः समः प्रसज्यत इति ॥ ४० ॥

प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः ॥ ४१ ॥

योऽयं प्रतिषेधेऽपि समानो दोषोऽनैकान्तिकत्वमापाद्यते, सोऽयं प्रतिषेधस्य प्रतिषेधेऽपि समानः; तत्रानित्यः शब्दः प्रयत्नानन्तरीयकत्वादिति साधनवादिनः स्थापना प्रथमः पक्षः; "प्रयत्नकार्य्यानेकत्वात् कार्य्यसमः" इति दूषणवादिनः प्रतिषेधहेतुना द्वितीयः पक्षः, स च प्रतिषेध इत्युच्यते;

---

प्रयत्नानन्तरीयकत्वं न शब्दो नित्यत्वं साधयति, अनैकान्तिकत्वादिति यो दोषः, स त्वत्पक्षेऽपि तुल्यः, प्रयत्नाभिव्यङ्ग्यत्वस्याप्यसाधकत्वात्; अथवा,—अनैकान्तिकत्वाद-साधक इति त्वया प्रतिषेधः कृतः, तत्राप्ययं दोषः समानः, न ह्यनैकान्तिकत्वं सर्वस्यैवासाधकत्वं साधयति, तस्यैवासाधकत्वासाधनत्वात् ॥ ३९ ॥

कथं मतानुज्ञा किं कार्य्यसमायामेव ? नेत्याह।—एवंविधमसदुत्तरं सर्वत्रैव जातौ सम्भवतीत्यर्थः; यथा शब्दोऽनित्यः शब्दत्वादित्यत्र नित्याऽऽकाशसाधर्म्याद-मूर्त्तत्वान्नित्यः स्यात्, इति साधर्म्यसमायाम् आकाशसाधर्म्यान्नित्यत्वे आकाशवच्छब्दे परममहत्त्वं स्यादित्युत्कर्षसमा; एवमन्यत्राप्यूह्यम्। यद्यप्ययमतिदेशः षट्पक्ष्यनन्तरमेव कर्त्तुमुचितः, तथाऽपि विपक्ष्यादिकमपि सूचयितुमवैवोक्तः; कथकानुज्ञत्वबोधफला हि षट्पक्षी, त्रिपक्ष्यादावपि तत्फलकत्वं तुल्यमिति भावः; तर्हि त्रिपक्ष्यामेव मध्यस्थेन पर्य्यनुयोज्योपेक्षणस्योद्भावने कथासमाप्तौ कुतः षट्पक्षी ? इति चेत्, पुंसां स्फुरणवैचित्र्येण तत्सम्भवात् ॥ ४० ॥

तुल्यबलविरोधी विप्रतिषेधः; तथा च प्रतिषेधस्य यो विप्रतिषेधः तत्र, प्रतिषेध-दोषवद्दोष इत्यर्थः; तथा हि, शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वादिति स्थापना-

तथाऽस्य "प्रतिषेधेऽपि समानो दोषः" इति तृतीयः पक्षो विप्रतिषेधः उच्यते ; तस्मिन् प्रतिषेधविप्रतिषेधेऽपि समानो दोषोऽनैकान्तिकत्वं चतुर्थः पक्षः ॥ ४१ ॥

**प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गो मतानुज्ञा ॥ ४२ ॥**

प्रतिषेधं द्वितीयं पक्षं सदोषमभ्युपेत्य तदुद्धारमनुक्त्वाऽनुज्ञाय प्रतिषेधविप्रतिषेधे तृतीये पक्षे समानमनैकान्तिकत्वमिति समानं दूषणं प्रसञ्जयतो दूषणवादिनो मतानुज्ञा प्रसज्यत इति पञ्चमः पक्षः ॥ ४२ ॥

**स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात् समानो दोष इति ॥४३॥**

स्थापनापक्षे प्रयत्नकार्य्यानेकत्वादिति दोषः स्थापनाहेतुवादिनः स्वपक्षलक्षणो भवति ; कस्मात् ?—स्वपक्षसमुत्थत्वात् ; सोऽयं स्वपक्षलक्षणं दोषमपेक्षमाणोऽनुद्धृत्यानुज्ञाय प्रतिषेधेऽपि समानो दोष इत्युपपद्यमानं दोषं परपक्ष उपसंहरति ; इत्थं चाऽनैकान्तिकः प्रतिषेध इति हेतुं निर्दिशति ; तत्र स्वपक्षलक्षणापेक्षयोपपद्यमानदोषोपसंहारे हेतुनिर्देशे च सत्यनेन परपक्षोऽभ्युपगतो भवति ; कथं कृत्वा ?—यः परेण,—

वादिनः प्रथमः पक्षः। "प्रयत्नकार्य्यानेकत्वात् कार्य्यसमः" इति प्रतिवादिनो द्वितीयः पक्षः। प्रतिषेधेऽप्यनैकान्तिकत्वं तुल्यमिति वादिनस्तृतीयः पक्षः। योऽयं विप्रतिषेधः, तत्रापि तथैवानैकान्तिकत्वं तत्समानदोषोद्भावनं वा चतुर्थः पक्षः ॥ ४१ ॥

पञ्चमं पक्षमाह।—प्रतिषेधं द्वितीयं पक्षं सदोषमभ्युपेत्य तत्र मदुक्तं दोषमनुद्धृत्य प्रतिषेधविप्रतिषेधे मदीयपक्षे तृतीये समानं दोषं प्रसञ्जयतस्तव मतानुज्ञानामकं निग्रहस्थानमित्यर्थः ॥ ४२ ॥

षष्ठं पक्षमाह।—स्वपक्षः स्थापनारूपः प्रथमः पक्षः, तं वचीकृत्य प्रवृत्तो

"प्रयत्नकार्य्यानेकत्वात्" इत्यादिनाऽनैकान्तिकदोष उक्तः, तमनुवृत्त्य "प्रतिषेधेऽपि समानो दोषः" इत्याह ; एवं स्थापनां सदोषामभ्युपेत्य प्रतिषेधेऽपि समानं दोषं प्रसञ्जयतः परपक्षाभ्युपगमात् समानो दोषो भवति ; यथा परस्य प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधेऽपि समानो दोषप्रसङ्गो मतानुज्ञा प्रसज्यते, तथाऽस्यापि स्थापनां सदोषामभ्युपेत्य प्रतिषेधेऽपि समानं दोषं प्रसञ्जयतो मतानुज्ञा प्रसज्यत इति ; स खल्वयं षष्ठः पक्षः । तत्र खलु स्थापनाहेतुवादिनः प्रथमतृतीयपञ्चमपक्षाः, प्रतिषेधहेतुवादिनो द्वितीयचतुर्थषष्ठपक्षाः, तेषां साध्वसाधुतायां मीमांस्यमानायां चतुर्थषष्ठयोरविशेषात् पुनरुक्तदोषप्रसङ्गः । चतुर्थपक्षे समानदोषत्वं परस्योच्यते प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोष इति । षष्ठेऽपि परपक्षाभ्युपगमात् समानो दोष इति समानदोषत्वमेवोच्यते, नार्थविशेषः कश्चिदस्ति ; समानस्तृतीयपञ्चमयोः पुनरुक्तदोषप्रसङ्गः । तृतीयपक्षेऽपि प्रतिषेधेऽपि समानो दोष इति समानत्वमभ्युपगम्यते । पञ्चमपक्षेऽपि प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गोऽभ्युपगम्यते, नार्थविशेषः कश्चिदुच्यत इति ; तत्र पञ्चमषष्ठपक्षयोरर्थाविशेषात् पुनरुक्तदोषः, तृतीयचतुर्थयोर्मतानुज्ञा, प्रथमद्वितीययोर्विशेषहेत्वभाव इति ; षट्पक्ष्यामुभयोरसिद्धिः । कदा षट्पक्षी ?— यदा प्रतिषेधेऽपि समानो दोष इत्येवं प्रवर्त्तते, तदोभयोः पक्षयोरसिद्धिः ; यदा तु,—"कार्य्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः" इत्यनेन तृतीयपक्षो युज्यते, तदा विशेष-

द्वितीयपक्षः स्वपक्षलक्षणः, तस्यापेक्षा समादरः, तत्र दोषानुद्भावनमिति फलितार्थः ; तथा च मदीयपक्षे दोषमनुद्भाव्यैव स्वपक्षोपपादनं कर्त्तुं यत्त्वया हेतुर्निर्दिष्टः, "प्रतिषेधेऽपि समानो दोषः" इति वदतः तत्रापि मतानुज्ञा इत्येवेत्यर्थः ; तदेवं षट्-

हेतुवचनात् प्रयत्नानन्तरमात्मलाभः शब्दस्य, नाभिव्यक्तिरिति सिद्धः (छे) प्रथमपक्षः (च) न षट्पक्षी प्रवर्त्तत इति ॥ ४३ ॥

इति वात्स्यायनीये न्यायभाष्ये पञ्चमाध्यायस्याऽऽद्यमाह्निकम्।

## पञ्चमाध्यायस्य द्वितीयमाह्निकम्।

"विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पान्निग्रहस्थानबहुत्वम्" इति सङ्क्षेपेणोक्तं, तदिदानीं विभजनीयम्। निग्रहस्थानानि खलु पराजयवस्तून्यपराधाधिकरणानि प्रायेण प्रतिज्ञाऽऽद्यवयवाऽऽश्रयाणि तत्त्ववादिनमतत्त्ववादिनञ्चाभिसंप्लवन्ते, तेषां विभागः।—

**प्रतिज्ञाहानिः प्रतिज्ञाऽन्तरं प्रतिज्ञाविरोधः प्रतिज्ञासन्न्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्य्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि ॥ १ ॥**

तानीमानि द्वाविंशतिधा विभज्य लक्ष्यन्ते ॥ १ ॥

---

पक्षयोरुभयोरप्ययुक्तवादित्वादर्थासिद्धिः, यदि तु स्थापनावादी जातिवादिनं सदुत्तरेणैव दूषयति, तदा षट्पक्षी न प्रवर्त्तत इति ॥ ४३ ॥

इति कथाभासप्रकरणम्।

इति श्रीविश्वनाथभट्टाचार्य्यकृतायां न्यायसूत्रवृत्तौ पञ्चमाध्यायस्याऽऽद्यमाह्निकम् ॥ १ ॥

अथेदानीं निग्रहस्थानविशेषलक्षणाभिधानं, तदेव चाऽऽह्निकार्थः, सप्त चेह प्रकरणानि, तत्र चाऽऽद्यं प्रतिज्ञाहेत्वन्यतराऽऽश्रित निग्रहस्थानपञ्चकविशेषलक्षणप्रकरणम्, अन्यानि च यथास्थानं वक्ष्यन्ते। तत्र विशेषलक्षणार्थमादौ विभजते।—

**प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञा-हानिः ॥ २ ॥**

साध्यधर्मप्रत्यनीकेन धर्मेण प्रत्यवस्थिते प्रतिदृष्टान्तधर्मं स्वदृष्टान्तेऽभ्यनुजानन् प्रतिज्ञां जहातीति प्रतिज्ञाहानिः; निदर्शनम्,—ऐन्द्रियकत्वादनित्यः शब्दो घटवदिति कृते, अपर आह,—दृष्टमैन्द्रियकत्वं सामान्ये नित्ये, कस्मान्न तथा शब्दे ? इति प्रत्यवस्थिते, इदमाह,—यद्यैन्द्रियकं सामान्यं नित्यं, कामं घटो नित्योऽस्त्विति, स खल्वयं साधकस्य दृष्टान्तस्य नित्यत्वं प्रसञ्जयन् निगमनान्तमेव पक्षं जहाति, पक्षं जहत् प्रतिज्ञां जहातीत्युच्यते, प्रतिज्ञाऽऽश्रयत्वात् पक्षस्येति ॥ २ ॥

---

अत्र यद्यपि, तेन एतानि तु निग्रहस्थानानि, न पुनरप्रज्ञाताऽऽदिनाऽननुभाषणादिकं, न वा झटिति संवरणेन तिरोहिता च वाणीत्यर्थो लभ्यत इति भावः; मन्यस्तु चकारोऽनुक्तसमुच्चये, तेन दृष्टान्ते साधनवैकल्याऽऽदीनां परिग्रहः ॥ १ ॥

तत्र क्रमेण प्रतिज्ञाहान्यादीनां लक्षणेषु वक्तव्येषु प्रथमोद्दिष्टां प्रतिज्ञाहानिं लक्षयति।—प्रतिकूलो दृष्टान्तो यत्र स प्रतिदृष्टान्तः परपक्षः; स्वः स्वीयः दृष्टान्तो यत्र स स्वदृष्टान्तः स्वपक्षः; तथा च स्वपक्षे परपक्षधर्माभ्यनुज्ञा प्रतिज्ञाहानिः, स्वयं विप्रतिपन्नाभिमतपरित्याग इति फलितार्थः। सिद्धान्तस्तु स्वयं विप्रतिपद्य नाभिधीयत इति नापसिद्धान्तसाङ्कर्यम्। सेयं पक्षहेतुदृष्टान्तसाध्यतदन्यहानिभेदात् पञ्चधा भवति; यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते, प्रत्यभिज्ञया बाधितविषयोऽयमित्युक्तरिते, अस्तु तर्हि घट एव पक्ष इति; एवं तत्रैव ऐन्द्रियकत्वादिति हेतोरनैकान्तिकत्वमिति प्रत्युक्ते, अस्तु कृतकत्वादिति हेतुरिति; एवं पर्वतो वह्निमान् धूमात् अयोगोलकवदित्युक्ते, दृष्टान्तः साधनविकल इति प्रत्युक्ते, अस्तु तर्हि महानसवदिति; एवम् अत्रैव सिद्धसाधने च प्रत्युक्ते, अस्तु तर्हि धूमवानिति। अन्यहानिस्तु विशेषणहान्यादिः; यथा तत्रैव नीलधूमादित्युक्ते, व्यर्थविशेषणत्वेन प्रत्युक्ते, अस्तु तर्हि धूमादिति हेतुरित्यादि ॥ २ ॥

**प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात् तदर्थ-निर्देशः प्रतिज्ञाऽन्तरम् ॥ ३ ॥**

प्रतिज्ञातार्थोऽनित्यः शब्दः ऐन्द्रियकत्वात् घटवदित्युक्ते, योऽस्य प्रतिषेधः प्रतिदृष्टान्तेन हेतुव्यभिचारः सामान्यमैन्द्रियकं नित्यमिति, तस्मिंश्च प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पादिति, दृष्टान्तप्रतिदृष्टान्तयोः साधर्म्ययोगे धर्मभेदात् सामान्यमैन्द्रियकं सर्वगतम्, ऐन्द्रियकस्त्वसर्वगतो घट इति धर्मविकल्पात्; तदर्थं निर्देश इति साध्यसिद्ध्यर्थम्; कथम्?—यथा घटोऽसर्वगतः, एवं शब्दोऽप्यसर्वगतो घटवदेवानित्य इति; तत्रानित्यः शब्द इति पूर्वा प्रतिज्ञा, असर्वगत इति द्वितीया प्रतिज्ञा प्रतिज्ञा-ऽन्तरं, तत् कथं निग्रहस्थानमिति? न प्रतिज्ञायाः साधनं प्रतिज्ञाऽन्तरं, किन्तु हेतुदृष्टान्तौ साधनं प्रतिज्ञायाः, तदेतदसाधनोपादानमनर्थकमिति आनर्थक्यान्निग्रह-स्थानमिति ॥ ३ ॥

---

प्रतिज्ञाऽन्तरं लक्षयति।—प्रतिज्ञातस्यार्थस्य प्रतिषेधे कृते तद्दूषणोद्दिधीर्षया धर्मस्य धर्मान्तरस्य, विशिष्टः कल्पो विकल्पः, तस्माद्विशेषणान्तरविशिष्टतया प्रतिज्ञातार्थस्य कथनमिति फलितार्थः; प्रतिषेध इत्यनेन झटिति संवरणे विलम्बेनापि स्वय दूषण विभाव्य विशेषणे न दोष इत्युक्तम्; प्रतिज्ञातार्थस्येत्युपलक्षणं हेत्वतिरिक्तार्थस्येति तत्त्वम्; तेन उदाहरणान्तरमुपनयान्तरञ्च प्रतिज्ञाऽन्तरत्वेन सङ्गृहीतं भवति। इदञ्च पक्षसाध्यविशेषणभेदात् प्रत्येकं द्विविधम्; यथा शब्दो नित्य इत्युक्ते, ध्वनौ बाधेन परेण प्रत्युक्ते, वर्णाऽऽत्मकः शब्दः पक्ष इति प्रतिज्ञाऽन्तरम्; न चेदमर्थान्तरं, प्रकृतोपयोगात्; न चेयं प्रतिज्ञाहानिः, पूर्वोक्तस्यापरित्यागात्; एवं पर्वतो वह्निमान् सुरभिमलिनधूमवत्त्वादित्युक्ते, असमर्थविशेषणत्वेन च परेण प्रत्युक्ते, तृण सुरप्रभव-वह्निमानित्यव; एवं तादृशवह्नौ साध्ये यः सुरभिमलिनधूमवान्, स वह्निमानित्युदाहरणे, न्यूनत्वेन प्रत्युक्ते, स तादृशवह्निमानित्यव; एवमन्यदप्यूह्यम् ॥ ३ ॥

**प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः ॥ ४ ॥**

गुणव्यतिरिक्तं द्रव्यमिति प्रतिज्ञा, रूपाऽऽदितोऽर्थान्तरस्यानुपलब्धेरिति हेतुः ; सोऽयं प्रतिज्ञाहेत्वोर्विरोधः कथम् ? यदि गुणव्यतिरिक्तं द्रव्यं, रूपाऽऽदिभ्योऽर्थान्तरस्यानुपलब्धिर्नोपपद्यते ; अथ रूपाऽऽदिभ्योऽर्थान्तरस्यानुपलब्धिः, गुणव्यतिरिक्तं द्रव्यमिति नोपपद्यते, गुणव्यतिरिक्तञ्च द्रव्यं रूपाऽऽदिभ्यश्चार्थान्तरस्यानुपलब्धिरिति विरुध्यते व्याहन्यते न सम्भवतीति ॥ ४ ॥

**पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासन्न्यासः॥ ५॥**

अनित्यः शब्द ऐन्द्रियकत्वादित्युक्ते, परो ब्रूयात्,—सामान्यमैन्द्रियकं, न च अनित्यम्, एवं शब्दोऽप्यैन्द्रियकः, न चानित्य इति ; एवं प्रतिषिद्धे पक्षे यदि ब्रूयात्,—कः पुनराह अनित्यः शब्द इति, सोऽयं प्रतिज्ञातार्थनिह्नवः प्रतिज्ञासन्न्यास इति ॥ ५ ॥

**अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम् ॥ ६ ॥**

निदर्शनम्,—एकप्रकृतीदं व्यक्तमिति प्रतिज्ञा ; कस्मा-

---

प्रतिज्ञाविरोधं लक्षयति।—अत्र च प्रतिज्ञाहेतुपदे कथाकालीनवाक्यपरे ; तथा च कथायां स्ववचनार्थविरोधः प्रतिज्ञाविरोधः ; यद्यपि काञ्चनमयः पर्वतो वह्निमान्, पर्वतः काञ्चनमयवह्निमान्, ह्रदो वह्निमान्, ह्रदत्वात् ; पर्वतो वह्निमान्, काञ्चनमयधूमादित्यादौ हेत्वाभासान्तरसाङ्कर्य्यम् ; तथाऽप्युपधेयसङ्करेऽपि उपाधेरसाङ्कर्य्यान्न दोषः, न चासङ्कीर्णस्थलाभावः ; पर्वतो वह्निमान् धूमात्, यो यो धूमवान्, स निरग्निरित्युदाहरणे, निरग्निश्चायमित्युपनये च तत्सत्त्वात् ; एवं निगमनेऽपि बोध्यम् ॥ ४ ॥

प्रतिज्ञासन्न्यासं लक्षयति।—पक्षस्य स्वाभिहितस्य, परेण प्रतिषेधे कृते सति तत्परिजिहीर्षया प्रतिज्ञातार्थस्यापनयनमपलाप इत्यर्थः ; यथा शब्दोऽनित्य ऐन्द्रियकत्वादित्युक्ते, सामान्ये व्यभिचारेण परेण प्रत्युक्ते, क एवमाह शब्दोऽनित्य इति ॥ ५ ॥

हेत्वन्तरं लक्षयति।—अत्र च हेतावित्यनेन हेत्ववयवमात्रं न विवक्षितः, अपि

हेतोः ?—एकप्रकृतीनां विकाराणां परिमाणात् ; मृत्पूर्वकाणां शरावाऽऽदीनां दृष्टं परिमाणम् ; यावान् प्रकृतेर्व्यूहो भवति, तावान् विकार इति, दृष्टञ्च प्रतिविकारं परिमाणम्, अस्ति चेदं परिमाणं प्रतिव्यक्तं, तदेकप्रकृतीनां विकाराणां परिमाणात् पश्यामो व्यक्तमिदमेकप्रकृतीति । अस्य व्यभिचारेण प्रत्यवस्थानं, नानाप्रकृतीनामेकप्रकृतीनाञ्च विकाराणां दृष्टं परिमाणमिति ; एवं प्रत्यवस्थित आह,—एकप्रकृतिसमन्वये सति शरावाऽऽदिविकाराणां परिमाणदर्शनात् ; सुखदुःखमोहसमन्वितं हीदं व्यक्तं परिमितं गृह्यते, तत्र प्रकृत्यन्तररूपसमन्वयाभावे सत्येकप्रकृतित्वमिति, तदिदमविशेषोक्ते हेतौ प्रतिषिद्धे विशेषं ब्रुवतो हेत्वन्तरं भवति, सति च हेत्वन्तरभावे पूर्वस्य हेतोरसाधकत्वान्निग्रहस्थानम् ; हेत्वन्तरवचने सति यदि हेत्वर्थनिदर्शनो दृष्टान्त उपादीयते, नेदं व्यक्तमेकप्रकृतिकं भवति, प्रकृत्यन्तरोपादानात् ; अथ नोपादीयते, दृष्टान्ते हेत्वर्थस्यानिदर्शितस्य साधकभावानुपपत्तेरानर्थक्याद्धेतोरनिवृत्तं निग्रहस्थानमिति ॥ ६ ॥

---

तु साधकांशः ; स च हेत्ववयवस्थ उदाहरणादिस्थो वा, अविशेषोक्त इति पूर्वोक्तवत्यर्थः, विशेषमिच्छत इति साभिप्रायम् ; तेन परोक्तदूषणोद्दिधीर्षया तत्रैव हेतौ विशेषणान्तरप्रक्षेपोऽन्यहेतुकरणं वा द्वयमपि हेत्वन्तरम् ; तद् च परोक्तदूषणोद्दिधीर्षया पूर्वोक्तहेतुताऽवच्छेदकातिरिक्तहेतुताऽवच्छेदकावशिष्टवचनं हेत्वन्तरम् ; हेतौ विशेषणदान एव हेत्वन्तरमिति प्राञ्चः ; पूर्वोक्तत्वं हेत्ववयवे उदाहरणाऽऽदौ वा ; यथा शब्दोऽनित्यः बाह्येन्द्रियप्रत्यक्षत्वादित्युक्ते, सामान्येऽनैकान्तिकत्वेन च प्रत्युक्ते, सामान्यवत्त्वे सतीति विशेषणम् ; एवं विशिष्टहेतुमुक्त्वा यत् बाह्येन्द्रियप्रत्यक्षं, तदनित्यमित्युदाहरणे, न्यूनत्वेन प्रत्युक्ते विशिष्टोक्तौ ; एवमुपनयविशेषणेऽपि ॥ ६ ॥

समाप्तं प्रतिज्ञाहेत्वन्तराऽऽश्रितनिग्रहपञ्चकाविशेषलक्षणप्रकरणम् ।

## प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम् ॥ ७ ॥

यथोक्तलक्षणे पक्षप्रतिपक्षपरिग्रहे हेतुतः साध्यसिद्धौ प्रकृतायां ब्रूयात्, नित्यः शब्दोऽस्पर्शत्वादिति हेतुः, हेतुर्नाम हिनोतेर्धातोस्तुनिप्रत्यये कृदन्तपदम्; पदञ्च नामाऽऽख्यातोपसर्गनिपाताः, अभिधेयस्य क्रियाऽन्तरयोगाद्विशिष्यमाणरूपः शब्दो नाम, क्रियाकारकसमुदायः, कारकसङ्ख्याविशिष्टक्रियाकालयोगाभिधाय्याख्यातम्; धात्वर्थमात्रञ्च कालाभिधानविशिष्टम्; योगेष्वर्थादभिद्यमानरूपा निपाताः, उपसृज्यमानाः क्रियाऽवद्योतका उपसर्गा इत्येवमादि, तदर्थान्तरं वेदितव्यमिति ॥ ७ ॥

## वर्णक्रमनिर्देशवन्निरर्थकम् ॥ ८ ॥

यथा नित्यः शब्दः कचटतपाः जबगडदशत्वात् झभञ् घढधषवदिति, एवं प्रकारं निरर्थकम्, अभिधानाभिधेयभावानुपपत्तौ अर्थगतेरभावात् वर्णा एव क्रमेण निर्दिश्यन्त इति ॥ ८ ॥

---

अर्थान्तरं लक्षयति।—प्रकृतात् प्रकृतोपयुक्तात, ल्यब्लोपे पञ्चमी ; तेन प्रकृतोपयुक्तमर्थमुपेक्ष्यासम्बद्धार्थाभिधानम् अर्थान्तरं प्रकृतानाकाङ्क्षिताभिधानमिति फलितार्थः ; यथा शब्दोऽनित्यः कृतकत्वादित्युक्त्वा, शब्दो गुणः, स चाऽऽकाशस्येत्यादि ॥ ७ ॥

निरर्थकं लक्षयति।—वर्णानां क्रमेण निर्देशो जबगड़ेत्यादिप्रयोगः, तत्तुल्यो निर्देशो निरर्थकं निग्रहस्थानम्, अवाचकपदप्रयोगः इति फलितार्थः ; वाचकत्वं शक्त्या निरूढ़लक्षणया शास्त्रपरिभाषया वा बोध्यम् ; समयबन्धव्यतिरेकेणेति विशेषणीयम् ; तेन यत्रापभ्रंशेन विचारः कर्त्तव्य इति समयबन्धः, तत्राऽपभ्रंशे न दोषः, झटिति संवरणे तु न दोष इत्युक्तप्रायम् ; अस्य सम्भवः प्रमादादित्यवधेयम् ॥ ८ ॥

परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् ॥ ९ ॥

यद्वाक्यं परिषदा प्रतिवादिना च (अ) त्रिरभिहितमपि न विज्ञायते, श्लिष्टशब्दमप्रतीतप्रयोगमतिद्रुतोच्चारितमित्येवमादिना कारणेन, तदविज्ञातमविज्ञातार्थमसामर्थ्यसंवरणाय प्रयुक्तमिति निग्रहस्थानम् ॥ ९ ॥

पौर्वापर्य्यायोगादप्रतिसम्बद्धार्थमपार्थकम् ॥ १० ॥

यत्रानेकस्य पदस्य वाक्यस्य वा पौर्वापर्य्येणान्वययोगो नास्तीत्यसम्बन्धार्थकत्वं गृह्यते, तत्समुदायोऽर्थस्यापायादपार्थ-

अविज्ञातार्थं लक्षयति।—त्रिरभिहितं, वादिनेति शेषः; त्रिरभिधानं चानवधानाऽऽदिनाऽबोधनिरासाय; परिषत्प्रतिवाद्यन्यतरेण विज्ञाते तु नाविज्ञातार्थमिति भावः; तथा च त्रिरभिहितार्थविकलव्युत्पन्नपरिषत्प्रतिवादिबोधानुकूलोपस्थित्यजनकवाचकवाक्यप्रयोगोऽविज्ञातार्थमिति; वाचकेत्यनेन निरर्थकापार्थकव्युदासः। अत्र च पराज्ञानाऽऽपादनेन मम जयो भविष्यतीति भ्रमादुक्तिसम्भवः। न च यथाकथञ्चित्परो जेतव्य इत्यज्ञानाऽऽपादनं न्याय्यमेवेति वाच्यम्; तथा सति भङ्गकाले परमदुर्बोधयत्किञ्चिदभिधानेनैव सर्वत्र जयसम्भवात्, एतच्च त्रेधा सम्भवः,—असाधारणतन्त्रमात्रप्रसिद्धम्; यथा पञ्चस्कन्धाऽऽदयो बौद्धानाम्; तत्र रूपाऽऽदयः पञ्चेन्द्रियाणि च रूपस्कन्धः, सविकल्पकं संज्ञास्कन्धः, रागद्वेषाभिनिवेशाः संस्कारस्कन्धः, सुखदुःखे वेदनास्कन्धः, निर्विकल्पकं ज्ञानस्कन्धः। द्वितीयम्—अतिप्रसक्तयोगमनपेक्षितरूढिकम्; यथा कम्बुपतनधृतिहेतुरयं त्रिनयनसमाननामधेयवान् तत्केतुमत्त्वादित्यादि। तृतीयं—श्लिष्टम्; यथा श्वेतो धावतीत्यादि। एवम् अतिद्रुतोच्चारिताऽऽदिकमपीति भाष्यम्। अत्र नाऽऽद्यस्य सम्भवः उभयतन्त्राभिज्ञमध्यस्थे सति, उभयतन्त्राभिज्ञयोरेव विचारसम्भवादिति चेत्? सत्यम्; तथाऽपि यत्र नैयायिकमीमांसकयोर्विचारेऽन्यतरो बौद्धतन्त्राऽऽदिपरिभाषया वदति, तत्र निग्रहस्थानाश्रयः; तत्रापि चेत् यथा कयाचित् परिभाषयोच्यतामिति परः प्रौढ्या वदति, न तत्राऽऽद्यस्योपादानमिति; उत्तरयोस्तु सर्वथैवेति ॥ ९ ॥

अपार्थकं लक्षयति।—पौर्वापर्य्यं कार्य्यकारणभावः, तस्यायोगादसम्भवात्,

(अ) वादिनेति शेषः।

कम् ; यथा दश दाड़िमानि षड़पूपाः कुण्डमजाजिनं पललपिण्डः, अथ रौरुकमेतत् कुमार्य्याः पाय्यं तस्याः पिता अप्रतिशीन इति ॥ १० ॥

**अवयवविपर्य्यासवचनमप्राप्तकालम् ॥ ११ ॥**

प्रतिज्ञाऽऽदीनामवयवानां यथालक्षणमर्थवशात् क्रमः, तत्रावयवविपर्य्यासेन वचनमप्राप्तकालमसम्बन्धार्थकालं निग्रहस्थानमिति ॥ ११ ॥

**हीनमन्यतमेनाप्यवयवेन न्यूनम् ॥ १२ ॥**

प्रतिज्ञाऽऽदीनामवयवानामन्यतमेनाप्यवयवेन हीनं न्यूनं निग्रहस्थानं, साधनाभावे साध्यासिद्धिरिति ॥ १२ ॥

---

शाब्दबोधजनकाऽऽकाङ्क्षाज्ञानाऽऽद्यभावादिति फलितार्थः, अप्रतिसम्बद्धोऽसम्बद्धः, अर्थप्रयोजनं शाब्दबोधरूपं यत्र ; यद्यपि दशदाड़िमानि, षड़पूपाः, कुण्डमजाजिनमित्यादाववान्तरवाक्यादर्थबोधसत्त्वादव्याप्तिरतिव्याप्तिश्च निरर्थके, तथाऽप्यभिमतवाक्यार्थबोधानुकूलाऽऽकाङ्क्षाऽऽदिशून्यबोधजनकपदत्वं तत्, अविज्ञातार्थे तु स्वस्य बोधो भवत्येवेति नातिव्याप्तिः ; उदाहरणन्तु अयोग्यानासन्नानाकाङ्क्षवाक्यम ॥ १० ॥

समाप्तमभिमतवाक्यार्थाप्रतिपादकनिग्रहस्थानचतुष्टयप्रकरणम् ।

अप्राप्तकालं लक्षयति ।—अवयवस्य कथैकदेशस्य, विपर्य्यासो वैपरीत्यम् ; तथा च, समयबन्धविषयीभूतकथाक्रमविपरीतक्रमेणाभिधानं पर्य्यवसन्नम् , तत्रायं क्रमः,—वादिना साधनमुक्त्वा सामान्यतो हेत्वाभासा उद्धरणीया इत्येकः पादः, प्रतिवादिनश्च तत्रोपालम्भो द्वितीयः पादः, प्रतिवादिनः स्वपक्षसाधनं तत्र हेत्वाभासोद्धरणञ्चेति तृतीयः पादः, जयपराजयव्यवस्था चतुर्थः पादः ; एवं प्रतिज्ञाहेत्वादीनां क्रमः,—तत्र सभाक्षोभव्यामोहाऽऽदिना व्यत्यस्ताभिधानमप्राप्तकालमिति ॥ ११ ॥

न्यूनं लक्षयति ।—अवयवेन स्वशास्त्रसिद्धेन, तेन सौगतस्य द्व्यवयवाभिधानेऽपि न न्यूनत्वम् । नन्ववयवहीनत्वम् अवयवत्वावच्छिन्नाभावः ; तथा चाकथनमेव स्यात्, अत आह, अन्यतमेनापीति ।—तथा च यत्किञ्चिदवयवशून्यावयवाभिधानं फलितम् । न चायमपसिद्धान्तः, सिद्धान्तविरुद्धानभ्युपगमात्, अपि तु सभाक्षोभाऽऽदिनाऽनभिधानात् ॥ १२ ॥

**हेतूदाहरणाधिकमधिकम् ॥ १३ ॥**

एकेन कृतत्वादन्यतरस्याऽऽनर्थक्यमिति ; तदेतन्नियमाभ्युपगमे वेदितव्यमिति ॥ १३ ॥

**शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् ॥ १४ ॥**

अन्यत्रानुवादात् शब्दपुनरुक्तमर्थपुनरुक्तं वा ; नित्यः शब्दो नित्यः शब्द इति शब्दपुनरुक्तम्, अर्थपुनरुक्तम्,—अनित्यः शब्दो निरोधधर्मको ध्वान इति ॥ १४ ॥

**अनुवादे त्वपुनरुक्तं शब्दाभ्यासादर्थविशेषोपपत्तेः ॥ १५ ॥**

यथा हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनमिति ॥ १५ ॥

**अर्थादापन्नस्य स्वशब्देन पुनर्वचनम् ॥ १६ ॥**

पुनरुक्तमिति प्रकृतम् । निदर्शनम्,—उत्पत्तिधर्मकत्वाद-

---

आधिकं लक्षयति ।—हेतूदाहरणेत्युपलक्षणं दूषणाद्यधिकमपि बोध्यम् ; तथा च कृतकर्त्तव्यापुनरुक्ताभिधानमिति फलितम् ; अनुवादस्तु न कृतकर्त्तव्यः, साभिप्रायत्वात्, प्रतिज्ञाऽऽधिक्यञ्च पुनरुक्तम् ; धूमादालोकात् महानसवच्चत्वरवदित्यादिकन्तु विना समयबन्धं दाभ्याऽऽदिभ्यमादुक्तमनधिकम् ; यथा महानसं महानसवदिति तु नाधिकं, किन्तु पुनरुक्तम् ॥ १३ ॥

समाप्तं स्वसिद्धान्तानुरूपप्रयोगाऽऽभासनिग्रहस्थानत्रिकप्रकरणम् ।

पुनरुक्तं लक्षयति ।—पुनर्वचनं पुनरुक्तं, तस्य विभागार्थं शब्दार्थयोरिति तेन शब्दपुनरुक्तमर्थपुनरुक्तञ्च लभ्यते । अनुवादेऽतिव्याप्तिवारणायान्यत्रानुवादादिति अनुवादान्यत्वे सतीत्यर्थः । निष्प्रयोजनं पुनरभिधानं हि पुनरुक्तम्, अनुवादस्तु व्याख्यारूपः सप्रयोजनक एवेति भावः ; तथा च समानार्थक-पूर्वाऽऽनुपूर्वीक शब्दप्रयोगः शब्दपुनरुक्तं, समानार्थकभिन्नाऽऽनुपूर्वीक-शब्दस्य निष्प्रयोजनं पुनरभिधानमर्थपुनरुक्तम् ; आद्यं यथा,—घटो घट इति ; द्वितीयं यथा,—घटः कलश इति, एतस्य प्रमादाऽऽदिना सम्भवः ॥ १४ ॥

पुनरुक्तप्रभेदान्तरमाह ।——पुनरुक्तमित्यनुवर्त्तते । यस्मिन्नुक्ते यस्यार्थस्यौत्सर्गिकी

नित्यमित्युक्त्वा अर्थादापन्नस्य योऽभिधायकः शब्दः, तेन स्वशब्देन ब्रूयादनुत्पत्तिधर्मकं नित्यमिति; तच्च पुनरुक्तं वेदितव्यम्। अर्थसम्प्रत्ययार्थे शब्दप्रयोगे प्रतीतः सोऽर्थोऽर्थापत्त्येति ॥ १६ ॥

## विज्ञातस्य परिषदा त्रिरभिहितस्याप्यनुच्चारण-मननुभाषणम् ॥ १७ ॥

विज्ञातस्य वाक्यार्थस्य परिषदा प्रतिवादिना त्रिरभिहितस्य यदप्रत्युच्चारणं, तदननुभाषणं नाम निग्रहस्थानमिति; अप्रत्युच्चारयन् किमाश्रयं परपक्षप्रतिषेधं ब्रूयात्? ॥ १७ ॥

## अविज्ञातञ्चाज्ञानम् ॥ १८ ॥

विज्ञातार्थस्य परिषदा प्रतिवादिना त्रिरभिहितस्य यद-

---

प्रतिपत्तिर्भवति, तस्य तेन रूपेण पुनरभिधानं पुनरुक्तम्; इदमेव च अर्थपुनरुक्तमिति गीयते; यथा वह्निरुष्ण इति पूर्वपदाऽऽक्षिप्तोक्तिरियम्, उष्णो वह्निरिति उत्तरपदाऽऽक्षिप्तोक्तिः; एवं वहिरस्ति गेहे नास्तीति विध्याक्षिप्तोक्तिः, जीवन् गेहे नास्ति वहिरस्तीति निषेधाऽऽक्षिप्तोक्तिः, पुनरुक्तवैविध्यञ्चेदं भाष्याऽऽदिसम्मतम्। अन्ये तु,—"शब्दपुनरुक्तं द्विविधं, तस्यैव शब्दस्य पुनरभिधानं पर्य्यायेणाभिधानम्, अन्यत् पुनरर्थपुनरुक्तम्" इत्याहुः ॥ १६ ॥

अननुभाषणं लक्षयति।—परिषदा विज्ञातस्य विशिष्य बुद्धार्थस्य, वादिना त्रिरभिहितस्य; तथा च, प्रथमवचनेऽननुभाषणे वादिना त्रारब्धं वाक्यमिति दर्शितम्; तथा च त्रिरभिधानेऽपि यदनुभाषणविरोधी व्यापारः, तदननुभाषणं निग्रहस्थानमित्यर्थः। अज्ञान-साङ्कर्य्यनिरासायाज्ञानमनाविष्कुर्वतेति, विक्षेपसाङ्कर्य्य-निरासाय कथामविच्छिन्दतेति च विशेषणीयमित्याचार्य्याः। न चाप्रतिभासाङ्कर्य्यम्, उत्तरप्रतिपत्तावपि सभाक्षोभाऽऽदिनाऽननुभाषणसम्भवात्; तदिदं चतुर्द्धा,—एकदेशानुवादाद्विपरीतानुवादात् केवलदूषणोक्त्या सम्भेन चेति। सर्व्वनामपदेनानुवादात् पञ्चममित्याचार्य्याः। कश्चिदज्ञानाप्रतिभाऽननुभाषणसाङ्कर्य्यं यन्निरोद्धुं शक्यते, तदेवोन्नाव्यम् ॥ १७ ॥

अज्ञानं लक्षयति।—अविज्ञातः। चकारस्य परिषदा विज्ञातस्येत्याद्यनुकर्षणार्थः;

विज्ञानं, तदज्ञानं निग्रहस्थानमिति । अयं खल्वविज्ञाय कस्य प्रतिषेधं ब्रूयादिति ? ॥ १८ ॥

उत्तरस्याप्रतिपत्तिरप्रतिभा ॥ १९ ॥

परपक्षप्रतिषेधः उत्तरं, तत् यदा न प्रतिपद्यते, तदा निगृहीतो भवति ॥ १९ ॥

कार्य्यव्यासङ्गात् कथाविच्छेदो विक्षेपः ॥ २० ॥

यत्र कर्त्तव्यं व्यासज्य कथां व्यवच्छिनत्ति,—इदं मे करणीयं विद्यते, तस्मिन्नवसिते कथयिष्यामि, इति विक्षेपो नाम निग्रहस्थानम् । एकनिग्रहावसानायां कथायां स्वयमेव कथाऽन्तरं प्रतिपद्यत इति ॥ २० ॥

---

तथा च परिषदा विज्ञातस्य वादिना त्रिरभिहितस्याप्यविज्ञानमित्यर्थः । इदञ्च किं वदसि, बुध्यत एव, नेत्यर्थाऽऽविष्करणेन ज्ञातुं शक्यत इति ॥ १८ ॥

अप्रतिभां लक्षयति ।—उत्तरार्हेण परोक्तं बुद्धाऽपि यत्रोत्तरसमये उत्तरं न प्रतिपाद्यते, तत्राप्रतिभा निग्रहस्थानम् ; न चात्राननुभाषणस्याऽऽवश्यकत्वात् तदेव दूषणमस्त्विति वाच्यं, परोक्तानुवादे हि तत् ; यत्र परोक्तमनूद्यापि नोत्तरं प्रतिपद्यते, तत्रासाङ्कर्य्यात् ; श्लोकपाठाद्युन्नेया चेयम् ॥ १९ ॥

विक्षेपं लक्षयति ।—कार्य्यव्यासङ्गात्कार्य्यव्यासङ्गमुद्भाव्येत्यर्थः । ल्यब्लोपे पञ्चमी । कार्य्यव्यासङ्गश्चासम्भवत्कालान्तरकत्वेनाऽऽरोपितः ; तेन तादृशकथाविच्छेदो विक्षेपः ; तेन राजपुरुषाऽऽदिभिराकारणे गृहजनाऽऽदिभिर्वाऽऽवश्यककार्य्यार्थमाकारणे स्वगृहदाहाऽऽदिकं पश्यतो गमने वा शिरोरोगाऽऽदिना प्रतिबन्धे वा न विक्षेपः । ननु कार्य्यव्यासङ्गोद्भावनं कुतः ?—सभाक्षोभाऽऽदिना चेत्, अननुभाषणमेव ; उत्तराप्रतिपत्त्या चेत्, अप्रतिभैवेति चेत्, न ; उत्तरावसराभावात् । वस्तुतस्तूत्तरस्फूर्त्तावपि तद्दूषणसम्भावनया विक्षेपसम्भवात् ; यथा,—"क्षितिः सकर्त्तृका कार्य्यत्वात्" इत्युक्तम् ; अत्राङ्कुरे व्यभिचारस्तावन्मया उद्भाव्यः, तत्र चेदयं पक्षसमत्वं ब्रूयात्, तदा मे किमुत्तरम् ? अतोऽत्र महार्णवलिखितं मया च विचारितं किञ्चित् कार्य्यमुद्भाव्य गृहे गत्वा दृश्यत इत्येवं विक्षेपसम्भवात् ॥ २० ॥

**स्वपक्षदोषाभ्युपगमात् परपक्षदोषप्रसङ्गो मतानुज्ञा ॥ २१ ॥**

यः परेण चोदितं दोषं स्वपक्षेऽभ्युपगम्यानुद्धृत्य वदति,—भवत्पक्षे समान दोष इति; स स्वपक्षे दोषाभ्युपगमात्परपक्षे दोषं प्रसञ्जयन् पर-मतमनुजानातीति मतानुज्ञा नाम निग्रह-स्थानमापद्यत इति ॥ २१ ॥

**निग्रहस्थानप्राप्तस्यानिग्रहः पर्य्यनुयोज्योपेक्षणम् ॥ २२ ॥**

पर्य्यनुयोज्यो नाम निग्रहोपपत्त्या चोदनीयः, तस्योपेक्षणं निग्रहस्थानं प्राप्तोऽसीत्यननुयोगः; एतच्च कस्य पराजयः ? इत्यनुयुक्तया परिषदा वचनीयम्; न खलु निग्रहं प्राप्तः स्वकौपीनं विवृणुयादिति ॥ २२ ॥

**अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनु-योज्यानुयोगः ॥ २३ ॥**

निग्रहस्थानलक्षणस्य मिथ्याऽध्यवसायादनिग्रहस्थाने निग्र-

---

मतानुज्ञां लक्षयति।—दोषाभ्युपगमात् दोषमनुद्धृत्येत्यर्थः, यथा शब्दो नित्यः श्रावणत्वादित्युक्ते, ध्वनावनैकान्तिकत्वेन हेत्वाभासोऽयमित्युक्तौ, शब्दोऽनित्यः कृतकत्वादिति साधिते, ध्वनेरपि पक्षसमत्वान्न दोष इत्युक्तौ, असिद्धत्वात् तवापि हेत्वाभासोऽयमित्युक्तौ, सोऽयं मतानुज्ञया निगृहीतः स्यात्, अप्रतिषिद्धमनुमतं भवतीति स्वपक्षे दोषाभ्युपगमात् ॥ २१ ॥

पर्य्यनुयोज्योपेक्षणं लक्षयति।—निग्रहस्थानं प्राप्तवतोऽनिग्रहः निग्रहस्थानानुद्भावन-मित्यर्थः। यत्र त्वनेकनिग्रहस्थानपाते एकतरोद्भावनं, तत्र न पर्य्यनुयोज्योपेक्षणावसरः, निग्रहस्थानोद्भावनत्वावच्छिन्नाभावस्यैव तत्त्वात्। ननु वादिना कथमिदमुद्भाव्यं, स्वकौपीनविवरणस्यायुक्तत्वादिति चेत् ?—सत्यम्; मध्यस्थेनैवेदमुद्भाव्यं, वादिना च स्वयमुद्भावनेऽप्यदोषः ॥ २२ ॥

निरनुयोज्यानुयोगं लक्षयति।—अवसरे यथार्थनिग्रहस्थानोद्भावनातिरिक्तं यत्, निग्रहस्थानोद्भावनं तदित्यर्थः; एतेनानवसरे निग्रहस्थानोद्भावने एकनिग्रहस्थाने

हीतोऽसीति परं ब्रुवन् निरनुयोज्यानुयोगान्निगृहीतो वेदितव्य इति ॥ २३ ॥

**सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः ॥ २४ ॥**

कस्यचिदर्थस्य तथाभावं प्रतिज्ञाय प्रतिज्ञातार्थविपर्य्ययादनियमात् कथां प्रसञ्जयतोऽपसिद्धान्तो वेदितव्यः ; यथा न सदात्मानं जहाति, न सतो विनाशः, नासदात्मानं लभते, नासदुत्पद्यत इति सिद्धान्तमभ्युपेत्य स्वपक्षं व्यवस्थापयति, एकप्रकृतीदं व्यक्तं, विकाराणामन्वयदर्शनात्, मृदन्वितानां शरावाऽऽदीनां दृष्टमेकप्रकृतिकत्वम् ; तथा चायं व्यक्तभेदः सुखदुःखमोहान्वितो दृश्यते, तस्मात् समन्वयदर्शनात् सुखाऽऽदिभिरेकप्रकृतीदं शरीरमिति ; एवमुक्तवाननुयुज्यते,—अथ प्रकृतिविकार इति कथं लक्षितव्यमिति ? यस्यावस्थितस्य धर्मान्तरनिवृत्तौ धर्मान्तरं प्रवर्त्तते, सा प्रकृतिः ; यच्च धर्मान्तरं प्रवर्त्तते, स विकार इति ; सोऽयं प्रतिज्ञातार्थविपर्य्यासादनियमात्

---

निग्रहस्थानान्तरोद्भावने च नातिव्याप्तिः । सोऽयं चतुर्द्धा,—छलं जातिराभासोऽनवसरग्रहणञ्च ; आभासो व्यभिचारादावसिद्धाद्युद्भावनम्, अनवसरग्रहणञ्चाकाले एवोद्भावनम् ; यथा त्यक्ष्यसि चेत् प्रतिज्ञाहानिः, विशेषयसि चेत् हेत्वन्तरम् ; एवमवसरमतीत्य कथनमपि ; यथा उच्यमानवाक्यस्यापशब्दाऽऽदेः परिसमाप्तौ ; एवमनुक्तग्राह्याज्ञानाद्यननुभाषणावसरेऽनुद्भाव्य मोधाऽऽविष्करणानुभाषणप्रवृत्ते वादिनि तदुद्भावनमित्यादिकमूह्यम् ॥ २३ ॥

अपसिद्धान्तं लक्षयति ।—सिद्धान्तं स्वशास्त्रकाराभ्युपगतमर्थं, स्वीकृत्य अनियमात् तन्नियमप्रच्यवात्, कथाप्रसङ्ग इति ; तथा च, कथायां स्वीकृतसिद्धान्तप्रच्यवोऽपसिद्धान्तः ; तथा च, साङ्ख्यमतेनाहं वदिष्यामीत्यभ्युपेत्याऽऽरब्धायां कथायाम् आविर्भावस्याऽऽविर्भावाभ्युपगमेऽनवस्थेति दूषणोद्धारायाऽऽविर्भावस्यासतः उत्पत्तिं यद्यभ्युपैति, तदाऽपसिद्धान्तः ; यस्त्वेकदेशिमतेन कथामारभते, तस्य शास्त्रकाराभ्युप-

कथां प्रसञ्जयति, प्रतिज्ञातं खल्वनेन नासदाविर्भवति, न सत् तिरोभवतीति, सदसतोश्च तिरोभावाऽऽविर्भावमन्तरेण न कस्यचित् प्रवृत्तिः प्रवृत्त्युपरमश्च भवति, मृदि खल्ववस्थितायां भविष्यति शरावाऽऽदिलक्षणं धर्मान्तरमिति प्रवृत्तिर्भवति, अभूदिति च प्रवृत्त्युपरमः, तदेतन्मृद्धर्माणामपि न स्यात्; एवं प्रत्यवस्थितो यदि सतश्चाऽऽत्महानमसतश्चाऽऽत्मलाभमभ्युपैति, तदस्यापसिद्धान्तो निग्रहस्थानं भवति, अथ नाभ्युपैति, पक्षोऽस्य न सिध्यति ॥२४॥

**हेत्वाभासाश्च यथोक्ताः ॥ २५ ॥**

हेत्वाभासाश्च निग्रहस्थानानि ; किं पुनर्लक्षणान्तरयोगात् हेत्वाभासाः निग्रहस्थानत्वमापन्नाः ; यथा प्रमाणानि प्रमेयत्वम् ? इत्यत आह, यथोक्ता इति।—हेत्वाभासलक्षणेनैव निग्रहस्थानभाव इति । त इमे प्रमाणाऽऽदयः पदार्था उद्दिष्टा लक्षिताः परीक्षिताश्चेति ॥ २५ ॥

इति वात्स्यायनीये न्यायभाष्ये पञ्चमाध्यायस्य द्वितीयाऽऽह्निकम् ।
समाप्तश्चायं पञ्चमोऽध्यायः ॥ ५ ॥

---

शमविरोधे नापसिद्धान्त इति विमोधयितुमभ्युपेत्येत्युक्तम् ; सौगतास्त्वपसिद्धान्तं दूषणं न मन्यन्त इत्यन्यदेतत् ॥ २४ ॥

क्रमप्राप्तहेत्वाभासलक्षणे वक्तव्ये तदकथनबीजमाह ।—च पुनरर्थे, हेत्वाभासाः पुनर्यथा येन रूपेण, पूर्वमुक्ताः, तेनैव रूपेण तेषां निग्रहस्थानत्वमिति, न लक्षणान्तरमपेक्षितमिति । अत्र चकारस्य दृष्टान्ते साधनवैकल्याऽऽदिसमुच्चायकत्वमिति केचित्, तन्न ; यथोक्ता इत्यस्यानन्वयाऽऽपत्तेरिति ॥ २५ ॥

समाप्तं निग्रहस्थानविशेषलक्षणम् ।

समाप्तं पञ्चमाध्यायस्य द्वितीयाऽऽह्निकम् ।

एषा मुनिप्रवरगौतमसूत्रवृत्तिः श्रीविश्वनाथकृतिना सुगमाऽल्पवर्णा ।
श्रीकृष्णचन्द्रचरणाम्बुजचञ्चरीकश्रीमच्छिरोमणिवचःप्रचयैरकारि ॥

इति श्रीमहामहोपाध्यायश्रीविद्यानिवासभट्टाचार्य्याऽऽत्मजश्रीविश्वनाथ-
भट्टाचार्य्यकृतायां न्यायसूत्रवृत्तौ पञ्चमोऽध्यायः ।

समाप्तञ्चेदं शास्त्रम् ।